# संग्रहशिरोमणिः

श्रीमत्सकल विद्या विनोद प्रेरित यशो व्रात पूरिता शान्तराला वाला रधिताब्धि कांश्रि सरसी रुहा द्विलक्ष्मा-
कृति काव्य तन्त्रायनेक विद्याभिज्ञ अयोध्या निकट वर्त्ति नौरही सन्निधि सन्नाहु ग्राम वासि द्विवेदि
वंश वतंस श्री पण्डित सरयू प्रसाद कृतः

यत्र

अनेक ज्योतिष पुराण स्मृति ग्रन्थेभ्य आदाया तीव परिश्रमा दावश्यक कृत्य विषया स्सर्व विद्वज्जनोपका
रयाति सरल तया वर्णिताः सग्रन्थकार महेश दत्ता भ्यां संशोधितः

## लक्ष्मणपुरे

श्रीयुत मुन्शी नवल किशोर नामक पाषाण यन्त्रा लये मुद्रितः ॥

फर्वरी सन् १८७५ ई०

# विज्ञापन

प्रकट हो कि यह संग्रह शिरोमणि नाम पुस्तक जिस को अयोध्या निकट बर्हि नौरही सन्निधि सन्नाइ ग्राम वासी श्री पण्डित सरयू प्रसाद जी सम्पूर्ण विद्या में बृहस्पति के तुल्य हैं उन्हों ने अतीव परिश्रम कर ज्योतिष पुराण स्मृति के अनेक ग्रन्थों को एकत्र करके इस अपूर्व ग्रन्थ को बनाया इस कारण कि वे पण्डित जो इन पुस्तकों को इकट्ठा न करने के कारण इन विषयों को नहीं जान सके और अपनी प्रतिष्ठा के कारण पृच्छकों को कुछ का कुछ बतला देते हैं इस कारण अयन तिथि वार नक्षत्र योग तारा शुभाशुभ वर्ज्य लग्न गोचर विवाह गर्भाधान यात्रा गृह प्रवेश मिश्र तिथि निर्णयादि प्रकरणों के साथ तत्तद्विषयों को अति सुगमता से वर्णन किया है और अधिक इसके बहुधा ग्रन्थों में दो चार प्रसंग वर्णित हैं और इसमें जो आवश्यक कार्यों का विचार चाहिये सब है जैसे उत्तम शकुन स्वप्न परीक्षा हस्त रेखा विचार दि-घटिका तिथि निर्णय आदि ऐसी २ अनेक बातें हैं इसी कारण मुन्शी नवलकिशोर साहब ने अपने छापे खाने २ में छपवाया ॥

# सूचीपत्र

| अथ प्रथम प्रक० | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मङ्गलाचरण | १ | २ | वत्सर स्वामी | ६ | ४ | अधि मास | ८ | ८ | प्रतिपदादिषुनिषिद्ध | २३ | ४ |
| सम्बन्ध | १ | ४ | वत्सर भेद | ६ | ७ | क्षय मास | ८ | ११ | अमायां विशेषयोगः | २३ | ७ |
| प्रयोजन | १ | ५ | अयन विचार | ६ | ९ | अथ द्वितीयप्रभा | ९ | ५ | व्यतीपातयोगः | २३ | ११ |
| विषय | २ | ५ | अयन फल | ६ | ११ | तिथिप्रकरणं | ९ | ५ | अर्द्धोदय महोदयौ | २४ | १ |
| अधिकारी | २ | १० | ऋतवः | ७ | २ | तिथयः | ९ | ५ | गजच्छाया योगः | २४ | ३ |
| शास्त्र प्रशंसा | २ | ५ | ऋतु पतयः | ७ | ३ | तिथि पतयः | ९ | ८ | कपिला षष्ठी | २४ | ४ |
| शास्त्रधारक प्रशं० | २ | ६ | मास ज्ञानं | ७ | ५ | तिथि संज्ञा | ९ | १० | पुनर्व्यतीपातः | २४ | ५ |
| नक्षत्र सूची | २ | ७ | मासानां नामानि | ७ | ६ | नन्दादिषु कृत्यं | १० | १ | गोविन्दद्वादशीयो० | २४ | ७ |
| प्रकरण सूची | ३ | १ | मास संज्ञा | ७ | ९ | सामान्य शुभ निषेधः | १० | ७ | वारुणीमहावारुणी | २४ | १० |
| सम्वत्सर ज्ञान | ३ | ६ | मास भेद | ७ | ११ | दन्तधावने निषिद्धाः | १२ | १ | युगाद्योमन्वाद्यः | २५ | २ |
| षष्टि सम्वत्सर नाम | ३ | १० | भेदानां फलानि | ८ | २ | आमलस्नाने निषिः | १२ | १ | अथ तृतीयाप्रभा | | |
| वत्सर फल | ६ | १ | पक्ष विचार | ८ | ६ | उक्तकार्ये निषिद्धा | १३ | ३ | वार विचारः | २६ | २ |

## सूची पत्र

| | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|---|---|---|---|
| वारकृत्यं | २६ | २ | नक्षत्राणांसंख्या | २४ | १० | योगानांशुभाशुभफलं | ३१ | ६ | भद्राकर्म्माणि | ३४ | ८ |
| वारदोषा दोषौ | २७ | ६ | ध्रुवादिसंज्ञा | २४ | ११ | अथषष्ठीप्रभा | | | भद्रायांदोषापवादः | ३४ | १० |
| तैलाभ्यंगेशुभाशुभं | २७ | १० | नक्षत्रमुखकृत्ये | २५ | ६ | अथ करणज्ञानं | ३१ | ११ | भद्राविषये विशेषः | ३५ | २ |
| तैलाभ्यंगे दोषापवादः | २८ | ३ | पञ्चकं | २५ | ९ | करणांस्वामिनः | ३२ | २ | अथसप्तमीप्रभा | | |
| वारहोरा | २८ | ६ | अन्धादिसंज्ञा | २६ | १० | करणकृत्यं | ३२ | ५ | ताराविचारः | ३५ | १० |
| अथचतुर्थीप्रभा | | | नक्षत्रचारः | २७ | ४ | भद्रायां विशेषः | ३२ | १० | राशयः | ३५ | ११ |
| नक्षत्राणि | २८ | ४ | उदयर्क्षज्ञानं | २७ | ७ | भद्रांगविभागफलौ | ३३ | २ | नक्षत्राणांचरणाः | ३६ | ८ |
| नक्षत्रेशाः | २९ | ६ | गतरात्रिज्ञानं | २७ | १० | भद्रावासः | ३३ | ६ | चंद्रस्यशुभाशुभफलं | ३७ | ६ |
| शुभाशुभनक्षत्राणि | ३० | ६ | दिवारात्रौमुहूर्ताः | २९ | ४ | स्थानफलं | ३३ | ४ | शुक्लपक्षेविशेषः | ३७ | १२ |
| नक्षत्राणांफलं | ३० | ७ | वारपरत्वेनत्याज्यमु॰ | ३१ | १ | वारयोगेनभद्राफलं | ३३ | ११ | तारावलं | ३८ | ७ |
| पुष्यप्रशंसा | ३३ | ८ | अथपञ्चमीप्रभा | | | भद्रायादिमुखं | ३४ | २ | दुष्टतारासुदानं | ३८ | ८ |
| नक्षत्राणांस्वरूपं | २४ | ३ | योगज्ञानं | | | भद्रायांपुच्छं | ३४ | ४ | चन्द्रावस्था | ३० | ११ |

# सूचीपत्र

# सूचीपत्र

| | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|---|---|---|---|
| सिंहस्थे गुरुदोषः | ६३ | ७ | लग्नानि | ६८ | २ | वस्त्रधारणं | ७४ | १ | कौशेयं | ७७ | ४ |
| मकरस्थोऽपि | ६३ | ७ | राशिस्वामिनः | ६८ | ७ | सुभगायाः विशेषः | ७४ | ४ | रोमजं | ७७ | ६ |
| तयोर्दोषापवादः | ६४ | १ | गृहोच्चानि | ६८ | ९ | वारफलं | ७४ | ६ | सतूलकंचुकधा० | ७७ | ७ |
| तीर्थविशेषेऽपि दोषा | | | नीचं | ६८ | ११ | वस्त्राभरणादिधार | | | स्वर्णरजततंतुमय | | |
| पवादः | ६४ | ६ | मूलत्रिकोणं | ६९ | २ | णं | ७४ | ८ | वस्त्रधारणं | ७७ | ८ |
| विशेषेण पञ्चवि० | | | लग्नानां कल्यानि | ६९ | ३ | चूडीचक्रं | ७५ | ६ | वस्त्रनिर्माणं | ७७ | १० |
| फलानि | ६४ | ८ | लग्नभुक्तिप्रमाणं | ७० | ६ | कज्जलादर्शौ | ७५ | १० | कुसुंभादौ वस्त्ररंजनं | ७७ | ११ |
| सिंहस्थे गुरौ दोषाभे | | | षड्वर्गाणि | ७० | १० | नववस्त्रविक्रीतोफलं | ७६ | १ | सूचीकर्म | ७८ | १ |
| दाहोषापवादवाक्यं | ६६ | ७ | तन्वादिभावसंज्ञा | ७२ | ६ | मुहूर्तं विना वस्त्रधारणं | ७६ | १० | वस्त्रक्षालन | ७८ | ३ |
| लुप्तवत्सरविचा० | ६७ | ४ | वर्गोत्तमनवांशः | ७२ | ३ | वस्त्रादिशोधे वारदि० | ७६ | ११ | उपानत्परिधानं | ७८ | ५ |
| तद्दोषहरवाक्यं च | ६७ | ८ | लग्नगृहबलं | ७२ | ५ | कृष्णनीलव | ७७ | ११ | वितानतूलिका | ७८ | ७ |
| | | | | | | दुकूलं | ७७ | ३ | वस्त्रमयगेहनि० | ७८ | ८ |

# सूचीपत्र

| | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मौर्णं | ७८ | ८ | राज्ञां एवं क्षुरकर्म्म | ८२ | ११ | विद्यारम्भः | ८३ | ७ | सन्तचामर सिंहा- | | |
| सुगन्ध भोगः | ७८ | ९ | नखदन्तक्रिया | ८२ | १ | जैनविद्यारम्भः | ८३ | ८ | सनादिः | ८५ | ५ |
| क्षुरारम्भः चक्रं च | ७८ | ११ | क्षौरे विधौ निषेधः | ८२ | २ | लिंगांड छेदनी | ८३ | ९ | अश्वगजारोहणं | ८५ | ७ |
| पादु कांसला स्नौ | ७९ | ९ | क्षौरे शुभ वाक्यं | ८२ | ५ | नष्टतारीषः | ८४ | १ | अश्वचक्रं | ८५ | ९ |
| भूषा धारणं | ७९ | ११ | क्षौरे किंचिद् निषेधः | ८२ | ७ | पारसी | ८४ | ३ | गजकृत्यं | ८६ | ५ |
| रत्न युग्भूषा | ८० | २ | विद्यारम्भः | ८२ | ९ | लिप्यारम्भः | ८४ | ४ | शिविकारोह० | ८६ | ७ |
| पात्र भोजन चक्रं | ८० | ५ | गणितारम्भः | ८३ | २ | रत्न परीक्षा | ८४ | ७ | पल्याणारम्भः | ८६ | ८ |
| श्मश्रु कर्म्म | ८० | ११ | व्याकरणारम्भः | ८३ | ३ | शिल्पकर्म्म | ८४ | ८ | अश्वनिषेधक० | ८६ | ९ |
| क्षुरकृत्ये वार फलं | ८१ | २ | न्यायारम्भः | ८३ | ४ | राजदर्शनं | ८४ | १० | रथकृत्यं | ८६ | १० |
| क्षौरे त्याज्य तिथयः | ८१ | ४ | धर्म्मशास्त्र पुरा- | | | राजसेवा | ८५ | १ | शत्रूणां सन्धिः | ८७ | १ |
| क्षौरे निषिद्धाः | ८१ | ६ | णारम्भः | ८३ | ६ | दासदासी संग्रह | ८५ | २ | नद्यारम्भः | ८७ | २ |
| क्षौरनिषेधापवादः | ८१ | ८ | वैद्यविद्या गारुडी- | | | मुद्रा कृत्यं | ८५ | ३ | मातृकवस्तु भक्ष० | ८७ | ३ |

## सूचीपत्र

| | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|---|---|---|---|
| नवांगनाभोगः | ८७ | ४ | सर्ववस्तुविक्रयः | ८९ | ३ | वृक्षार्थधान्यप्रयो॰ | ९० | ४ | नवान्न चक्रम् | ९२ | ४ |
| | | | अथ गृहक्षेत्रभू- | | | गृहाच्छादनम् | ९० | ६ | कोष्ठादौ धान्य- | | |
| नीतन्तुत्यारम्भः | ८७ | ६ | म्यादीनां क्रयवि- | | | हलप्रवाहः | ९० | ७ | स्थापनम् | ९२ | ६ |
| नर क्रिया | ८७ | ७ | क्रयौ | ८९ | ५ | हलचक्रम् | ९० | ११ | बीजसंग्रहः | ९२ | ९ |
| वृक्षलतारोपः | ८७ | ८ | वाणिज्यम् | ८९ | ६ | बीजोप्तिः | ९१ | १ | तृणरज्जुनिर्धा- | | |
| आराम चक्रम् | ८७ | ८ | निधिद्रव्यादिवृद्धि | | | शस्यारोपणं | ९१ | ५ | न्यबंधः | ९२ | १० |
| नौका वहनम् | ८८ | ३ | संग्रहौ | ८९ | ८ | धान्यच्छेदः | ९१ | ७ | उरवल मूशलौ | ९२ | ११ |
| पशुकर्म रक्षा च | ८८ | ५ | अथ द्रव्यादीनां गु- | | | कणमर्दनम् | ९१ | ८ | चूर्णमर्दनचक्रं | ९३ | २ |
| चरही चक्रम् | ८८ | ८ | प्तस्थाने स्थापनम् | ८९ | ९ | धान्यानयनं | | | सूर्य्य चक्रम् | ९३ | ३ |
| वृक्षमहिष्यादि कृत्यं | ८८ | १० | द्रव्यप्रयोगः | ८९ | ११ | फलपुष्पोत्तारणं च | ९१ | १० | चुल्ही चक्रम् | ९३ | ५ |
| भयदन चारि कृत्यं | ८९ | १ | धान्यविक्रयः | ९० | ३ | अन्नपाकक्रिया | ९१ | ११ | मार्ज्जनी चक्रम् | ९३ | ६ |
| पक्षी कृत्यम् | ८९ | २ | रस संग्रहः | ९० | ४ | नवान्नभोजनम् | ९२ | २ | गोमय पिंड चक्रं | ९३ | ९ |

# सूचीपत्र

# सूचीपत्र

# सूचीपत्र



११

## सूची पत्र

## सूचीपत्र

## सूचीपत्र

## सूची पत्र

## सूचीपत्र

## सूची पत्र

# सूची पत्र

## सूची पत्र

## सूची पत्र

## सूची पत्र

## सूचीपत्र

सूचीपत्रम्

| | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|---|---|---|---|
| युद्धजयलक्षणम् | ३३३ | ८ | अन्येऽप्युत्पाताः | ३४३ | ४ | अन्येऽप्युत्पाताः | ३४६ | ६ | युगानांप्रमाणम् | ३४९ | ५ |
| छायापुरुषप्रकारः | ३३३ | १० | निर्घातस्वरूपम् | ३४३ | ८ | उत्पातदोषापवादः | ३४७ | २ | गतकालिमानं | ३४९ | ८ |
| स्वप्नदर्शनम् | ३३५ | ८ | उल्कालक्षणम् | ३४४ | २ | उत्पातानामुपसंहारः | ३४७ | ४ | धर्म्मानयनम् | ३४९ | १० |
| शुभफलदाःस्वप्नाः | ३३४ | ११ | दिग्दाहफलम् | ३४५ | ५ | दुष्टोत्पाताः | ३४७ | ८ | व्ययापनयनार्थं | | |
| अशुभस्वप्नाः--- | ३३६ | ८ | भूकंपफलम् | ३४४ | ८ | महर्षिकांडम् | ३४७ | ८ | ध्रुवांकाः | ३५० | २ |
| स्वप्नफलदाव्यवस्था | ३३८ | ५ | रजोवृष्टिः | ३४५ | १ | वर्षराजादिविचारः | ३४७ | ८ | शकात्शुभिक्षज्ञा | | |
| दुःस्वप्नशांतिः | ३३८ | ६ | गंधर्वनगरलक्ष | | | विंशोंकापनयनम् | ३४८ | १ | नम्------ | ३५० | ५ |
| सद्योत्पाताः | ३३८ | १० | णम्------ | ३४५ | ५ | शुभाद्यानयनम् | ३४८ | ४ | संवत्सरात्शुभि | | |
| उत्पातानांसंग्रहः | ३४० | १ | एषामुत्पातानां | | | उत्पलानयनम् | ३४८ | ७ | क्षज्ञानम्-- | ३५० | ७ |
| उत्पातज्ञानायच- | | | फलसमयः--- | ३४५ | ७ | फलभाद्यानयनं | ३४८ | १० | अपरःप्रकारः | ३५१ | १० |
| त्रिविधमंडलानि- | ३४० | ३ | वृष्टिविकृतिः-- | ३४५ | ८ | पुनःफलभाद्या- | ३४९ | १ | राजादीनांफलं | ३५१ | १ |
| केतवः---- | ३४० | ६ | पशीमृगादिवि- | ३४६ | २ | उद्विग्नादि--- | ३४९ | ५ | दीपमालायांनष्ट | | |

## सूची पत्र

| | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|---|---|---|---|
| योग फलम् | ३५१ | ५ | प्रतिराशौ ग्रहोदय | | | समर्घमहर्घौ संक्रां | | | द्यादू स्थिः | ३६२ | १ |
| ज्येष्ठ प्रतिपदादियोग | ३५१ | ८ | फलं ------ | ३५६ | २ | तितः ------ | ३६० | २ | अपरंदगर्भज्ञानं | ३६२ | ५ |
| आषाढ द्वितीयादियोग | ३५१ | १० | नक्षत्रस्थ ग्रहान्म | | | रसादी पत्रपुष्पफ- | | | वृष्टि ज्ञानंच -- | ३६२ | ५ |
| शनिचार फलम् | ३५२ | १ | हर्घ ज्ञानं -- | ३५६ | ७ | लाद्यैः ----- | ३६० | ७ | अपरक्रमः -- | ३६२ | ७ |
| कूर्म्म चक्रे शने ज्ञाना | | | एकमासे पंचवार | | | धान्यनिःपत्तिज्ञा | | | ज्येष्ठमुलाद्य- | | |
| य ------ | ३५२ | ४ | फलं ------ | ३५८ | ८ | नम् ------ | ३६० | ११ | स्यादिदिनचतु- | | |
| ग्रहचारवशात् महर्घो | | | चंद्रास्त गोन्नात फ- | | | इति समर्घ ज्ञानम् | ३६१ | १ | ष्टयेवायु फलम् | ३६२ | ११ |
| दिः ------ | ३५२ | ७ | लम् ------ | | | अथ वृष्टि ज्ञानम् | ३६१ | १ | स्वात्यादिचतुष्टये | | |
| आषाढी पूर्णी विचारः | ३५३ | ५ | प्रतिमासं संक्रांति | | | मेघगर्भ विचारः- | ३६१ | ५ | श्रावणादावना | | |
| प्रतिमासे दर्श फलम् | ३५४ | ५ | तो महर्घ --- | ३५८ | ४ | गर्भलक्षणम् - | ३६१ | ८ | वृष्टिः --- | ३६३ | २ |
| सर्ववस्तूनां महर्घ | | | ग्रैष्म शारद धान्य | | | गर्भहिना दृष्टि ज्ञानं | ३६१ | ९ | आषाढ शुक्ल द्वि | | |
| ज्ञानं ------ | ३५५ | १० | निःपत्तिः --- | ३५९ | ७ | प्रकारांतरेण गर्भा | | | तीयादिनचतुष्ट | | |

# सूचीपत्र

| | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|---|---|---|---|
| विधिलक्षणम् | ३८१ | ८ | हरिनक्तम् —— | ३८९ | ८ | प्रतिमापूजनीया | ३९५ | ४ | सूतकादौनिर्णयः | ३९९ | १ |
| स्मृतिलक्षणम् | ३८२ | ११ | नक्षत्रव्रतनिर्णयः | ३९० | २ | व्रतेनिषेधः | ३९५ | ६ | रजोऽधिकारे | ४०० | ४ |
| निवृत्तधर्म्मः | ३८३ | १ | अयाचितव्रतनि- | | | व्रतेप्रशस्तम् | ३९५ | ९ | व्रतकर्तृघाते | | |
| तिथयः | ३८२ | ४ | र्णयः ——— | ३९० | ८ | गृहीतव्रतत्यागेदो- | | | निधिः ——— | ४०० | ६ |
| सर्व्वेन्द्रियहिंसास्व- | | | व्रतपरिभाषातत्रा- | | | षः ——— | ३९६ | ५ | काम्येप्रतिनिधि- | | |
| रूपं ——— | ३८३ | ४ | धिकारिणः —— | ३९१ | ८ | अशक्तविषये — | ३९८ | ७ | निषेधः | ४०१ | ३ |
| वेधनिर्णयः —— | ३८३ | ६ | स्त्रीणांव्रतेऽधि- | | | शक्तविषये —— | ३९६ | १० | व्रतसन्निपातेनि- | | |
| घटीनिर्णयः —— | ३८३ | ७ | कारः ——— | ३९२ | ४ | उपवासाशक्तौ | ३९६ | ११ | र्णयः ——— | ४०१ | ७ |
| एकभक्तव्रतनिर्ण- | | | स्त्रीकर्त्तृकेऽपिका- | | | स्त्रीव्रतेविशेषः | ३९७ | ७ | वृत्तिपरिभाषा | ४०३ | २ |
| यः ——— | ३८४ | ७ | र्य्यता व्रतेसंक- | | | विधवाव्रतेतु | ३९७ | ११ | विद्धातिथिनि- | | |
| नक्तव्रतनिर्णयः | ३८७ | २ | ल्पः ——— | ३९४ | ९ | व्रतध्यानि | ३९८ | २ | र्णयः ——— | ४०३ | २ |
| सौरनक्तम् —— | ३८९ | २ | व्रतकर्तुर्नियमाः | ३९४ | ६ | व्रतधर्म्माः | ३९८ | ११ | क्षयवृद्धिभ्यां | | |

२८

| | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|---|---|---|---|
| पूज्यता माह | ४०४ | २ | चैत्रशुक्लद्वितीया | ४०८ | ५ | चैत्रशुक्लचतुर्थी | ४१५ | १ | षष्ठीनिर्णयः | ४१९ | ७ |
| अथप्रतिपन्निर्णयः | ४०४ | ६ | श्रावणशुक्लद्वितीया | ४०९ | ७ | ज्येष्ठशुक्लचतुर्थी | ४१५ | ३ | आषाढशुक्लषष्ठी | ४१९ | ११ |
| चैत्रशुक्लप्रतिपत्सं | | | कार्तिकशुक्लद्वितीया | ४०९ | १० | श्रावणशुक्लचतुर्थी | ४१५ | ५ | भाद्रशुक्लषष्ठी | ४२० | ६ |
| संतारंभः — — — | ४०५ | ६ | तृतीयानिर्णयः | ४१० | ११ | भाद्रशुक्लचतुर्थी | | | हलषष्ठी | ४२१ | १ |
| चैत्रशुक्लप्रतिपदि | | | चैत्रशुक्लतृतीया | ४११ | ७ | चंद्रदर्शननिषिद्ध | ४१५ | ८ | आश्विनशुक्लषष्ठी | ४२१ | १ |
| वत्सरारंभः | ४०५ | ११ | वैशाखशुक्लाक्ष- | | | माघशुक्लचतुर्थी | ४१६ | १० | कार्तिकशुक्लषष्ठी | ४२१ | ५ |
| ज्येष्ठशुक्लप्रतिप- | | | यतृतीया — — | ४११ | ८ | अथ पंचमी — — | ४१७ | ५ | मार्गशीर्षशुक्लषष्ठी | ४२१ | ९ |
| द्दिदशाहरारंभः — | ४०६ | ३ | ज्येष्ठशुक्लतृतीया | ४१२ | ५ | चैत्रशुक्लपंचमी | ४१७ | ७ | अथ सप्तमी | ४२२ | १ |
| आश्विनशुक्लप्रति | | | भाद्रशुक्लतृतीया | | | श्रावणशुक्लपंचमी | ४१७ | ११ | चैत्रशुक्लसप्तमी | | |
| पदिनवरात्रारंभः | ४०६ | ४ | हरितालिका | ४१४ | १ | भाद्रशुक्लपंचमी | ४१८ | ४ | सूर्यपूजा | ४२२ | ७ |
| कार्तिकशुक्लप्रतिप | | | माघशुक्लतृतीया | ४१४ | ८ | आश्विनशुक्लपंचमी | ४१८ | १० | वैशाखशुक्लसप्त | | |
| न्नू द्वितीयानिर्णयः | ४०८ | ४ | अथचतुर्थी — | ४१४ | १० | माघशुक्लपंचमी | ४१९ | ३ | म्यांगंगापूजा | ४२२ | ९ |

२५

३०

| | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पंक्ति | | पृष्ठ | पं. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| चैत्रशुक्लद्वादशी | ४६३ | १० | चैत्रशुक्लचतुर्दशी | ४६९ | १० | वैशाखपूर्णिमा | ४७८ | ३ | अथामावास्यानिर्णयः | ४८८ | ७ |
| आषाढशुक्लद्वादशी | ४६३ | ११ | वैशाखशुक्लचतुर्दशी | ४७० | ११ | ज्येष्ठपूर्णिमा — | ४७८ | ६ | ज्येष्ठमावास्यां वटसावित्री | ४८८ | १० |
| श्रावणशुक्लद्वादशी | ४६६ | ५ | ज्येष्ठशुक्लचतुर्दशी | ४७१ | २ | आषाढपूर्णिमा | ४७८ | ९ | भाद्रमावास्यां कुशग्रहः | ४९० | २ |
| भाद्रशुक्लद्वादशी | ४६६ | ६ | भाद्रशुक्लचतुर्दशी | ४७१ | ४ | श्रावणीपूर्णिमा | ४७९ | ८ | कार्तिक्यमावास्यादीपदानं | ४९१ | ४ |
| कार्तिकद्वादशी | ४६६ | ७ | कार्तिककृष्णचतुर्दशी | ४७२ | ४ | उपाकर्म — — — | ४७९ | १० | माघी अमावास्या | ४९१ | ११ |
| माघकृष्णद्वादशी | ४६६ | ९ | कार्तिकशुक्लचतुर्दशी | ४७४ | ५ | भाद्रीपूर्णा — — | ४८२ | ५ | अर्धोदयमहोदययोगः | ४९३ | ४ |
| अथ त्रयोदशीनि-<br>र्णयः — — — — | ४६७ | ७ | मार्गशुक्लचतुर्दशी | ४७४ | ८ | आश्विनपूर्णा — | ४८३ | ८ | अथाधिकमासनिर्णयः | ४९४ | ६ |
| चैत्रशुक्लत्रयोदशी | ४६७ | ११ | माघकृष्णचतुर्दशी | ४७४ | ९ | कार्तिकीपूर्णा — | ४८३ | ३ | मलमासे कर्तव्यनिर्णयः | ४९५ | ५ |
| भाद्रकृष्णत्रयोदशी | ४६८ | १० | फाल्गुनकृष्णचतुर्दशी | | | मार्गशीर्षीपूर्णा — | ४८४ | ११ | ग्रहणनिर्णयः | ४९७ | ९ |
| कार्तिकशुक्लत्रयोदशी | ४६९ | २ | शिवरात्रिपारणविषये | ४७५ | ९ | पौषीपूर्णा — — | ४८५ | ४ | ग्रहणयोगविशेषः | ४९८ | २ |
| अथ चतुर्दशी — — | ४६९ | ८ | अथ पूर्णिमानिर्णयः | ४७७ | ६ | माघीपूर्णा — — | ४८५ | ५ | इति श्रीसंस्कृति | | |
| | | | चैत्रपूर्णिमा — — | ४७७ | ८ | फाल्गुनीपूर्णिमा होला | ४८५ | ११ | [illegible] — | ४९८ | ११ |

॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ ॐ गुरु चरण कमलेभ्यो नमः ॥ अथ संग्रह शिरोमणि प्रारंभः ॥ श्रीवाणीं श्वेत वर्णाभां वाग्दान चतुरां शिवाम् ॥ गणेशं सहितां वंदे वन्दनीय पदां बुजाम् ॥ १ ॥ श्रीज्योतिषं सुभास्वंतं जगद्धेतुं जगन्मयम् ॥ तंनौमि नमनीयांघ्रिं गुरु मूर्त्तिं दिवाकरम् ॥ २ ॥ अस्य शास्त्रस्य संबंधो वेदांग मिति धातृतः ॥ तस्माज्जगद्धिता येदं ब्रह्मणा निर्म्मितं पुरा ॥ ३ ॥ ग्रहणं ग्रह संक्रांति यज्ञाध्ययन कर्म्मणाम् ॥ प्रयोजनं अतो ह्याह क्रियाणां काल निर्णयः ॥ ४ ॥ सिद्धांत संहिता होरा रूपस्कंध त्रयात्मकम् ॥ वेदस्य निर्म्मलं चक्षु ज्योतिः शास्त्र मकल्मषम् ॥ ५ ॥ विनैतदखिलं कर्म्म श्रौतं स्मार्त्तं न सिद्ध्यति ॥ अत एव हि जैरेतदध्येतव्यं प्रयत्नतः ॥ ६ ॥ वेदाहि यज्ञार्थ मभिप्रवृत्ताः कालानु पूर्वा विहिता श्च यज्ञाः ॥ तस्मादिदं काल विधान शास्त्रं यो ज्योतिषं वेद स वेद यज्ञान् ॥ ७ ॥ यथा शिखा मयूराणां नागानां मणयो यथा ॥ तद्वद्वेदांग शास्त्राणां ज्योतिषं मूर्द्धनि स्थितम् ॥ ८ ॥ विप्राह वै ब्राह्मण माजगाम गोपाय मा शेवधिष्टेहमस्मि १

सं.शि० अमृय काया नृज वेहिताय न मांक्षूया अवीर्य्य वती यथा स्याम् ॥ ९॥ नैत द्देयं दुर्विनीता
२ य जातु ज्ञानं गुप्तं तद्धि सम्यक् फलाय ॥ अस्थाने हि स्थाप्य मानैव वाचां देवी कोपान्नि
र्द्दहेत्त चिराय ॥ १० ॥ स्नेहा ल्लोभाच्च मोहाच्च यो विप्रो ऽज्ञान तो ऽपि वा ॥ शूद्राणांमुप-
देशंतु दद्यात्स नरकम्ब्रजेत् ॥ ११ ॥ एवं विधस्य श्रुति नेत्र शास्त्र स्वरूप भर्त्तुः खलु द-
र्शनं वे ॥ निहन्त्य घोरं कलुषं जनानां षड्ब्दजं धर्म्म सुखास्य दंस्यात् ॥ १२ ॥ दश
दिन कृत पापं हन्ति सिद्धान्त वेत्ता त्रि दिन जनित दोषं तन्त्र वैशिष्ट एव ॥ करण भ-
गण वेत्ता हंत्य होरात्र दोषं जनयति ब्वन संह स्तत्र नक्षत्र सूची ॥ १३ ॥ अवि दित्वैव
य पश्यास्त्रं दैव ज्ञ त्वं प्रपद्यते ॥ सपंक्ति दूषकः पापो ज्ञेयो नक्षत्र सूचकः ॥ १४ ॥
तिथ्युत्पत्तिं न जानाति ग्रहाणां नैव साधनम् ॥ पर वाक्येन वर्त्तन्ते ते वै नक्षत्र सूच-
काः ॥ १५ ॥ नक्षत्र सूचको द्दिष्ट मुप वासं करोति यः ॥ सव्रजत्यंधता मिस्रं सा-
र्द्ध मृक्ष विडं विना ॥ १६ ॥ नक्षत्र जीविनं पापं भिषजं शुल्क जीविनम् ॥ तादृशौ २

राणि का दीक्ष वाङ्मात्रेणापि नार्चयेत् ॥ १७॥ दैव ज्ञैश्शास्त्र तत्वज्ञैर्मुहूर्तो ऽन्विष्यते यदि ॥ समुहूर्तः समन्वेष्यो नान्यैर्न्नक्षत्र सूचकैः ॥ १८ ॥ ज्योतिश्चक्रे तु लोकस्य सर्वस्योक्तं शुभाशुभम् ॥ ज्योतिर्ज्ञानं तु योवेद सयाति परमां गतिम् ॥ १९ ॥ शुभ क्षण क्रियारम्भ जनिता पर्व सम्भवाः ॥ सम्पद स्सर्व लोकानां ज्योतिस्तत्र प्रयोजनम् ॥ २० ॥ सुपरीक्षितं विलग्नं धर्म्मार्थ सुखाय दंपत्योः ॥ अपरीक्षितं विलग्नं नहि देयं पंडितेन दैव विदा ॥ २१ ॥ स्वभावा देव कालोयं शुभाशुभ समन्वितः ॥ अनादि निधन स्सर्वो न निर्दोषो न निर्गुणः ॥ २२ ॥ तस्मान्निर्दोष कालार्थे मुहूर्त्त मधि गच्छताम् ॥ काल ष्वशुभो गुणैर्युक्तो बलवद्धि ष्शुभ प्रदः ॥ २३ ॥ वशिष्ट गर्गा गिरसा मत्र्या दीनाम्मतं तथा ॥ रैभ्य कश्यप रामाणाम्भरद्वाज बराहयोः ॥ २४ ॥ गणेश श्रीपति मतं ज्ञात्वा सिद्धांत सम्भवम् ॥ वाल बोधाय क्रियते मुहूर्त्तानां शिरोमणिः ॥ २५ ॥ दिवे दिवं प्राक्हार भानुना प्रिव दोमया ३

यथा शास्त्रं च सरयूप्रसादे नैष सङ्ग्रहः ॥ २६ ॥ अतो मासस्य च तिथेः वारनक्षत्रयो स्तथा ॥ योगस्य करणाख्यस्य ताराया श्च यथा क्रमात् ॥ २७ ॥ शुभा शुभस्य त्याज्यस्य मुहूर्त्तानां तथैव च ॥ संक्रांते गोचरस्यैव संस्कारो द्वाह्वयो स्तथा ॥ २८ ॥ वधू प्रवेश न स्या न्न्या धान राज्या भिषेकयोः ॥ यात्रा या श्चैव वास्तो श्च प्रवेशस्य प्रतिष्ठिते ॥ २९ ॥ मिश्राणां च तिथीनां च निर्णयं च यथार्थतः ॥ सर्वं प्रकरणा-न्यत्र तत्व संख्या न्य नुक्रमात् ॥ ३० ॥ अथ कलौ गत्वेन संवत्सराय नर्तु मासादीनां ज्ञानम् आदौ संवत्सरपरि ज्ञानम् ॥ शाकेन्द्र काला र्क युतः कृत्वा शून्यरसैर्हृतः ॥ शेषाः संवत्सरा ज्ञेयाः प्रभवाद्याबुधैः क्रमात् ॥ ३१ ॥ स एव पंचाग्नि कुभिर्युतः स्या द्विक्रमस्य हि ॥ रेवाया उत्तरे तीरे संवन्ना म्नाति विश्रुतः ॥ ३२ ॥ अथ संवत्सर नामानि प्रभवो १ विभवः २ शुक्लः ३ प्रमोदो ऽथ ४ प्रजापतिः ५ अंगिराः ६ श्रीमुखो ७ भावो ८ युवा ९ धाता १० तथेश्वरः ११ ॥ ३३ ॥ बहुधान्यः १२

प्रमाथीच २३ विक्रमो २४ वृषभस्तथा २५ चित्रभानुः २६ सुभानुश्च २७ तार-
णः २८ पार्थिवो २९ व्ययः ३० ॥ ३४ ॥ ब्रह्मणो विंशति स्तत्र सृष्टिरेव प्रजा
पतेः॥ सर्वजित १ सर्वधारीच २ विरोधी ३ विकृति स्तथा ४ ॥ ३५ ॥ खरो ५ न
न्दन नामाच ६ विजयश्च ७ जय स्तथा ८ मन्मथो ९ दुर्मुखश्च १० ह्यान्यो हे-
मलंबं ११ विलंबको १२ ॥ ३६ ॥ विकारी १३ सर्वरी चान्यः १४ प्लवश्च १५ शु-
भकृत्तथा १६ शोभनश्च १७ तथा क्रोधी १८ विश्वावसु १९ भवो परः २० ॥
३७ ॥ विष्णो रेतेच विंशत्या पालना तत्र जायते प्लवंगः १ कीलकः २ सौम्यः ३
तथा साधारणो परः ४ ॥ ३८ ॥ विरोधकृत्समाख्यातः ५ परिधावी ६ प्रमादि
७ ॥ ३९ ॥ आनंदो ८ राक्षसश्चाथ ९ नलश्च १० पिंगलस्तथा ११ कालः १२ सिद्धार्थ
१३ रौद्रोच १४ दुर्मति १५ दुंदुभिस्तथा १६ ॥ ४० ॥ अपरो रुधिरोद्गारी १७ रक्ताक्ष
१८ क्रोधन १९ स्तथा क्षय २० कुहत्सर ह्यान्यो रुद्रस्या मीच विंशतिः ॥ ४१ ॥ वत्सराबहि

राख्याता नाम तुल्य फल प्रदाः ॥ ४१ ॥ अथ संवत्सराणां फलम् ॥ प्रभवा द्विघ्नं
कृत्वा त्रिभि र्न्यूनं चकार येत् ॥ सप्त भिस्तु हरे द्भागं शेषं ज्ञेयं शुभा ऽशुभम् ॥ ४२ ॥
एकं चत्वारि दुर्भिक्षं पंच द्वाभ्यां सुभिक्षकम् ॥ त्रिषट्केतु समं ज्ञेयं शून्ये पीडा नसंशयः
॥ ४३ ॥ अथ संवत्सराणां स्वामिनः ॥ युगं भवेद्वत्सर पंच केन युगानि च द्वादश
वर्ष संख्या ॥ भवंति तेषा मधि देवता श्च क्रमेण वक्ष्यामि मुनि प्रणीताः ॥ ४४ ॥
विष्णु जीवः शक्रो दहन स्त्वथ अहि र्बुध्न्यः पितरः ॥ विश्वे देवा श्चन्द्र ज्वलनौ नास
त्य नामा नौ च भगः ॥ ४५ ॥ अथ संवत्सराणां भेदाः ॥ संवत्सरः प्रथम कः परिवत्स
रो न्य स्तस्मादि डान्वि दि त पूर्व पदा द्वदेयुः ॥ एवं युगेषु सकलेषु तदीय नाथा वन्हा
र्क शीतगु विरंचि शिवाः क्रमेण ॥ ४६ ॥ अयायन विचारः ॥ शिशिर पूर्व मृतु त्रय मुत्तरं
ह्ययन माहु रह श्च तदा परम् ॥ भवति दक्षिण मन्य कृतु त्रयं निगदि तार जनी म
रुतां हिसा ॥ ४७ ॥ अयायन फलम् ॥ गृह प्रवेश त्रि दश प्रतिष्ठा विवाह चौल

व्रत बन्ध दीक्षाः॥ सौम्यायने कर्म शुभ म्विधेयं यद्गर्हितं तत्खलु दक्षिणेच ॥ ४८ ॥
अथर्तवः ॥ मृगादि राशि द्वय भानु भोगात् षड् र्तवस्स्युः शिशिरो वसंतः॥ ग्रीष्म
श्च वर्षाच शरच्च तद्वद् हेमंत नामा कथित श्च षष्ठः ॥ ४९॥ अथर्तु पतयः ॥ मारुतो
ऽग्नि श्च स्वर्गेशो विश्वे देवाः प्रजापतिः सौम्यश्च षट् ऋतूनां हि पतयः परिकी
र्त्तिताः ॥ ५० ॥ अथ मास परिज्ञानं ॥ पूर्व राशिं परित्यज्य उत्तरां याति भास्करः
॥ साराशिः संक्रमाख्या स्यान्मासस्त्वयन हायने ॥ ५१॥ अथ मासानां नामानि
॥ मास श्चैत्रो ऽथ वैशाखो ज्येष्ठ आषाढ संज्ञकः ॥ ततस्तु श्रावणो भाद्रपदो ऽ
थाश्विन संज्ञकः ॥ ५२ ॥ कार्त्तिको मार्ग शीर्षश्च पौषो माघो ऽथ फाल्गुनः ॥
अथ मासानां संज्ञाः ॥ मधु स्तथा माधव संज्ञक श्च शुक्रः शुचि श्चाथ नभो न-
भस्यः ॥ तथेष ऊर्ज श्च सहा सहस्य स्तप स्तपस्य श्च यथा क्रमेण ॥ ५३॥ अथ
मास श्चतुर्विधः ॥ चांद्रः सौरः सावनिकः नाक्षत्रेति दर्शावधिं मास मुशंति

चांद्रं सौरं तथा भास्कर राशि भोगात् त्रिंश द्दिनं सावन सद्म मार्या नाक्षत्र मिं-
दो र्भ गणा श्रयाच्च ॥ ५४ ॥ मासानां फलम् ॥ सौरे कार्य्यं विवाहादि गृह चारा
दिकं तथा ॥ व्रत यज्ञादिकं चांद्रे मासे परि रणयः क्वचित् ॥ ५५ ॥ चांद्रस्तु द्विविधो मा
सो दर्शान्तः पूर्णिमांतिमः ॥ देवार्थे पौर्णिमास्यंतः दर्शांतः पितृ कर्म्मणि ॥ ५६ ॥
सावने गर्भ कृच्छादि नक्षत्रे मेघ गर्भनम् ॥ प्रोक्त कार्य्येत्विमे मासा विज्ञेयाः कोविदै
स्सदा ॥ ५७ ॥ अथ पक्ष विचारः ॥ पूर्वा परं मास दलं द्वि पक्षौ पूर्वा परौ तौ सितनील संज्ञौ
॥ पूर्वस्तु देवस्त्व परश्च पैत्र्यः केचित्तु कृष्णे सित पंचनीतः ॥ ५८ ॥ आदौ शुक्लः भवक्ष
यः केचित्कृष्णोपि मास के ॥ अथ अधिक मास ॥ शाके, बाण कौरं कै के विर हिते नंदेंदु भि-
भाजिते ॥ शेषे वह्नि मधौ च माधव शिवे ज्येष्ठेऽ वरे चाष्टके ॥ आषाढे नृपतो नभश्च
शर के भाद्रे च विश्वा सके नेत्रे चाश्विन केऽधि मास मुदितं शेषेऽन्य के स्यान्नहि ॥
अथ क्षय मासः ॥ ६० ॥ असंक्रांति मासोधि मासः स्फुटं स्याद्द्वि संक्रांति मासः क्षया

स्य: कदाचित् ॥ क्षय: कार्तिकादि त्रये नान्यत: स्यात्तदा वर्ष मध्येऽधि मासद्वयंच ॥ ६१
॥ गतोऽब्ध्यद्रिनंदैर्मिते शाककाले तिथीशैर्भविष्यत् यथां गांकसूर्यै: ॥ गजाद्र्यग्निभू
मिस्तथा प्रायशोऽयं कुवेदेंदु वर्षै: क्वचिद्गोकुभिश्च ॥ ६२ ॥ द्विवेदि कुल संभूत सरयू कृ
त संग्रहे ॥ शिशो मशो समाप्तेषा प्रथमेयं प्रभा शुभा ॥ ६३ ॥ इति श्री संग्रह शिरोमणौ प्र
यनादि प्रकथनम्प्रथम प्रभा ॥ १ ॥ अथ तिथि प्रकरणम् ॥ प्रति पच्च द्वितीया च तृतीया
तदनंतरम् ॥ चतुर्थी पंचमी षष्ठी सप्तमी चाष्टमी तत: ॥ १ ॥ नवमी दशमी चैवैकादशी द्वा
दशी तत: ॥ त्रयोदशी ततो ज्ञेया तत: प्रोक्ता चतुर्दशी ॥ २ ॥ पौर्णिमा शुक्ल पक्षेतु कृष्ण
पक्षे त्वमास्मृता ॥ अथ तिथि पतय: ॥ तिथीशा वह्नि कौ गौरी गणेशोऽहि र्गुहो रवि: ॥ ३
॥ शिवो दुर्गांत को विश्वे हरि: काम: शिव: शशी ॥ अमावास्यातिथे रीशा: पितर: परि
कीर्तिता: ॥ ४ ॥ नन्दा भद्रा जया रिक्ता पूर्णाश्च प्रति पन्मुखा: ॥ षष्ठ्याद्याश्च क्रमाद्द्वेया
स्तथैवैकादशी मुखा: ॥ ५ ॥ असन्मध्यं शुभं शुक्ले तिथीनां पंचकं क्रमात् ॥ कृष्णपक्षे

शुभं नष्टं नेष्टं ज्ञेयं शुभे सदा ॥ ६ ॥ अथ नंदादिषु कृत्यम् ॥ गीतं नृत्यं तथा क्षत्रं चित्रोत्सव
गृहादिकं ॥ वस्त्रालंकार शिल्पादि नन्दा स्वेत च्छुभं स्मृतम् ॥ ७ ॥ विवाहो वन यात्रा च
भूषा शिल्प कलादि कम् ॥ राजा प्रवेश कृत्यं च भद्रा तिथिषु सिद्धि दम् ॥ ८ ॥ सैन्य
संग्राम शस्त्रादि यात्रोत्सव गृहादिकम् ॥ भैषज्यं चैव वाणिज्यं सिद्धे सर्वं जया सुच ॥
९ ॥ शत्रूणां वध बंधादि विष शस्त्राग्नि योजनम् ॥ कर्तव्यं तत्र रिक्तायां नैव सन्मं
गलं क्वचित् ॥ १० ॥ व्रत बंध विवाहादि यात्रा राजाभिषेचनम् ॥ शांतिकं पौष्टिकं
कर्म्म सिद्धे पूर्णा स्व मां विना ॥ ११ ॥ विवाहो वन यात्रा च प्रतिष्ठा वास्तु कर्म्म च ॥
कुर्य्यात् चौलादिकं कृष्णे शुक्ले प्रति पत्तिथौ ॥ १२ ॥ राज्य कार्य्यं विवाहादि मंगलं
वास्तु भूषणं ॥ व्रत बंधं प्रतिष्ठा च द्वितीयायां तिथौ स्मृताः ॥ १३ ॥ अन्न प्राशन
संगीत विद्या शी मंत शिल्प कं ॥ द्वितीया प्रोक्त मखिलं तृतीयायां प्रशस्यते ॥ १४ ॥
शत्रूणां वध बंधादि विष शस्त्रादि योजनं ॥ कर्तव्यं तच्चतुर्थ्यां तु नैव सन्मंगलं क्वचित्

॥ १५ ॥ शुभ कर्म्माणि सर्वाणि स्थिरराशि च चराणि च ॥ ऋण दानं विनायांति सुसि-
द्धिं पंचमी तिथौ ॥ १६ ॥ दंत काष्टांग म भ्यंगे त्यक्त्वा थो शिल्प कर्म च ॥ रणे वास्तुवि
भूषाद्यं षष्ठ्यां सिद्ध्यति मंगलम् ॥ १७ ॥ राज कृत्यं विवाहादि संगीतं वस्त्र भूषणम् ॥
यात्रा प्रवेश संग्रामाःसिध्येच्च सप्तमी तिथौ ॥ १८ ॥ नृत्यं स्त्रीरत्न भूषादि संग्रामः श-
स्त्र धारणम् ॥ वास्तु शिल्पादिकं कार्य्यं मष्टम्यां सिद्धि माप्नुयात् ॥ १९ ॥ विग्रहः
कल हो मूल मद्य मा खेट कस्तथा ॥ विषाग्नि शस्त्र कृत्यं च नवम्यां सिद्धि माप्नुयात्
॥ २० ॥ विवाहादि शुभं सर्वं भूषा यात्रा प्रवेशनम् ॥ गजाश्व नृप कार्य्याणि सिद्ध्य-
न्ति दशमी तिथौ ॥ २१ ॥ व्रत बंधो विवाहादि रणशिल्पं सुरोत्सवः ॥ गमा गमौ वि-
भूषादि रेका दश्यां प्रशस्यते ॥ २२ ॥ चरस्थिराणि कार्य्याणि विवाह व्रत बंधनम्
॥ द्वादश्यां तत्र कुर्वीत तैलं यात्रा दिकं त्यजेत् ॥ २३ ॥ यात्रा प्रवेश संग्राम वस्त्र भू-
ण मंगलम् ॥ व्रत बंधं विनान्यत्र शुभा शुक्ल त्रयोदशी ॥ २४ ॥ विष बंधाग्नि शस्त्रा

णा मकुर्य्याद्गृह कर्म्मच ॥ चतुर्दश्यां शुभं कर्म्म क्षौरं यात्रां च वर्ज्जयेत् ॥ २५ ॥ मां-
गल्यं भूषणं शिल्पं प्रतिष्ठायज्ञ कर्म्म च ॥ संग्रामो गृह कृत्यं च पौर्णमास्यां प्रशस्यते
॥ २६ ॥ अमाया ध्यानं महादानं पितृ यात्रादिकं च यत् ॥ प्रोक्तं कर्म्म प्रकर्त्तव्यं स्वधेना-
न्या शुभा क्रिया ॥ २७ ॥ इति तिथीनां कृत्यम् ॥ सामान्यत श्शुभा स्तिथयः ॥ द्वितीया पं-
चमी चैव तृतीया सप्तमी तथा ॥ दशम्येकादशी कृष्णा प्रति पच्च त्रयोदशी ॥ २८ ॥ पू-
र्णिमा स्तिथयो ह्येताः सर्वे कार्य्ये शुभा वराः ॥ अन्यास्तु तिथयो नेष्टाः प्रोक्त कृत्येषु शु-
भा मताः ॥ २९ ॥ कृष्णा चतुर्दशी शुक्ला प्रति पद्दर्श संज्ञका ॥ एताः शुभेषु कार्य्ये-
षु वर्ज्जनीयाः प्रयत्नतः ॥ ३० ॥ चतुर्थी ४ रस ६ वस्व ८ क ९ द्वादशी १२ शक्र १४
संमिताः ॥ तिथयः पक्षरं भ्राख्या स्त्याज्या स्सर्वेषु कर्म्मसु ॥ ३१ ॥ एतास्तु वसु ८ नंदे
न्द्र १४ तत्व २४ दिक् १० शर ५ संमिताः ॥ हे यास्स्युरादि माना ड्यः क्रमा च्छेषास्तु
शोभनाः ॥ ३२ ॥ अथ दंत धावने निषिद्धाः ॥ अमायां च तथा षष्ठ्या मेकादश्यां रवेर्दिने

प्रति पद्यु दिते ऽर्के च न कुर्य्याद्दंत धावनम् ॥ ३३ ॥ आमलक स्नाने निषेधः ॥ दशमी सप्तमी दर्शे द्वितीया नवमी दिने ॥ त्रयो दश्यां तथा नैव स्नाया दामलकै र्न्नरः ॥ ३४ ॥ अथोक्त कार्ये निषिद्धाः ॥ क्षौरे चतुर्दशी चैव षष्ठी तैले पले ऽष्टमी ॥ दर्शे स्त्री सेवने जह्या ज्जसी क्षेही घे जी वितम् ॥ ३५ ॥ अथ प्रति पदादिषु निषिद्धाः ॥ त्येजे त्प्रति पदाद्यासु कूष्मांडं वृहती फलम् ॥ लवनं मूल कं चैव पनसं तैल सेवनम् ॥ ३६ ॥ धात्री फलं नारि केलं फलतुंव्याः पटोलकम् ॥ निः पावान्नं मसूरं च वृंताकं माक्षिकं क्रमात् ॥ ३७ ॥ अमायां सुरतं चैव पूर्णिमायां दुरोदरम् ॥ अमायां विशेष योग माहा परार्के शानातपः ॥ ३८ ॥ अमावास्यां भवेद्वारे यदा भूमि सुतस्य वै ॥ जाह्नवी स्नान मात्रेण गो सहस्र फलं लभेत् ॥ ३९ ॥ अमावासोम वारेण रवि वारेण सप्तमी ॥ चतुर्थी भौम वारेण विषुवत्स दृशं फलम् ॥ सिनी वाली कुहूर्वापि यदि सोम दिने भवेत् ॥ ४० ॥ गो सहस्र फलं दद्यात्स्नानं चेन्मौनि ना कृतम् ॥ अत्रैवामायां यद्यमा रवि वारेण व्यती व्यती पात योगः ॥ श्रवणाश्वि धनिष्ठार्द्रा नाग दैवत मस्तकैः ॥ यद्यमा रवि वारेण व्यती



हस्त चंद्र सिनी वाली नष्ट चन्द्रा कुहू स्मृता ॥ ३ श्लेषा मृगशिरा १

पातः सउच्यते ॥ ४१ ॥ अथार्द्धोदय योगः ॥ माघे मासि रवौ दर्शे व्यती पाते श्रवान्विते ॥ अर्द्धो-
दया भिधो योगः सूर्य्य पर्व शताधिकः ॥ ४२ ॥ अथ शुक्लो दिवा योगः किंचिन्मूलं सहोद-
यः ॥ अथ गजछाया ॥ पितृ पक्षे त्रयोदश्यां हस्ते ऽर्के ऽब्जे मघां गते ॥ गजच्छाया भिधो यो-
गः श्राद्धे ऽक्षय्य फल प्रदः ॥ ४३ ॥ अथ कपिला षष्ठी ॥ आश्विने कृष्ण पक्षेच षष्ठ्यां भौमो-
ऽथ रोहिणी ॥ व्यती पात स्तदा षष्ठी कपिला नंत पुण्य दा ॥ ४४ ॥ अथ व्यती पातः ॥
पंचा नन स्थौ गुरु भूमि पुत्रौ मेषे रविस्स्याद्यदि शुक्ल पक्षे ॥ पाशाभि धाना करभेण युक्ता
तिथिर्व्यती पात इतीह योगः ॥ ४५ ॥ अथ गोविंद द्वादशी योगः ॥ यदा चापे जीवो भवति घ-
ट राशौ दिन मणि स्तथा तारा नाथ स्त्व भवन गतः ॥ फाल्गुन शितेऽयदार्के द्वादश्या म-
दिति भयुतः शोभन युत स्तदा गोविंदाख्य हरि दिव सम्स्मिन्भुवितले ॥ ४६ ॥ अ-
थ वारुणी योगः ॥ वारुणेन समायुक्ता मधौ कृष्णा त्रयो दशी गंगायां यदि लभ्येत सूर्य्य
ग्रह शतै स्समा ॥ ४७ ॥ शनि वार समा युक्ता सा महा वारुणी स्मृता ॥ शुभ योग समा

युक्ता श्रानी प्रात भिषा यदि ॥ ४८ ॥ महा महेति विख्याता त्रिकोटि कुल मुद्धरेत् ॥ अ-
थ प्रसंगा द्युगादि मन्वादि तिथयः ॥ नवमी कार्त्तिके शुक्ला वैशाषेच तृतीयका ॥ त्रयोद-
श्यास्विने कृष्णा तथा दर्श श्च फाल्गुणे ॥ ४९ ॥ कार्त्तिके ऽभूत्कृता रंभे त्रेतारं भस्तु-
माघवे ॥ फाल्गुणे द्वाप रारंभः आरंभ श्चाश्विने कले ः ॥ ५० ॥ क्रमाच्छं भुर्ह रि र्वे
धाःपितर स्तत्र देवताः ॥ तिलान् लवण सौवर्ण गांश्च दद्याद्युगादिषु ॥ ५१ ॥ एता यु-
गा द्यः पुण्याः शुभे वर्ज्या मनीषिभिः ॥ तत्राद्यस्य तृतीया तु सर्व कार्य्येषु शोभना
॥ ५२ ॥ आश्विने नवमी शुक्ला माघ मासेतु सप्तमी ॥ भाद्रे चैत्रे तृतीया च कार्त्तिके
द्वादशी तथा ॥ ५३ ॥ आषाढे दशमी प्रोक्ता ज्येष्ठ मासेतु पौर्णिमा ॥ आषाढी फाल्गु
नी चैत्री कार्त्तिकी पौर्णि मा तथा ॥ ५४ ॥ भाद्रे कृष्णाष्टमी प्रोक्ता पौषे त्वेका दशी सिता
॥ अमा भाद्र पदे मासि मन्वाद्या स्ति थ यस्त्विमाः ॥ ५५ ॥ अत्र मासा स्तु रा कांताः वि-
ज्ञेयाः परि कीर्त्तिताः ॥ द्विवे दिकु ल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाज्ञेया -

द्वितीयेयं प्रभा शुभा ॥ इति श्री संग्रह शिरोमणौ तिथि कथनं नाम द्वितीया प्रभा ॥ २ ॥ अथ वार प्रकरणम् ॥ आदित्य श्चंद्र मा भौमो बुध श्चाथ बृहस्पतिः ॥ शुक्रः शु- नै श्चर श्चैते वासराः परि कीर्त्तिताः ॥ १ ॥ शिवो दुर्गा गुहो विष्णु र्ब्रह्मेन्द्र काल सं- ज्ञकाः ॥ सूर्य्या दीनां क्रमा देते स्वामिनः परि कीर्त्तिताः ॥ २ ॥ गुरु श्चंद्रो बुधः शुक्रः शुभा वाराः शुभे स्मृताः ॥ क्रूरास्तु क्रूर कृत्येषु ग्राह्या भौमार्क सूर्य्यजाः ॥ ३ ॥ सूर्य्य श्चरः स्थिर श्चंद्रो भौम श्चोग्रो बुधस्समः ॥ लघुर्जीवो मृदुः शुक्रः शनि स्ती क्ष्ण स्समीरितः ॥ ४ ॥ अथ वार कृत्यम् ॥ राज्या भिषे को त्सव यान सेवा गो वन्हि मंत्रौ ष- ध शास्त्र कर्म्म ॥ सुवर्ण ताम्रोर्णिक चर्म काष्ठ संग्राम पण्यादि रवौ विदध्यात् ॥ ५ ॥ शंखाब्ज मुक्ता रजतेक्षु भोज्य स्त्री वृक्ष कृष्यांबु विभूषणाद्याः ॥ गीतं क्रतु क्षी- र विकार शृंगी पुष्याम्बरा रंभण मिन्दु वारे ॥ ६ ॥ भेदा नृत स्तेय विषाग्नि शास्त्र वध्या भिघाना हृ वणा द्वदं भानू ॥ सेनानि वेशा कर धातु हेम प्रवाल रत्नानि कु- 

जे विदध्यात् ॥ ७ ॥ नैपुण्यपुण्याध्ययनं कलाश्च शिल्पादि सेवा लिपि लेख नानि ॥ धातु क्रिया कांचन युक्ति संधि व्यायाम वादाश्च बुधे विधेयाः ॥ ८ ॥ धर्म्म क्रिया पौष्टिक यज्ञ विद्या मांगल्य हेमांवर वेश्म यात्राः ॥ रथाश्च भैषज्य विभूषणादि कार्य्यं विदध्यात्सुर मंत्रि वारे ॥ ९ ॥ स्त्री गीत शय्या मणिरत्न गंधवस्त्रोत्सवालंकरणादि कर्म्म ॥ भूपण्य गो कोष्ठ कृषि क्रियाश्च सिद्ध्यंति शुक्रस्य दिने समस्ताः ॥ १० ॥ लोहाश्मसीसत्रपु शास्त्र दास पापानृतस्तेय विषाश्व विद्धं ॥ गृह प्रवेश द्विपबंध दीक्षा स्थिरं च कर्मार्क सुतेऽह्नि कुर्य्यात् ॥ ११ ॥ पतंग सूनोर्दिन साधिपत्यानि प्राप्य इष्टैव तु तिग्म भानोः ॥ रात्रिद्वयं चैक दिनं च सोमे प्रोक्तं ग्रहाणामुदय प्रवृत्तिः ॥ १२ ॥ अथ दोषादोष माह ॥ नवार दोषाः प्रभवंति रात्रौ देवेज्य दैत्येज्य दिवाकराणां ॥ दिवा शशांकार्कज भूसुतानां सर्वत्र निंद्यो बुध वार दोषः ॥ १३ ॥ अथ तैलाभ्यंगे शुभाशुभं ॥ रवि स्तापं कांतिं वितरति शशी भूमि तनयो मृतिं लक्ष्मीं सौम्यः सुर पति

गुरु वित्त हरणम् ॥ विपत्ति दैत्यानां गुरु रखिल भोगानु गमनं नृणां तैला भ्यंगात्स पदिकुरुते सूर्य तनयः ॥ १४ ॥ रवौ भौमे व्यती पाते संक्रांतौ वैधृता वपि ॥ षष्ठ्यष्टम्यो श्च विष्ट्यां च तैला भ्यंगो न पर्वसु ॥ १५ ॥ अथ दोषाप वादः ॥ तैलाभ्यंगे न दोषश्च मत्यहं क्रियते च यः ॥ उत्सवे वात रोगे वा यंत्र वाचनि के ऽपि वा ॥ १६ ॥ भार्गवे गोमयं भौमे मृदं दूर्वां बृहस्पतौ ॥ १७ ॥ रवौ पुष्पं निधायाथ तैला भ्यंगो न दोष कृत् ॥ मंत्रितं कथितं तैलं सार्षपं पुष्प वासितम् ॥ द्रव्यां तर युतं वापि नैव दुष्येत्कदाचन ॥ १८ ॥ अथ तात्कालिक वार कृत्यर्थं होरा ॥ स्वदेशा मध्य रेखातो यो जनैः पाद वर्जितैः ॥ तावत्पलैर्युतो नास्स्युस्तिथयः पर पूर्वतः ॥ १९ ॥ तद्दिना र्द्धान्तर पलै रूनाधिको दिनार्द्धतः ॥ ऊर्द्ध्व माधः क्रमा द्वार प्रवेशः स्त्वपनोदयात् ॥ २० ॥ वार रम्भा द्गता नाड्यो द्विघ्नाः पञ्च विभाजिताः ॥ लब्धां के गत होरा स्युर्वासरे शादितः क्रमात् ॥ २१ ॥ रवि श्शुक्रो बुधश्चंद्र श्शनि र्जीव स्ततः कुजः ॥ एते क्रमात् विज्ञेयाः काला होरे श्वरा ग्रहाः ॥ २२ ॥ यस्मिन्वारे तु यत्कृत्यं पूर्वाचार्यै रुदा

हतम् ॥ तत्कृत्यं तस्य खेदस्य होरायां खलु सिद्ध्यति ॥ २३ ॥ खेदस्योपचयस्थस्य चारे
कार्यं शुभावहम् ॥ तद्देवापचयस्थस्य यत्नेनापि न सिद्ध्यति ॥ २४ ॥ हिंदेदिकुलसंभू
तसरयूकृत संग्रहे ॥ शिरोमणौ समाप्तेयं तृतीयेयं प्रभा शुभा ॥ २५ ॥ इति श्री संग्रह
शिरोमणौ वार कथनं नाम तृतीया प्रभा ॥ ३ ॥ अथ नक्षत्र प्रकरणम् ॥ अश्विनी भरणी
चैव कृत्तिका रोहिणी मृगः ॥ आर्द्रा पुनर्वसुः पुष्यस्ततः श्लेषा मघा ततः ॥ १ ॥ पूर्वाफाल्गु-
णिका तस्मादुत्तराफाल्गुणी ततः ॥ हस्तचित्रा तथा स्वाती विशाखा तदनंतरम् ॥ २ ॥
अनुराधा ततो ज्येष्ठा ततो मूलं निगद्यते ॥ पूर्वाषाढोत्तराषाढ स्त्वभिजित् श्रवणास्ततः ॥
३ ॥ धनिष्ठा शततारा ख्यं पूर्वभाद्रपदा ततः ॥ उत्तरभाद्रपद श्चैव रेवत्येतानि भानि च
॥ ४ ॥ अथ नक्षत्रेशाः ॥ अश्विनी दस्रदेवत्यो भरणी यमदेवता ॥ आग्नेयी कृत्तिका प्रोक्ता
विधाता रोहिणी प्रवरः ॥ ५ ॥ मृगशीर्षे प्रवरश्चंद्रस्तथैवार्द्रे प्रवरः शिवः ॥ अदितिस्तु
पुनर्वस्वोः पतिः पुष्यस्य वाक्पतिः ॥ ६ ॥ श्लेषाधिपतिस्सर्पो मघेशः पितरस्स्मृताः ॥

भगश्च पूर्वा फाल्गुन्याः उफायाः पतिरर्यमा ॥ ७ ॥ हस्तस्याधिपतिः सूर्यस्त्वष्टा चित्राभिधस्य च ॥ स्वातेश्च दैवतं वायुर्विशाखेन्द्राग्नि दैवतम् ॥ ८ ॥ अनुराधे भवेन्मित्रो ज्येष्ठा याम्य इन्द्र उच्यते ॥ मूलस्य दैवतं रक्षः पूर्वाषाढे भवेज्जलम् ॥ ९ ॥ आषाढे दैवतं विश्वे विधिश्चाभिजितोऽधिपः ॥ श्रवणाधिपतिर्विष्णुर्धनिष्ठा वसुदेवता ॥ १०॥ वरुणः शततारायाः पूर्वभे प्रः कथितोऽजपात् ॥ अहिर्बुध्न्यस्तथोत्तरायाः पूषा रेवतीपतिः ॥ ११ ॥ अथ सामान्यतश्शुभाशुभनक्षत्राणि ॥ रोहिण्यश्विमृगाः पुष्यो हस्तचित्रोत्तरात्रयम् ॥ रेवती श्रवणश्चैव धनिष्ठा च पुनर्वसुः ॥ १२ ॥ अनुराधा तथा स्वातीशुभान्येतानि भानि च ॥ सर्वाणि शुभकार्याणि सिद्ध्यन्त्येतेषु चोडुषु ॥ १३ ॥ पूर्वात्रयं विशाखा च ज्येष्ठार्द्रा मूलमेव च ॥ शततारा भिधेयश्चैव कृत्यं साधारणं स्मृतम् ॥ १४ ॥ भरणी कृत्तिका चैव मघाश्लेषा तथैव च ॥ अत्युग्रं दुष्टकार्यं च प्रोक्तमेषु विधीयते ॥ १५ ॥ यात्रौषध विभूषाश्च क्रिया शिल्प कलादिकम् ॥ गजकार्यं विवाहांगं मां.बा-

स्त्यं चाप्लिवने चरेत् ॥ १६ ॥ साहसं दारुणं प्रान्तुनाशनं विष बंधनम् ॥ भरण्यां कूप कु-
व्याघ्रमग्नि दाहादिकं चरेत् ॥ १७ ॥ कृत्तिकायां सदा कुर्य्यात्साहं साग्नि परिग्रहम्
रिपो र्वध विवादंच लोह मरयोश्च कर्म्मसु ॥ १८ ॥ रोहिण्यां मष्टकं कुर्य्यात् द्विवाहं धन
संग्रहम् ॥ प्रासाद सद्मना कृत्यं मांगल्यं भूषणादि कम् ॥ १९ ॥ विवाहो वनजा यात्रा
मृग शीर्षेच शोभनम् ॥ सुर संस्थापनं वास्तु क्षेत्रा रंभादि सिद्ध्यति ॥ २० ॥ आर्द्रायां
विग्रहं कुर्य्यात् इंधनं छेदनं वधम् ॥ विष संधान विद्यादि दारुणे चाटने तथा ॥ २१ ॥
शांतिकं पौष्टिकं यात्रा भूषा वास्तु व्रतादिकम् ॥ वाहनं कृषि विद्याच पुनर्वसौ विधीय-
ते ॥ २२ ॥ चरस्थिराणि कार्य्याणि शांतिकं पौष्टिकोत्सवम् ॥ विवाहं वर्जयित्वान्यत्स
मस्तं पुष्य भे चरेत् ॥ २३ ॥ अश्लेषायां चरिपो घातं वाणिज्यं साहसं तथा ॥ विषसर्पा-
दि कृत्यंच स्तेयादिकमुपाचरेत् ॥ २४ ॥ मघायां पैतृकं कार्य्यं तथा शस्यादि रोपणम् ॥
जलाश्रयं विवाहंच कुर्य्याद्युद्धादि साहसम् ॥ २५ ॥ बंधनं दारुणं शिल्पं कार्य्यं रणा

कर्म्मंच ॥ पूर्वा फाल्गुनि कायां तु चित्र कर्म्मादि साधयेत् ॥ २६ ॥ विवाहे व्रत बंध भूष स्थि
रं कर्म्म विभूषणं ॥ उत्तरा फाल्गुनि भे स्याद्गृहारंभ प्रवेशने ॥ २७ ॥ यात्रा विद्या विवाहा
दि विभूषां वर भौषधम् ॥ गृहारंभ प्रतिष्ठांच विदध्याद्धस्तभेऽखिलम् ॥ २८ ॥ शांतिकं
पौष्टिकं शिल्पं वास्तु भूषां वरादि कर्म्म ॥ व्रत बंधं स्थिरं कार्य्यं चित्रायां कृषिकर्म्मंच ॥
२९ ॥ सुर संघ विधानंच जंगलं वर भूषणम् ॥ बीजारोपंच संग्रामं प्रास्त्राद्यं स्वाति भे च
रेत् ॥ ३० ॥ वास्तु संग्रहणं भूषा शिल्प चित्र प्रहार कर्म्म ॥ रथ कार्य्यं विशाखायां कुर्य्यादि
धध सेवनम् ॥ ३१ ॥ पाणिग्रहं व्रतं यावांगजाश्वांवर भूषणम् ॥ चरं स्थिरं शुभं कुर्य्या
दनुराधाभिधेऽखिलं ॥ शिक्षणं हनने भेदे प्रहारे लोह कर्म्माणि ॥ शिल्पे स्नेह विधौ
चित्रे ज्येष्ठा श्रेष्ठा समीरिता ॥ मूल भे भवनाराम संग्रामाः संधि विग्रहे ॥ वापी कूप तडागा
द्या विधेयाः कृषयोऽपि च ॥ ३४ ॥ वापी कूपादिकं कृत्यं विग्रहं बंध मोक्षणम् ॥ क्रू
र कार्य्यं द्रुम छेदं पूर्वाषाढाभिधे चरेत् ॥ ३५ ॥ स्थापनं मंडलं वास्तु निर्वेशाश्व प्र

विधानम् ॥ वीजा रोपं विभूषाद्यं उत्तरा षाढ मे चरेत् ॥ ३६ ॥ देवता स्थापनं गेहं पौष्टिकं शिल्प कर्म्मच ॥ मांगल्यो पनयं चित्रं प्रीति कं श्रवणे चरेत् ॥ ३७ ॥ चौलेचो पनये युद्धे राजा पूर्वोक्तादि कर्म्मणि ॥ गेहोद्यान विभूषासु धनिष्ठा कथितो त्तमा ॥ ३८ ॥ राजा प्रवरथ नौकानां रौप्य मुक्ता फल स्रजांम् ॥ वास्तु संग्राम शस्त्राणां कार्य्यं तच्छत भेचरेत् ॥ ३९ ॥ पूर्वा भाद्र पदे शिल्पं साहसं छेदनं कृषिः ॥ विक्रयं महिषोष्ट्राणां जल यंत्रादि कं शुभम् ॥ ४० ॥ विवाहो व्रत बंधश्च देवता स्थापनं ग्रहम् ॥ वास्तु कर्म्माभि धानंच उत्तर भाद्र पदे भवेत् ॥ ४१ ॥ गेहं देवालयं भूषा विवाहं व्रत बंधनम् ॥ जल स्थाना दिकं कार्य्यं रेवत्यां सिद्धि माप्नुयात् ॥ ४२ ॥ अथ पुष्य प्रशंसा ॥ पर कष्टं निखिलं निहंति पुष्यो न खलु निहंति परन्तु पुष्य दोषं ॥ भव मष्टत करे ऽष्ट मे पि पुष्ये विहित मुपैति सदैव कर्म्म सिद्धिम् ॥ ४३ ॥ सिंहो यथा सर्व चतुष्पदानां तथैव पुष्यो वल वानुडूनां ॥ चंद्रे विरुद्धे प्यथ गोचरेपि सिद्ध्यंति कार्य्याणि

कृतानि पुच्छे ॥ ४४ ॥ ग्रहेण विद्धोप्यशुभान्वितोपि विरुद्धताराेपि विलोमगोपि ॥
करोत्यवश्यं सकलार्थसिद्धिस्त्विहाय पाणिग्रहणात्तु पुच्छः ॥ ४५ ॥ अथ नक्षत्राणां
स्वरूपम् ॥ तुरगमुखसदृक्षं योनिरूपं क्षुराभम् प्राकट सम सधैर्ण स्यात सांगेनतु-
ल्यम् ॥ मणिगृह शर चक्रं भाति शालोपमस्थं शयन सदृश मन्यच्चात्र पर्यंकरू-
पम् ॥ ४६ ॥ हस्ताकार मत प्रच मौक्तिकसमं चान्यत प्रवालोपमं धिष्ण्यं तोरणव-
त्स्थितं बलिनिभं सत्कुण्डलाभं परम् ॥ क्रुध्यत्केशरिविक्रमेण सदृशं शय्यासमा-
नं परं चान्यद्दंतिविलासवत्स्थित मतः त्रैकोणकंव्यक्तिमत् ॥ ४७ ॥ त्रिविक्रमा
भं च मृदंगरूपं वृत्तं ततो न्यद्द्वयमयाभं ॥ पर्यंकरूपं मुरजानुकारी त्वत्येव कुम्भा-
द्विचक्ररूपम् ॥ ४८ ॥ अथ नक्षत्राणां संख्या ॥ वन्हि त्रिऋत्विषु गुणेंदु कृताग्नि
भूत बाणाश्विनेत्र शर भूकु युगाब्धि रामाः ॥ रुद्राब्धि राम गुण वेद शत द्वि युग्म
दंता बुधै र्निगदिताः क्रमशोभतारा: ॥ ४९ ॥ अथ नक्षत्राणां संज्ञा ॥ ध्रुवं स्थिर

मिति ख्यातं रोहिणी चोत्तरा त्रयं ॥ तत्रा राम गृह ग्रामा भिषे काद्याः स्थिर क्रिया ॥ ५० ॥ मृग श्चित्रा नुराधाच रेवती स्तु मैत्र कम् ॥ तत्र गीतं रतं कुर्य्याद्भूषा मांगल्य मंबरम् ॥ ५१ ॥ पुष्या श्विन्य भि जिद्ध स्तं लघु क्षिप्र सुदा हृतम् ॥ तत्र भूषौ षध ज्ञानं शिल्प कंच तथा रतिः ॥ ५२ ॥ ज्येष्ठा र्द्रा मूल मश्ले षाती क्ष्णं दारुण मुच्यते ॥ तत्र भेदो वधो वंधो मंत्र भूतादि साधनम् ॥ ५३ ॥ श्रवणादि त्रि भं स्वातीपु नर्वसु चरं चलम् ॥ तस्मिन्वाजिगजा रामा कर मोक्ष गमा दिकम् ॥ ५४ ॥ भरणी च मघा पूर्वा क्रूर मुग्र मुदा हृतम् ॥ विष शस्त्राग्नि घातादि तत्रोच्छेद विनाशन-म् ॥ ५५ ॥ विशाखा कृत्तिका श्चैते र्मिश्रं साधारणं स्मृतम् ॥ नीलोत्सर्गाग्निकार्य्यंच मिश्रं तत्र च सिद्ध्यति ॥ ५६ ॥ अथ नक्षत्र मुखं तत्फलंच ॥ मूला श्लेषा मघा पूर्वा विशाखा भरणी द्वयम् ॥ अधो मुखानि भान्यत्र कर्म्म सिद्धे दधो मुखम् ॥ ५७ ॥ स्व वापी तडा गादि कूप भूमि त्रणा निच ॥ देवा गारस्य खननं निधान खननं तथा ॥

॥ ५८ ॥ गणितं ज्योतिषारंभ खनी बिल प्रवेशनम् ॥ कुर्य्यादधोगता न्येव कार्य्या-
णि वृषभध्वज ॥ ५९ ॥ रोहिण्या र्द्रा तथा पुष्यो धनिष्ठा चोत्तरा त्रयम् ॥ वारुणं
श्रवणं चैव नव चोर्द्ध मुखा स्तथा ॥ ६० ॥ प्रासाद स्तंभ ध्वज छत्र प्राकार गृह तोर-
णम् ॥ नृपाभिषेक आराम उच्छ्राय स्तूर्द्ध वक्त्रके ॥ ६१ ॥ रेवती चाश्विनी चित्रा
स्वाती हस्त पुनर्वसू ॥ अनुराधा मृगो ज्येष्ठा एतास्तिर्य्यङ्मुखाः स्मृताः ॥ ६२ ॥ गजो-
ष्ट्राश्व बली वर्द्द दमनं महिषस्य च ॥ बीजानां वपनं कुर्य्याद्गमना गमनादिकम् ॥
६३ ॥ चक्र यंत्र रथादीनां नौकादीनां प्रवाहनम् ॥ पार्श्वयो यानि कार्य्याणि कुर्य्या
देषु च तान्यपि ॥ ६४ ॥ अथ पंचकम् ॥ धनिष्ठार्द्धा त्परं पंच स्वर्क्षेष्वेषु त्यजेद्बुधः ॥ याम्य
दिग्गमनं शय्या पूरणं गृह गोपनम् ॥ ६५ ॥ स्तंभो च्छ्रायं प्रेत दाहं तृण काष्ठादि संग्र-
हम् ॥ भवेत्यंच गुणं चात्र जातं लब्धं मृतागतम् ॥ ६६ ॥ अथ नक्षत्राणां मंधादिसंज्ञा
॥ अंधकं तदनु मंद लोचनं मध्य लोचन मतः सुलोचनम् ॥ रोहिणी प्रभृति भं च तुष्टयं सा

भिजिच्च गणयेत्पुनः पुनः ॥ ६७ ॥ अंधके पूर्वतो वस्तु मंदके दक्षिणे तथा ॥ पश्चिमे म-
ध्य नेत्रेच उत्तरे तु सुलोचने ॥ ६८ ॥ अंधेसद्यः प्राप्यते वस्तु नष्टं कष्टात्प्राप्यं मंदनेत्रेच
नष्टत् ॥ दूरात् श्राव्यं मध्य नेत्रे न लभ्यं न श्रोतव्यं नैव लभ्यं सुनेत्रे ॥ ६९ ॥ अथ नक्षत्र द-
र्शनात् रात्रि लग्न ज्ञानं तत्रादौ नक्षत्र चारः ॥ पूर्वाषाढ हस्तं मूला ऽनुराधार्द्रा मृगाः करः ॥ ज्ये-
ष्ठा पुनर्वसु श्लेषा तारा दक्षिण गाः सदा ॥ ७० ॥ रोहिणी कृत्तिका श्लेषा रेवती श्रवण त्रयम्
पुष्य श्चित्रा रिण चैतानि मध्य चारीणि भानिहि ॥ ७१ ॥ अश्विनी द्वितयं स्वाती विशाखा
फाल्गुणी द्वयं ॥ मघा भाद्र पादा युग्म मेतान्युत्तर गानिच ॥ ७२ ॥ अथ नभो मध्य भात् उदय
र्क्ष ज्ञानं ॥ विशाखादि त्रये पूर्वाषाढा ऽश्लेषार्द्र भे यदा ॥ रोहिणी भ नभो मध्ये तदास्या -
त्वाष्ट्र मोदयः ॥ ७३ ॥ नवम क्षोंदयो मूले मगे चांबर मध्यगे ॥ शेषे मध्य गते ज्योति स-
प्तम र्क्षों दयो भवेत् ॥ ७४ ॥ अथ रवि भात् मध्य भात् उदय भात् गत रात्रि ज्ञानम् ॥ रवि भाद
स्त भं चैके मध्य भं वाष्ट हीन कम् ॥ उद्यभ्द तिथि १५ हीनं वा नख २० घ्नं नव भाजितम्

॥ ७५ ॥ लब्धं रात्रि गता नाड्यः शेषा लब्धा पलानि च ॥ अथवा ॥ अस्त भार्द्कं भं तिथ्या १५
हीनं मध्य भंतोष्टभिः ॥ ७६ ॥ उदयर्क्ष निशा वे कं विंशति घ्नं ग्रहे भजेत् ॥ लब्धा घट्या-
दिका ज्ञेया शेषा रात्रि स्फुटा यवा ॥ ७७ ॥ सत्रैष्ट न वहीनं च स्व स्वोदय प्रमाणतः ॥ म-
ध्य मेवु विशेषोयं ज्ञेयो युक्त्या विचक्षणैः ॥ ७८ ॥ अथ दिवा रात्रौ मुहूर्त्ताः ॥ शिवो हि मि-
त्रपितरौ वस्वंभो विश्व वेधसः ॥ विधि रिंद्रो द्र शक्राग्नी रक्षोब्धी शोर्य मा भगः ॥ ७९
॥ मुहूर्त्ते शा हमे प्रोक्ता दिवा पंच दश क्रमात् ॥ मुहूर्त्ता रजनौ शंभु रजैक चरणान्वयः
॥ ८० ॥ दस्रात्यं चादिति जीवौ विष्णु कौ तक्ष मारुतौ ॥ दिन मानस्य तिथ्यंशो रात्रे
रपि मुहूर्त्तकाः ॥ ८१ ॥ नक्षत्र नाथ तुल्ये स्मिन् कार्य्यं कुर्य्यात्तद्भोदितं ॥ दिन म
ध्ये ऽभिजित्संज्ञो दोष संघेघ्नु सत्त्वपि ॥ सर्वं कुर्य्याच्छुभं कर्म्म याम्य दिग्गमनं वि-
ना ॥ ८२ ॥ अथ रव्यादि वारे त्याज्य मुहूर्त्ताः ॥ अर्यमा भानु मद्वारे चंद्रे हि विधि राक्षसौ
॥ पित्राग्नी कुज वारे तु चंद्र पुत्रे तथा भिजित् ॥ ८३ ॥ पित्र ब्राह्मौ भृगौ वीरे राक्ष

| संख्या | नक्षत्रनाम | शुभाशुभ | नक्षत्रस्वामी | मुख | नाम | संज्ञा | नेत्र | आकृतिः | तारासंख्या |
|---|---|---|---|---|---|---|---|---|---|
| २८ | रेवती | कामद | पूषा | तीर्य्यङ्मु | मृदु | मैत्र | अंधाक्ष | मृदंगाभ | ३२ |
| २७ | उत्तराभाद्रपद | लक्ष्मी | अहिर्बुध्न्य | ऊर्द्धमु. | ध्रुव | स्थिर | दिव्याक्ष | यमलाभ | २ |
| २६ | पूर्वाभाद्रपद | मृत्युद | अजैकपात | अधोमु. | उग्र | क्रूर | काणाक्ष | वर्तुलाभ | २ |
| २५ | शतभिषा | कल्याण | वरुण | ऊर्द्धमु. | चर | चल | चिपटाक्ष | मृदंगाभ | १०० |
| २४ | धनिष्ठा | शुभद | वसु | ऊर्द्धमु. | चर | चल | अंधाक्ष | बालनाभ | ४ |
| २३ | श्रवण | शुभद | विष्णु | ऊर्द्धमु. | चर | चल | दिव्याक्ष | वक्राभ | ३ |
| २२ | अभिजित | सिद्धिद | ब्रह्मा | ० | लघु. | क्षिप्र | काणाक्ष | त्रिकोण | ३ |
| २१ | उत्तराषाढ | वृद्धिद | विश्वेदेव | ऊर्द्धमु. | ध्रुव | स्थिर | चिपटाक्ष | गजाभ | ३ |
| २० | पूर्वाषाढ | हानिप्रद | उदक | अधोमु. | उग्र | क्रूर | अंधाक्ष | शय्याभ | ४ |
| १९ | मूल | अर्थनाश | राक्षस | अधोमु. | तीक्ष्ण | दारुण | दिव्याक्ष | सिंहाभ | ११ |
| १८ | ज्येष्ठा | क्षयनाश | इंद्र | तीर्य्यङ्मु | तीक्ष्ण | दारुण | काणाक्ष | कुंडल | ३ |
| १७ | अनुराधा | सर्वसिद्धि | मित्र | तीर्य्यङ्मु | मृदु | मैत्र | चिपटाक्ष | बलिसम | ४ |
| १६ | विशाखा | अशुभ | इंद्राग्नी | अधोमु. | मिश्र | साधारण | अंधाक्ष | तोरण | ४ |
| १५ | स्वाती | अशुभ | वायु | तीर्य्यङ्मु | चर | चल | दिव्याक्ष | प्रवाल | १ |
| १४ | चित्रा | शुभद | त्वष्टा | तीर्य्यङ्मु | मृदु | मैत्र | काणाक्ष | मौक्तिक | १ |
| १३ | हस्त | लाभद | रवि | तीर्य्यङ्मु | लघु | क्षिप्र | चिपटाक्ष | हस्ताभ | ५ |
| १२ | उत्तराफाल्गुनी | विद्याप्रद | अर्यमा | ऊर्द्धमु. | ध्रुव | स्थिर | अंधाक्ष | पर्यंक | २ |
| ११ | पूर्वाफाल्गुनी | मृत्युद | भग | अधोमु. | उग्र | क्रूर | सुलोचन | [illegible] | २ |
| १० | मघा | नाशक | पितर | अधोमु. | उग्र | क्रूर | मध्यलोचन | शालासम | ५ |
| ९ | आश्लेषा | शोक | सर्प | अधोमु. | तीक्ष्ण | दारुण | मंदाक्ष | चक्राभ | ५ |
| ८ | पुष्य | शुभ | गुरु | ऊर्द्धमु. | लघु | क्षिप्र | अंधाक्ष | शराभ | ३ |
| ७ | पुनर्वसु | मध्यम | अदिति | तीर्य्यङ्मु | चर | चल | सुलोचन | गृहाभ | ४ |
| ६ | आर्द्रा | शुभ | शिव | ऊर्द्धमु. | तीक्ष्ण | दारुण | मंदाक्ष | मणिसम | १ |
| ५ | मृगशिर | शुभ | चंद्र | तीर्य्यङ्मु | मृदु | मैत्र | मंदाक्ष | मृगसम | ३ |
| ४ | रोहिणी | सिद्धि | ब्रह्मा | ऊर्द्धमु. | ध्रुव | स्थिर | अंधाक्ष | शकट | ५ |
| ३ | कृत्तिका | अशुभ | अग्नि | अधोमु. | मिश्र | साधारण | सुलोचन | क्षुराभ | ६ |
| २ | भरणी | अशुभ | यम | अधोमु. | उग्र | क्रूर | काणाक्ष | योनि | ३ |
| १ | अश्विनी | शुभ | अश्विनीकुमार | तिर्य्यङ्मुख | लघु | क्षिप्र | मंदाक्ष | अश्वमुख | ३ |

साम्बू गुरौ द्विने ॥ रौद्र सार्पौ भृगौ वह्नि ब्रह्मे त्याज्या मुहूर्त्तकाः ॥ ८५ ॥ द्विवेदि कुल संभूत

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | दिवा मुहूर्त्ताः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शिव | सर्प्प | मित्र | पितर | वसु | अंबु | विश्वे | विधि | वेधा | इंद्र | इंद्राग्नी | राक्षस | वरुण | अर्य्यम | भग | देवताः |
| आर्द्रा | श्लेषा | अनु | मघा | धनिष्ठा | पूषा | उत्तराषाढ | अभिजित | रोहिणी | ज्येष्ठा | विशाखा | मूल | शतभिष | उत्तराफाल्गुनी | पूर्वाफाल्गुनी | नक्षत्राणि |
| रुद्र | अजैक | अहिर्बुध्न्य | पूषा | दस्र | यम | अग्नि | ब्रह्मा | चंद्र | अदिति | गुरु | विष्णु | सूर्य | त्वष्टा | वायु | रात्रि मुहूर्त्ताः |
| आर्द्रा | पूर्वाभाद्र | उत्तरभाद्र | रेवती | अश्विनी | भरणी | कृत्तिका | रोहिणी | मृग | पुनर्वसु | पुष्य | श्रवण | हस्त | चित्रा | स्वाती | नक्षत्राणि |

अथ रव्यादि वारे त्याज्य मुहूर्त्ताः ॥

| अर्ज्जम | ब्रह्मा राक्षस | पितृ अग्नि | अभिजित् | राक्षस अंबु | पितृ ब्रह्म | पितृ सर्प्प. | मुहूर्त्तानि |
|---|---|---|---|---|---|---|---|
| उत्तराफाल्गुनी | रोहिणी मूले | मघा कृत्ति. | अभिजित् | मूलपूर्वाषा. | मघा रोहि. | आर्द्रा श्लेषा. | नक्षत्र |
| दि.१४ | दि.९। १२रा.८ | दि.५। रा.७। | दि.८ रा. | दि.१२ ६रा. | दि.४।१८ रा.९ | दि.१।२ रा.१ | दिन.रात्रि |
| र | चं. | मं. | बु. | बृ. | भृ. | श. | वार.। |

सत्यकृत संग्रहे ॥ स्थिरो मरणो समाप्तैषा चतुर्थीयं प्रभा शुभा ॥ ८५ ॥ इतिश्री संग्रह स्थिरो मरणो नक्षत्र कथनं नाम चतुर्थी प्रभा ॥ ४ ॥

वाक्पतेः कोऽर्थः पुष्य नक्षत्र



अथ योग प्रकरणम् ॥ वाक्पतेरर्क नक्षत्रं श्रवणाच्चान्द्र मेवच ॥ गणयेत्तद्युतिं कुर्य्याद्योगस्स्याद्दक्ष पूर्वतः ॥ १ ॥ विष्कुंभः प्रीति रायुष्मान् सौभाग्यः शोभन स्तथा ॥ अतिगण्डः सुकर्म्माच धृतिः शूल स्तथैवच ॥ २ ॥ गंडो वृद्धि र्ध्रुव श्चैव व्याघातो हर्षण स्तथा ॥ वज्र सिद्धी व्यती पातो वरियान् परि घः शिवः ॥ ३ ॥ सिद्धिः साध्यः शुभः शुक्लो ब्रह्मेन्द्रो वैधृतिः क्रमात् ॥ सप्त विंशति योगास्तु कुर्युर्नाम समं फलम् ॥ ४ ॥ विरुद्ध संज्ञा इह येच योगा स्तेषा मनिष्टः खलु पाद आद्यः ॥ सर्वे धृतिस्तु व्यतिपात नामा सर्वोप्यनिष्टः परि घस्य चार्द्धम् ॥ ५ ॥ तिलस्तु योगे प्रथमेच वज्रे व्याघात संज्ञेन व पंच शूले ॥ गंडेति गंडेच षडेव नाड्यः शुभेषु कार्य्येषु विवर्जनीयाः ॥ ६ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्तै षा पंचमीयं प्रभा शुभा ॥ ७ ॥ इति श्री संग्रह शिरो मणौ योग कथनं नाम पंचमी प्रभा ॥ ५ ॥

अथ करण प्रकरणम् ॥ गताश्च तिथयो निघ्नाः द्वाभ्यां शुक्ला दितः क्रमात् ॥ एकोनास्सप्त

सं॰शि॰ हृच्छेबाः करणं स्याद वाणिकम् ॥ १ ॥ बवाह्वयं बालव कौलव ता रव्यंत तो भवेत् तैतिल

३२ नाम धेयम् ॥ गराभिधानं वणिजं च विष्टि रित्याहुरार्याः करणानि सप्त ॥ २ ॥ अंते कृ-

ष्णा चतुर्दश्यां शकुनिर्दर्श भागयोः ॥ शेषं चतुष्पदं नागं किंस्तुघ्नं प्रतिपद्दले ॥ ३ ॥

अथ करणानां स्वामिनः ॥ इन्द्रो ब्रह्मा मित्र नामार्य्य माभूः श्रीः कीनाश श्चेति तिथ्य र्धनाथाः

॥ कल्यु क्षारव्यौ सर्प वायु स्तथैव बवे चत्वार स्ते स्थिर राणां चतुर्णाम् ॥ ४ ॥ पौष्टिक स्थिरशु

भानि बवाख्ये बालवे द्विज हितान्यपि कुर्य्यात् ॥ कौलवे प्रमद मित्र विधानं तैतिले शुभ

गता अथ कर्म्म ॥ ५ ॥ गरेच बीजा श्रय कर्ष णानि वाणिज्य केस्थैर्य वणिक्क्रियाश्च

॥ नसिद्धि मायाति कृतं च विष्ट्यां विषारि घातादिषु तत्र सिद्धिः ॥ ६ ॥ मंत्रौषधानि श-

कुनौ तु स पौष्टिकानि गो विप्र राज्य पितृ कर्म्म चतुष्पदे पि ॥ सौभाग्य द्वारण धृति भव

कर्म्म नागे किंस्तुघ्न नाम्नि निखिलं शुभ कर्म्म कार्यम् ॥ ७ ॥ अथ भद्रायां विशेषः ॥ ए-

कादश्यां चतुर्थ्यांच शुक्ले पक्षे परे दले ॥ अष्टम्यां पूर्णिमायां च भद्रा पूर्व दले स्मृता ॥ ३२

८ ॥ तृतीयायां दशम्यांच कृष्णे पक्षे परे दले ॥ सप्तम्यां च चतुर्दश्यां भद्रा पूर्व दले भवेत ॥ ९ ॥ अथ भद्रायाः अंगविभागः फलंच ॥ नाड्यस्तु पंच वदने च गले तथैका वक्षो दशोक सहितं निहितंच तस्याः ॥ नाभ्यां कटौ षड् थ पुच्छ लतास्तु तिस्रो विष्टेर्बुधै रभिहितो गविभाग एषः ॥ १० ॥ स्थान फलम् ॥ मुखे कार्यध्वस्ति र्भवति मरणं चाथ गलके धना हानि र्वक्षस्यथ कटि तटे बुद्धि विलयः ॥ कलिर्नाभौ देष्टो विजय मथ पुच्छे च जगदुः ॥ शरीरे भद्रायाः पृथगिति फलं पूर्व मुनयः ॥ ११ ॥ अथ भद्रा वासः ॥ मीने मेषालि कर्के शशिनि वसति स्वर्ग संस्थापि विष्टिः ॥ कन्यायां तौलि संस्थे धन मिथुन गते नाग लोके निवासः ॥ १२ ॥ कुंभे सिंहे वृषे वा मकर सुपगते राजते मृत्यु लोके ॥ भद्रा चंद्र प्रभावाद्धि मकर तनया नो शुभा लौकिके स्यात् ॥ १३ ॥ स्थान फलम् ॥ स्वर्गे भद्रा भवेत्सौख्यं पाताले च धनागमः ॥ मृत्यु लोके यदा भद्रा कार्य्य सिद्धि स्तदा नहि ॥ १४ ॥ अथ वाराणां फलम् ॥ सोमे शुक्रेच कल्याणी शनौ चैव तु वृश्चिकी ॥ गुरौ पुण्य

वती ज्ञेया चान्य वारेषु भद्रका ॥ २५ ॥ कार्य्येऽत्यावश्यके विष्टे मुख मात्रं परित्यजे-
त् ॥ अथ भद्राया: दिङ्मुखम् ॥ प्राक्का १४ ष्ट ८ मुनि ७ तिथ्य १५ ब्धि ४ दि १० मुद्रा ११ विन्दु ३
मिते तिथौ प्रथमादि युधा मेषु दिक्षु पूर्वा दितः क्रमात् ॥ २६ ॥

| ३ | ७ | १० | १४ |
|---|---|---|---|
| ८ | ३ | ६ | १ |
| पू | द | वा | नै |

कृष्णे भद्रयान्त पंच घटी भद्रा मुखम् ॥

शुक्ले भद्रान्ते पञ्च घटी भद्रा मुखम्

| ४ | ८ | ११ | १५ | [illegible] |
|---|---|---|---|---|
| ५ | २ | ७ | ४ | [illegible] |
| प | आ | उ | नै | [illegible] |

विष्टेर्मुखं विजानीयाच्छुभं पृष्ठेऽगतोऽशुभम् ॥ अथ भद्रा पुच्छम् ॥
चतुर्थ्यां चाष्टमे यामे प्रथमे चाष्टमी दिने ॥ एकादश्यां तथा षष्ठे पौर्णमास्यां तृतीयके
॥ १७ ॥ एवं घटी त्रयं पुच्छं कृष्ण पक्षे त्वथोच्यते ॥ १८ ॥ सप्तमे स्यात्तृतीयाया
स्सप्तम्यास्तु द्वितीयके ॥ दशम्यां पंचमे यामे चतुर्दश्यां चतुर्थके ॥ १९ ॥ विष्टेः पुच्छे
जयो युद्धे कार्य्य मन्यच्च शोभनम् ॥ अथ भद्रा कर्म्माणि ॥ वध बंध विषाग्न्यस्त्र छेदनोच्चा-
टनादिकम् ॥ तुरंग महिष्युष्ट्रादि कर्म्म विष्ट्यां तु सिद्ध्यति ॥ २० ॥ अथ भद्रायां दोषापवादः
॥ तिथेः पूर्वार्द्ध जा रात्रौ दिने भद्रा परार्द्धजा ॥ भद्रा दोषो न तत्र स्यात् कार्य्येऽत्या-

वृश्चय के सति ॥ २१ ॥ वैधृतौ व्यतिपाता रव्ये विष्ट्यां भौमे च वासरे ॥ तथैव दुष्टता
रासु मध्याह्नात्पर त शुभः ॥ २२ ॥ अथ भद्रा विषये कस्य चिन्मते विशेषः ॥ शुक्ले तु वृश्चि
की भद्रा कृष्ण पक्षे भुजंगमा ॥ सादिवा सर्पिणी रात्रौ वृश्चिकी त्यपरे जगुः ॥ २३ ॥ मु
खं त्याज्यं तु सर्पिण्या वृश्चिक्याः पुच्छमेव च ॥ खरास्याः प्रसवे दुर्गा पूजने दान कर्म
णि ॥ २४ ॥ दाह घातादि के भद्रा प्रशस्ता नान्यत्र शोभना ॥ दैत्येन्द्रैः समरे मरेषु वि
जिते श्रीशः क्रुधा दृष्टवान् ॥ ॥ स्वात्कायात्किल निर्गता खरमुखी लांगूलि
नी च त्रिपात् ॥ विष्टिः सप्त भुजा मृगेन्द्र गल का क्षामोदरी प्रेतगा दैत्यघ्नी मुदितैः
सुरैस्तु करणांते नियुक्ता तु सा ॥ २६ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो
मणौ समाप्तेयं षष्ठी यहि प्रभा शुभा ॥ २७ ॥ इति श्री संग्रह शिरोमणौ करण क
थनं नाम षष्ठी प्रभा ॥ ६ ॥ अथ तार प्रकरणम् ॥ सपाद र्क्ष द्वयं भोगे मेषादीनां यथा
क्रमात् ॥ अश्विन्यार्द्रैव तीया वज्राशि भोगेन वांछिकः ॥ १ ॥ अथ राशयः ॥ अश्विनी

सं·शि· २६

भरणी धिसे कृत्तिका प्रथमांघ्रिकम् ॥ मेषस्स्यात्कृत्तिका पादत्रितयं रोहिणी तथा ॥ २ ॥ वृष भो मृग पूर्वार्द्ध तदर्द्धं च तथार्द्रभम् ॥ पादत्रयं पुनर्वस्वोः स राशिर्मिथुनाभिधः ॥ ३ ॥ तदंत्यों ऽघ्रिस्तथा पुष्यो ह्यश्लेषा कर्कटाभिधः ॥ मघा पूर्वोत्तरा द्यों ऽघ्रिः सिंहस्तच्चरणत्रयम् ॥ ४ ॥ हस्त चित्रा भ पूर्वार्द्धं कन्या चित्रोत्तरं दलम् ॥ स्वातिभं च विशाखाया श्चरणत्रितयं तुला ॥ ५ ॥ तदंत्यों ऽघ्रिरनुराधाख्ये ज्येष्ठा भं वृश्चिकः स्मृतः ॥ मूलं पूर्वोत्तराषाढा प्रागंघ्रिः कथितो धनुः ॥ ६ ॥ उत्तरांघ्रित्रयं कर्णो धनिष्ठा प्रथमं दलम् ॥ मकराख्यो धनिष्ठा त्रिर्द्दलं च शततारका ॥ ७ ॥ पूर्वा पादत्रयं कुम्भ स्तदंत्य श्चरणस्तथा ॥ कुंभा भं रेवती चैव मीन राशिः प्रकीर्त्तितः ॥ ८ ॥

अथावकहडचक्रानुसारेण नक्षत्रचरणानां वर्णाः ॥ अश्विनी तु चु चे चो ला लि लू ले लो भरण्यपि ॥ कृत्तिका स्या द ई ऊ ए रोहिण्या वा वि वु स्मृता ॥ ९ ॥ वे वो क कि मृगख्यार्द्रा कु घा ङ छ प्रकीर्त्तिता ॥ के को ह हि पुनर्भं स्याद्धु हे हो डा च पुष्यभम् ॥ १० ॥ अश्ले

पातु डि हूडे डो मामी मूमे मघा ह्रूयम् ॥ मोटा टीटू तु पूर्वा ख्या मुफा देदो पषि स्तृता ॥ २१ ॥ प्रोक्तः पूषणा ठो हस्तः पे पो ररितु चित्र का ॥ रूरे रोता तथा स्वाती ति तू ते तो विशाखिका ॥ २२ ॥ अनुराधा ननी नूने ज्येष्ठा नोया यियु र्म्मता ॥ तथा येयो भभी मूलं पूर्वा षाढा भुधा फढा ॥ २३ ॥ भे भो जजुषुत्तरा षाढा जुजे जो षा तथा भिजित् ॥ खि खू खे खो श्रवो ज्ञेयः गगी गूगे धनिष्ठिका ॥ २४ ॥ गोसा सिसू शता स्वंच पूर्वा-सेसो ददी मता ॥ ऊभा दूथा ऊञा ज्ञेया देदो चचि च रेवती ॥ २५ ॥ अथ चंद्रस्य शुभा शुभफलम् ॥ स्वजन्म राशि मारभ्य चंद्र राशि स्थितं फलम् ॥ चंद्रे जन्म स्थिते पुष्टिः द्वितीये नो सुख भवेत् ॥ २६ ॥ तृतीये धन लाभ श्च चतुर्थे रोग संभवः ॥ पंचमे कार्य्य नाशश्च षष्ठे द्रव्या गमो महान् ॥ २७ ॥ सप्तमे भूप सन्मानं त्वष्टमे मरणं भवत् ॥ नवमे च भयं ज्ञेयं दशमे कार्य्य संपदः ॥ २८ ॥ एकादशेऽर्थे लाभ श्च द्वादशे विविधा पदः ॥ अथ शुक्ल पक्षे विशेषः ॥ द्वितीयः पंचम श्चन्द्रो नवमोऽपीज्य वच्छुभः ॥ शुक्ल

पक्षे विशेषोऽयं तुल्य मन्य त्तयो र्भयोः ॥ २० ॥ चन्द्रस्यैव वलः शुक्ले नतु तारा विधा
नतः ॥ सति कांते वलो पेते स्वातंत्र्यं न च योषितः ॥ २१ ॥ कृष्ण पक्षेतु तारायाः वल
मास्य सदा यतः ॥ क्षीणे च प्रोषिते कांते गार्हस्थ्यं गेहिनी चरेत् ॥ २२ ॥ अथ तारावल
म् ॥ जन्म भादिन भं यावत्ताराह्ने या नवोद्भुते ॥ जन्म संपद्विपत्क्षेम प्रत्यरि साधक व-
धाः क्रमात् ॥ २३ ॥ मित्राति मित्र संज्ञंच नाम तुल्य फला स्मृताः ॥ द्वितीयस्तु चतुर्थ
नवाष्टमस्तु ताराःश्रेष्ठतमा मताः ॥ २४ ॥ जन्माख्या मध्यमा ज्ञेया नेष्टा स्त्वन्याः
प्रकीर्तिताः ॥ अथावश्यके तारा णांत्याज्यांशः ॥ तारापूर्णाःत्यज्ये दाद्या वर्ज्ये पंच त्रि सप्त-
काः ॥ २५ ॥ द्वितीये चैव तत्पादः तुर्य्य का घास्तृतीय काः ॥ तृतीयेतु शुभा स्सर्वाः
कार्ये त्यावश्य के स्मृताः ॥ २६ ॥ अथ दुष्टतारा सुदानम् ॥ सप्तम्यां तारकायां च दद्या-
त्स्वर्णं तिलानपि ॥ गुडं तृतीय तारायां पंचम्यां लवणं तथा ॥ २७ ॥ दोषापनुत्तये ता-
सां दद्याच्छाकं त्रिजन्म सु ॥ अथ चन्द्रावस्था ॥ निपुण करस्य या वस्था नरराशि सम-

न्विता ॥ नरावस्था च साद्धेया प्रवासाद्यर्क्षबोधिता ॥ २८ ॥ वाञ्छितं गतभं भुक्तघटी
युक्तं युगाहतम् ॥ ग्रहाब्धिहृल्लब्धतोऽर्कैः शेषेऽवस्थाः क्रियादितः ॥ २९ ॥ अ-
श्विनीमारभ्य गतभानि षष्ट्या ६० गुणयित्वा निवर्तमाननक्षत्रभुक्तघटीयुता-
नि तानि पुनर्युगैश्चतुर्भिराहृत्वा निधिराब्धि ९४ हृत पंचचत्वारि॰ प्रा तांश्च ज्ञात्वा नि
लब्धमागतं गतावस्थास्ताः शेषं वर्तमानावस्था या तत्र लब्धांकस्यापि द्वादशाधि
क्ये द्वादशभिर्भागे शेषं प्रवासाद्यवस्था चंद्रस्य गताः स्युः ताः ॥ अवस्था मेषराशेः
पुनः प्रवासादिसंज्ञाः वृषराशौ नष्टा संज्ञा एवमिथुनादि द्वादशराशिषु मृतादि सं-
ज्ञावस्थादितो द्वादशावस्थाः क्रमेण भवंतीत्यर्थः ॥ २९ ॥ प्रवासोऽथ विनाशश्च
मरणं जय हास्यके ॥ रतिः क्रीडा तथा सुप्ता भुक्ता चाथ जराभिधा ॥ कंपिता सुस्थिराव-
स्था द्वादशैता विधो स्मृताः ॥ ३० ॥ तासां मानं सपादैकादश नाडीमितं भवेत् ॥
मेषादितः प्रवासाद्याः नामतुल्यफलप्रदाः ॥ ३१ ॥ मेषराशौ प्रवासाद्यानां प्रा

घातृषभ विधौ ॥ मृता या मिथुने चैवं कामा द्वादश राशिषु ॥ ३२ ॥ अथ कार्य्य विशेषे ग्रहबलम् ॥ उद्वाहे चोत्सवे जीवः सूर्य्यो भूपाल दर्शने ॥ संग्रामे धरणी पुत्रो विद्याभ्यासे बुधो बली ॥ ३३ ॥ यात्रायां भार्गवः प्रोक्तो दीक्षायां च शनैश्चरः ॥ चंद्रमाः सर्व कार्य्येषु प्रशस्तो गृह्यते बुधैः ॥ ३४ ॥ अथ चंद्र बले विशेषः ॥ शुभ क्षेत्रोप्य सत् पाप स्तन्नतः पाप युक् तथा ॥ पाप मध्य गतः क्षीणो नीच गः शत्रु वर्गगः ॥ ३५ ॥ अशुभो ऽपि शुभ श्चंद्रो गुरुणा लोकितो युतः ॥ स्वर्क्षे स्वस्य शुभांशे वा स्वाधि मित्रांशके ऽथवा ॥ ३६ ॥ अथावस्थेदानम् ॥ नंदु लोंश्च तिथौ दुष्टे वारे रत्नं सकांचनम् ॥ गावृक्षे कनकं योगे करणे धान्य मेव च ॥ ३७ ॥ शंख रौप्य युते चंद्रे तारायां सैंधवं तथा ॥ नाक्ष्यां हेम नृपो दद्या त्कार्य्ये ऽत्या वश्यके सति ॥ ३८ ॥ द्विजो द्विकुल संभूत सरयू कूल संगृहे ॥ शिरो मणौ समाप्तै या सप्तमी सं प्रभा शुभा ॥ ४० ॥ इति श्री संगृह शिरो मणौ तारा कथनं नाम सप्तमी प्रभा ॥ ७ ॥ अथ शुभाशुभ नक्षत्राणाम् ॥ स्त्री सेवनं पर्व शुभक्ष मध्ये पलं च षष्ठी युच सर्व तैलम् ॥ नृणां विनाशप्र

य चतुर्दशीषु क्षुर क्रिया स्यात् सकृत्त्वासु ॥ १ ॥ व्यतीपाते च संक्रांता वेकादश्यां च प
र्वसु ॥ अर्क भौम दिने विष्ट्यां नाभ्यं गंनं च वैधृतौ ॥ २ ॥ पर्वाणि ॥ चतुर्दश्यष्टमी
कृष्णा अमावास्या च पूर्णिमा ॥ पुण्यानि पंच पर्वाणि संक्रांति र्दिन पस्य च ॥ ३ ॥
अत्र तिथि स्तात्कालिकी ॥ स्नाने चाभ्यं जने चैव दंत धावन मैथुने ॥ तिथि स्तात्कालि-
की ग्राह्या तथा मरण जन्मनोः ॥ ४ ॥ त्रयोदश्यां द्वितीयायां सप्तम्यां च विशेषतः
॥ षड्विंदुस्त्रियास्नानं नाचरेयुः कदाचन ॥ ५ ॥ कामदुर्गति करविनष्टें दु-
र्के दिने बुध ॥ सकृदामलक स्नानं संपत्पुत्र विनाशनम् ॥ ६ ॥ सप्तम्यष्टम्या नवमी
षु देह श्री संतती रामल कैर्नरस्य ॥ स्नानं निहंत्यंत्य दिने तु धत्ते तिलैः श्रियं पुत्र क-
रंस्तैव ॥ ७ ॥ अथ दग्ध योगाः ॥ एकादश्यां चेन्दु वारे द्वादशी चार्क वासरे ॥ षष्ठी बृ
हस्पते वीरे तृतीया बुध वासरे ॥ ८ ॥ अष्टमी शुक्र वारे च नवमी शनि वासरे ॥ पंच-
मी भौम वारे च दग्ध योगाः प्रकीर्तिताः ॥ ९ ॥ अथ विषयोगः ॥ षष्ठी शशांके नवमी च

शुक्रे बुधे द्वितीया तपने चतुर्थी ॥ जीवेऽष्टमी सौरि कुजेन्हि सप्तमी योगा विनाख्याः कुल नाशनास्स्युः ॥ २० ॥ अथ हुताशन योगः ॥ सप्त षष्ठ्यादि तिथयः सोम वारादि भिर्युताः ॥ अग्नि जिह्वा स्सप्त योगाः मंगले ध्वति गर्हिताः ॥ २१ ॥ अथ यम घंटः ॥ मघा विशाखा आर्द्रा च मूलं ध्रुवंच कृत्तिका ॥ रोहिणी हस्त त्युक्ता यम घंटाः क्रमा द्रवेः ॥ २२ ॥ एतासमपवादः ॥ दिवा मृत्यु प्रदाः पाप दोषा स्त्वे तेन रात्रिषु ॥ शुभ कार्य्ये प्रसूतौच सर्वदा परि वर्जयेत् ॥ २३ ॥ आवश्यक कल्पे ॥ यम घंटे त्यजे दष्टौम त्यौ द्वादश नाडिकाः ॥ अन्येषां पाप योगानां मध्यान्हा त्परत श्शुभम् ॥ २४ ॥ अथ चैत्रादि मासे तिथि शून्याः ॥ अष्टमीनवमी चैत्रे पक्षयो रुभयो रपि ॥ माधवे द्वादशी त्याज्या पक्षयो रुभयोरपि ॥ २५ ॥ ज्येष्ठे त्रयो दशी निंद्या शिते कृष्णे चतुर्दशी ॥ आषाढे कृष्ण पक्षस्य षष्ठी शुक्ले तु सप्तमी ॥ २६ ॥ द्वितीयाच तृतीयाच श्राव- णे शित कृष्ण योः ॥ प्रथमा च द्वितीया च नभस्ये मासि निंदिते ॥ २७ ॥ दशम्ये

कादशी निंद्या मासी ये शुक्ल कृष्णयोः ॥ ऊर्ज्जे चतुर्दशी शुक्ला कृष्ण पक्षेतु पंचमी
॥ १८ ॥ सप्तमी चाष्टमी सौम्ये पक्षयो रुभयोरपि ॥ पौषे पक्ष द्वये चैव चतुर्थी पंचमी त-
था ॥ १९ ॥ माघेतु पंचमी षष्ठी शुक्ले कृष्णे यथा क्रमम् ॥ तृतीयाच चतुर्थीच फा-
ल्गुने सित कृष्णयोः ॥ २० ॥ तिथयो मास शून्याख्या वंश वित्त विनाशकाः ॥ आ-
सु श्राद्धं प्रकुर्वीत नैव सन्मंगलं क्वचित् ॥ २१ ॥ अथ नक्षत्र दोषः ॥ द्वितीयया चानु-
राधा त्र्युत्तराच तृतीयया ॥ पंचमीच मघा युक्ता चित्रा स्वात्यो स्त्रयो दशी ॥ २२ ॥ प्र-
ति पद्युत्तराषाढा नवम्यां कृत्तिका यदि ॥ सप्तम्यां हस्त मूले च षष्ठ्यां ब्राह्मं भवे यदि
॥ २३ ॥ पूर्वाषाढ पदा ष्टम्यां एका दश्यांच रोहिणी ॥ द्वादश्यां च यदाश्लेषा त्रयो-
दश्यां मघा यदि ॥ २४ ॥ एषु कार्य्ये कृते चेत्स्यात्स्व रमा सान्मरणं भवम् ॥ अथ चै-
त्रादि मासे शून्य नक्षत्राणि ॥ अश्विनी रोहिणी चैत्रे शून्ये भे परिकीर्त्तिते ॥ चित्रा स्वाती
च वैशाषे ज्येष्ठे विश्वेज्य तारके ॥ २५ ॥ भग वासव बाषाढे श्रावणे हरि विश्व भे।

॥ नभस्ये वारुणं त्वर्क्षभज पादश्च युग्यपि ॥ २६ ॥ कार्त्तिके पितृब्रह्मर्क्षे सौम्ये चित्रा द्विदैवते ॥ पौषे दस्रक रार्द्रा स्युर्माघे मूलंच विष्णुभम् ॥ २७ ॥ तपस्ये-श्वाक्र भरणी शून्यभान्याकुरग्रजाः ॥ एषु यत्तु कृतं कर्म्म धनेन सह विनश्यति ॥ २८ ॥ अथ चैत्रादि मासेषु शून्य राशयः ॥ घट मत्स्य वृषा युग्म मेष कन्या स वृश्चिकाः ॥ तुला चाप कुली राख्याः मृग सिंहाश्च राशयः ॥ २९ ॥ चैत्रादौ मास शून्या स्याव्वेश वित्त विना शकाः ॥ अथ विषमतिथिषु दग्ध लग्नानि ॥ मृग सिंहौ तृतीयायां प्रथमायां तुला मृगौ ॥ पञ्चम्यां वृधराशी द्वौ सप्तम्यां चाप चंद्रभे ॥ ३० ॥ नवम्यां सिंहकीटाख्यावेकादश्यां सुरेशहे ॥ वृष मीनौ त्रयोदश्यां दग्ध सञ्ज्ञास्त्वमी ग्रहाः ॥ ॥ ॥ दग्ध लग्ने नियत्कर्म्म कृतं सर्वं प्रणश्यति ॥ ३१ ॥ अथैतेषां दुष्टयोगानां आवपूर्वक कृत्ये परिहारः ॥ केन्द्रे चैव त्रिकोणेच शुभेषु पञ्चये ऽपिवा ॥ एकोऽपि बलवान् स्वापि शून्यतिथ्युड्ड नाशकः ॥ ३२ ॥ तिथयो मास शून्याश्च शून्य लग्नानि यान्यपि

॥ मध्य देशे विवर्ज्यानि नदू ध्याणी तरे युतु ॥ ३३ ॥ पंगवंध कारा त्तग्नानि मास शून्या पूर्व रयाय: ॥ गौड मालवयो स्त्याज्या अन्य देशे न गर्हिता: ॥ ३४ ॥ वर्जयेत्स र्व कार्येषु हस्तार्क स्वंच मी तिथौ ॥ भौमाश्विनींच सप्तम्यां षष्ठ्यां चंद्रे दवं तथा ॥ ॥ ३५ ॥ वुधा नुराधा मष्टम्यां दशम्यां भृगुरेवतीम् ॥ नवम्यां गुरु पुष्यं चैका दश्यां श नि रोहिणी म् ॥ ३६ ॥ गृह प्रवेशे यात्रा यां विवाहेच यथा क्रमम् ॥ भौमे ऽश्विनी शनौ ब्राह्मं गुरौ पुष्यं विवर्जयेत् ॥ ३७ ॥ हस्ते रवौ शशधरेण मृगोत्तमां गं भौमेऽ श्विनी वुध दिनेच तथा नुराधा ॥ पुष्ये गुरौ भृगु सुते ऽपिच पौलधिदं म्यरोहिण्य यार्कत नये ऽमृत सिद्धि योगा: ॥ ३८ ॥ यदि विष्टिव्यती पातो दिनं वाप्य शुभं भवेत् ॥ ह न्यते ऽमृत योगेन भास्करेण तमो यथा ३९ अथा नंदादि योगः ॥ आनंद: काल दंडश्च धू म्राक्षो ऽथ प्रजापति: ॥ सौम्यो ध्वां क्षो ध्वज श्चापि श्री वत्सो वज्र मुद्गरौ ॥ ४० ॥ छत्रं मित्रं क्रमे णैव मानस: पद्म लुंव कौ ॥ उत्पात मृत्यु काणा ख्या: सिद्धिश्चैव शु-

भा स्मृतौ ॥ ४१ ॥ मुशलंच गदाख्यश्च मातंगौ रक्ष सथ्चर ॥ स्थिर ॥ प्रवर्द्ध मानश्च नाम तुल्य फला ऽस्मी ॥ ४२ ॥ भानु वारे ऽश्वि नक्षत्रात्सा भिजित्कै प्तत्त सर्व भैः ॥ भवंति क्रम शो योगाः स्त्र ष्टा विंशति संख्य काः ॥ ४३ ॥ मृगा दारस्य रात्री पुरे श्ले-षातः कुज वासरे ॥ हस्ता द्बुधे ऽनुराधायाः गुरु वारे तथैवच ॥ ४४ ॥ उत्तराषाढ त श्शुक्रे शत तारादि तः शनौ ॥ अथैतेषु कियद्दुष्ट योगाः स्थाज्यांशाः ॥ ध्वांक्षेंद्रायुध सुद्गरेषु घटिका स्त्याज्या स्तु पंचा दितः पद्मं लुंबक यो श्च तस्त उदिता धूम्रे सदै का पुनः ॥ द्वेःकाणे मुशला ह्वये ऽपिच गदे संख्ये वति स्त्र ध्वरे म्रत्यू त्पात करक्ष सादिन गता स्त्ताः काल दंडे तथा ॥ ४५ ॥ अथ दोषापवाद भूतार वियोगाः ॥ सूर्य्या च्चतुर्थे दशमेच षष्ठे विश्व र्क्ष के विंशति मे न वर्क्षे ॥ भवंति षड्भानु स दृक्ष योगाः कुयोग विध्वंस कराः प्रदिष्टाः ॥ ४६ ॥ सिद्धि योगः ॥ ज्येष्ठा वाङ्री मघा विशाष वसवो मैत्रं यमाख्य रवौ सोमे सैव वि शाष पुष्य पवना श्चित्रा त्व षाढा द्वयम् ॥ भौमे विश्व जलेश मित्र वसवः प्राग्भाद्र

सर्पो शिवः   शूली रेवति पूर्वयोनि भरणी वस्त्व शिव मूला बुधे ॥ ४७ ॥ जीवे मूल मघार्द्र याम्य वरुणाः पूषा शशी रोहिणी   शुक्रे स्वाति भुजंग दैवत मघा पुष्यो त्तर- रोहिणी ॥ सौरा वर्ष्म मूल हस्त वरुणा षाढा द्वयं रेवती चित्रा विष्णु मघाश्व सर्व समये त्याज्या अयोगा द्वमे ॥ ४८ ॥ अथसिद्धियोगः ॥ सूर्य्येऽर्के मूलोत्तर पुष्य दास्त्रं च न्द्रे श्रुति ब्राह्म शशीज्य मैत्रम् ॥ भौमेश्व्यहिर्बुध्न्य कृशानु सार्प्यं ज्ञे ब्राह्म मैत्रार्क कृ- शानु चांद्रम् ॥ ४९ ॥ जीवेन्त्य मैत्राश्व्य दितीज्य धिष्ण्यं शुक्रेंत्य मैत्राश्व्य दितिश्र- वोभम् ॥ शनौ श्रुति ब्राह्म समीर भानि सर्वार्थ सिद्धौ कथितानि पूर्वैः ॥ ५० ॥ हीशा त्तोया द्दाश्वा वाय्वौरन भाञ्च ब्राह्मा त्पुष्या द्दर्यमर्क्षा च्चतुर्भैः ॥ स्या दुत्पातो मृत्यु काणौ च सिद्धि वारेऽर्कादि तत्फलं नामतुल्यम् ॥ ५१ ॥ कुयोगास्तिथि वारो त्थास्तिथि भोत्था भवारजाः ॥ हूनवंगखसेष्वेव वर्ज्यास्त्रितय जास्तया ॥ ५२ ॥ अथवारन- क्षत्रोत्थ सिद्धियोगः ॥ मूल मर्कें श्रव श्चंद्रे भौमे चोत्तर भाद्रपात् ॥ कृत्तिका बुधवारे

मु गुरु वारे पुनर्वसुः ॥ पूषा शुक्रे शनौ स्वाती सिद्धियोग उदाहृतः ॥ ५३ ॥ अथ तिथि
वारोत्था दुष्टयोगाः ॥ द्वादश्यर्के विधौ षष्ठी भौमे सप्ताष्टमी बुधे ॥ दशै शुक्रे शनौ रुद्रो गु
रौ नव हुता शनौ ॥ ५४ ॥ द्वादश्यर्के विधौ रुद्रो भौमे पंच बुधेऽन्नयः ॥ गुरौ ष-
ष्ट्यष्टमी शुक्रे दग्धाख्यो नवमी शनौ ॥ ५५ ॥ चतुर्थ्यर्के विधौ षष्ठी द्वितीया द्वे-
ऽष्टमी गुरौ ॥ नव शुक्रे विशाखश्च सप्तमी कुज मंदयोः ॥ ५६ ॥ शनौ षष्ठी भृगौ
सप्ताष्टमी जीवे बुधे नव ॥ कुजे दशा विधौ रुद्राः कर्कचो द्वादशी रवौ ॥ ५७ ॥ प्रति
पत् द्वे रवौ सप्त संवर्तौ योग ईरितः ॥ दग्धादीन् तिथि वारोत्थान् त्यजेत् योगान्
शुभे सदा ॥ ५८ ॥ अथ नक्षत्रा द्विद्विशोऽपित्याज्यस्तिथिः ॥ द्वितीया मनुराधायां मघायां
पंचमी तिथिम् ॥ त्यजेत्षष्ठीं च रोहिण्यां पूर्व भाद्र पदेऽष्टमीम् ॥ ५९ ॥ अथमृत्युयोगाः ॥
अनुराधा रवौ सोमे उत्तराषाढ संभवम् ॥ बुधेऽश्विनी मृगो जीवे शुक्रे श्लेषा शनौ
करः ॥ ६० ॥ भौमे शतभिषा चार्ये मृत्युयोगोऽर्थनाशकः ॥ अथ दग्धा तिथि योगः ॥

भरण्य के विधौ चित्रा जीवे चोत्तर फाल्गुणी ॥ भौमे चैवोत्तरा षाढा धनिष्ठा बुधवास-
रे ॥ ६२ ॥ शुक्रे ज्येष्ठा त्वभं मंदे त्वजे देत द्वि दग्ध भम् ॥ अथ त्रिविध गंडांतं ॥ नक्षत्र
तिथि राशी नां गंडांतं त्रिविधं त्यजेत् ॥ ६३ ॥ नव पंच चतुर्थ्यां ते द्वे काद्दे घटिका
मतम् ॥ तावन्मितं ततोऽग्राणां आदा वपि परि त्यजेत् ॥ ६४ ॥ ज्येष्ठा मूल सर्पयोः
संधौ रेवत्य श्विभयो स्तथा ॥ वृश्चिकाख्य धनुः संधौ लग्न स्यैक घटी मतम् ॥ ६५
॥ अथार्द्ध यामः ॥ अर्द्ध यामाः परित्याज्या वेद सप्त द्वि पंचमाः ॥ अष्ट त्रिषष्ठ सख्या
काः क्रम शोर वि वासरात् ॥ ६६ ॥ अथ कुलिक कंटक काल वेला यम घंटा ख्याः त्याज्य मुहू-
र्ताः ॥ मन्वर्क दश नाग तु वेद नेत्र मिताः क्षणाः ॥ कुलिकाख्या रवे वार क्रमतः
कंटका बुधात् ॥ ६७ ॥ गुरो स्तु काल वेला ख्या शुक्राते यम घंटकाः ॥ त्यजेदे-
तान् शुभे कार्य्ये निशी थे तु मुहूर्त कान् ॥ ६८ ॥ अथ दुष्ट क्षणाः ॥ क्षणाः चतुर्दशीः
सूर्य्ये नव द्वादश को विधौ ॥ सप्तमो निशि भौमेन्हि तुर्य्य श्चाथ बुधेऽष्टमः ॥ ६९ ॥

षष्ठ द्वादश कौ जीवे चतुर्थ नवमे भृगौ ॥ शनौ चाद्य द्वितीयौ च त्याज्या दुष्ट क्षणा

अथ दुष्ट क्षण चक्रम्

| सू | चं | मं | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| १४ | ९ | ७ | ८ | ६ | ४ | १ |
| + | १२ | ४ | + | १२ | ९ | २ |

दिवा कुलिकादीनां चक्रम्

| सू | चं | मं | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| १४ | १२ | १० | ८ | ६ | ४ | २ |
| ६ | ४ | २ | १४ | १२ | १० | ८ |
| ८ | ६ | ४ | २ | १४ | १२ | १० |
| १० | ८ | ६ | ४ | २ | १४ | १२ |

रात्रौ कुलिकादीनां चक्रम्

| र | चं | मं | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| १३ | ११ | ९ | ७ | ५ | ३ | १ |
| ५ | ३ | १ | १३ | ११ | ९ | ७ |
| ७ | ५ | ३ | १ | १३ | ११ | ९ |
| ९ | ७ | ५ | ३ | १ | १३ | ११ |

दूमे ॥ ७० ॥ रवौ षट् ६ दश १० सप्त ७ ष्ठ ८ मनु १४ संख्य मुहूर्त्त काः ॥ चंद्रेऽब्धि ४ वसु ८ ष ६ द्वि ध्रुव १३ मनु १४ खेदा ९ र्क १२ संमिताः ॥ ७१ ॥ भौमे द्वि २ त्रि ३ चतुः ४ षष्ठ ६ दश १० संख्या क्षणाः स्मृताः ॥ बुधे वेदा ४ ब्धि २ वस्वंकै मनु १४ दिक् १० प्रमिताः क्षणाः ॥ ७२ ॥ जीवे भूपा १६ ध्वि २ तिथ्यं १५ गई मनु १४ सूर्य्या १२ मिता स्मृते ॥ शुक्रे पंचां

पु॰ के ३° षट् ६ वेद ४ दिग १० र्के १२ मनु १४ संमिताः ॥ ७३ ॥ मंदे भू १ नेत्र २ रुद्रा ११ ष्ट ८ दस्रा १० दित्य १२ मुहूर्तकाः ॥ त्याज्या पंच दशां प्रा चा बुधे रुक्षा

रव्यादिवारे रात्रौ मुहूर्त्ता त्याज्याः ॥

| सू | चं | मं | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| ६ | ४ | २ | ४ | १६ | ५ | १ |
| १० | ८ | ३ | २ | २ | ९ | २ |
| ७ | ६ | ४ | ८ | १५ | ६ | ११ |
| ८ | १३ | ६ | ९ | ६ | ४ | ८ |
| १४ | १४ | १० | १४ | १४ | १० | १० |
| + | ९ | + | १० | १२ | १२ | १२ |
| + | १२ | + | + | + | १४ | + |

क्षरा दुते ॥ ७४ ॥ अथ देश भेदेन त्याज्य दोषाः ॥ विंध्य-हे माद्रि मध्येतु मरा धेय मघंटकः ॥ अंगेषे मत्स्य देशे वा दोष हन्ने तरत्रसः ॥ काश्मीरे कुलिक स्त्याज्य स्त्व-र्द्ध याम स्तु सर्वतः ॥ ७५ ॥ अथ संक्रांतौ त्याज्य कालः ॥ अपने विषुवे त्याज्यं पूर्वं मध्य पदं दिने ॥ शेष संक्रमणे पूर्वं पश्चा त्षोडश नाडिकाः ॥ ७६ ॥ अथ तिथि क्षय वृद्धि दोषः ॥ तिथीनां त्रितयं वार मेर्कस्ट स्पृशति यत्र वै ॥ अव मंत दिनं ज्ञेयं शुभ कर्म्म सुसं त्यजेत् ॥ ७७ ॥ वाराणां त्रितयं यत्र तिथिरेका स्पृशे यदा ॥ त्रिद्यु स्पृशे ति

साख्यातान्यात्यं मंगलादिषु ॥ ७८ ॥ अथ त्रिपुष्कर यमल योगौ ॥ रवि रविज भौम वरि
भद्रायां विषम पाद ऋक्षं चेत् ॥ त्रैपुष्कराख्य योगः त्रिगुण फलो द्विगुण भे जुगल
मृ॥ ७९ ॥अस्यार्थः॥भद्रा तिथौ यदा रवि भौम शनि वारे कृत्तिका·पुनर्वसू·॥ विशाखा उत्तरा
फाल्गुणा पूर्व भाद्र पदा उत्तरा षाढ ॥ एतदृक्षं भवति तदा त्रिपुष्करः यदा पूर्वोक्त ति
थौ वारे मृग शिरः चित्रा धनिष्ठा तदा द्विपुष्करः॥ तत्फलम् ॥ तत्र वृद्धे मृते नष्टे शुभे वा
प्य शुभे पिवा ॥ त्रिगुणं द्विगुणं सर्वं जायते क्रमशः फलम् ॥ ८० ॥ नारदः ॥ तद्यात्त
दोष शांत्यर्थं गोत्रयं मूल्य मेव वा ॥ द्विपुष्करे द्वयं दद्यान्न दोष स्त्वृक्ष मात्रतः ॥
८१ ॥ अथ रव्यादि वारे पुन शुभाशुभ योगः ॥ रवौ हस्ते ऽश्विनी मूलं धनिष्ठा चोत्तरा
त्रयम् ॥ पुष्य स्तथा ष्टमी चैव सिद्धि योगा इमे मताः ॥ ८२ ॥ विशाखा भरणी स्व
र्ये मघा ज्येष्ठा ऽनुराधिका ॥ सप्तमी द्वादशी तद्वद्धि रुद्रा च चतुर्दशी ॥ ८३ ॥ चं
द्रेच श्रवणः पुष्यो ऽनुराधा रोहिणी मृगः ॥ दशमी नवमी वाथ सिद्धि योग शशुभा

वह्नः ॥ ८४ ॥ पूर्वाषाढो त्तराषाढो स्वाती चित्रा विशाखयोः ॥ सोमे चैकादशीषष्ठी वर्जनीया त्रयोदशी ॥ ८५ ॥ भौमे श्लेषाश्विनी मूलं मृग शीर्ष त्रयो दशी ॥ तृतीया चाष्टमी षष्ठी सिद्धिदाकीर्त्तिता बुधैः॥ ८६॥ उत्तरा षाढ भं चार्द्रा धनिष्ठा त्रितयं तथा ॥ द्वितीया दशमी भौमे वर्ज्जनीया प्रयत्नतः ॥ ८७ ॥ बुधे पुष्यो ऽनुराधा च कृत्तिका रोहिणी मृगः ॥ द्वितीया सप्तमी चैव द्वादशी च शुभप्रदा ॥ ८८ ॥ धनिष्ठा भरणी मूलमश्विनी रेवती बुधे ॥ तृतीया प्रति पद्यपि विरुद्धा नवमी स्मृता ॥ ८९ ॥ गुरौ पुष्यो ऽनुराधा च विशाखाश्वि पुनर्वसू ॥ रेवती दशमी चैव पूर्णिमा शुभ दा स्मृता ॥ ९० ॥ जीवे मध्य मीने ष्टा चतुर्थी शत तारका ॥ कृत्तिकादि चतुष्कं च तथा चोत्तर फाल्गुनी ॥ ९१ ॥ शुक्रे चित्रा श्विनी पूर्वा रेवती च पुनर्वसू ॥ श्रवणः प्रतिपत्षष्ठी सिद्धा चैकादशी तथा ॥ ९२ ॥ भार्गवे रोहिणी ज्येष्ठा पुष्यो श्लेषा मघा तथा ॥ द्वितीया सप्तमी चैव विरुद्धा सर्व कर्म्मसु ॥ ९३ ॥ शनौ स्वाती श्रवं पूर्वा फाल्गुनी च त-

या मृगः ॥ चतुर्थी नवमी चापि तिथिः सिद्धा चतुर्दशी ॥ ८४ ॥ पूर्वा षाढो त्तरा षाढा चि-
त्रा हस्तो ऽ थ रेवती ॥ उत्तरा फाल्गुनी षष्ठी निषिद्धा सप्तमी शनौ ॥ ८५ ॥ द्विवेदि कुल सं-
भूत सरयू कृत संग्रहे ॥ शिरो मरणौ समाप्ते षा ऽष्टमी यं प्रभा शुभा ॥ ८६ ॥ दूरि
श्री संग्रह शि रो मरणौ शुभा शुभ कथनं नामा ष्टमी प्रभा ॥ ८ ॥ अथ त्याज्य प्रकरणम् ॥
तिथि नक्षत्र वाराणां दुष्ट योगा न्यरस्यम् ॥ व्यती पातादि दुर्योगान् विष्टी दर्शा र्क संक्रमा-
न् ॥ १ ॥ जन्म र्क्षतिथि मासांश्च तिथ्य र्द्ध मव मन्दि नम् ॥ गंडां तं त्रि विधं दुष्टं क्षीणे न्दुः
पाप कर्त्तरी ॥ २ ॥ पाप ग्रहो दयास्तले वारे या माई कुलिकादि कान् ॥ जन्म राशि विलग्ना
भ्या मष्टमं लग्न मेवच ॥ ३ ॥ दिन मेकं तु मासां ते ब्द स्यांते घटिका द्वयम् ॥ वर्द्ध कै
कं च तिथ्यंते लग्नांते घटिका ईकम् ॥ ४ ॥ विषाख्य नाडिका भानां पात मेका र्गलं तथा
॥ दग्धा हं क्रांति साम्यं च लग्ने शं विमृत्यु गम् ॥ ५ ॥ विनाडि चर जन्म र्क्षे संधौ तु-
पल विंशति: ॥ रोगे त्व त्याग रिष्टानि सूत कं मातु रार्त वम् ॥ ६ ॥ जन्मे ष्वास्तं मनो

भंगं शुभे ब्वेतानि संत्यजेत् ॥ रामः ॥ सर्वस्मिन्विधु पाप युक्त तुलवा वर्द्दै निशान्हो
र्घटी त्र्यं यावै कुन वांशकं ग्रहणा तः पूर्वं दिनानां त्रयम् ॥ उत्पात ग्रहतो ऽघ्र्हां घ्त्र शुभ
दो त्पाते च्त्र दुष्टं दिनं ष रामा संग्रह भिन्न भं त्यज शुभे यौद्वं तयो स्पात भम् ॥ ७ ॥
अस्यार्थः ॥ सर्वस्मिन् इति सर्वस्मिन् शुभे कार्य्ये एतानि वै नि श्चयेन त्यज परिह-
रे त्यर्थः ॥ विधुना पापे न वा पापैः क्षीणे न्दुर्क मही सुतार्क तनये वा युजौ युक्तो तनुल-
वो लग्नलग्नपन वांशौ त्याज्यौ ॥ पूर्णः क्षीणो ऽपि वा चंद्रो लग्ने सर्वत्र गर्हितः ॥ इति
कस्यपोक्तेः ॥ पापेन्दू लग्न गौ वांश गतौ वर्ज्यौ शुभे सदे तिन्त्र ॥ निशान्हो र्दै रन्त्य-
र्द्दै दिनार्द्दै च घटी त्र्यंशं विंशति पलानि दृशा पूर्वं दशा पश्चाच्च परि हर ॥ उक्तंच ॥ सू-
र्तेः कालो निव सति मह्य निशाणां च दिन दले यस्मा द् शा पूर्वं पर स्तस्मा द्वर्ज्यानि च प-
लानि ॥ कुन वांश कं पाप ग्रहन वांश कं परि हर ॥ अथ ग्रहणा तः पूर्वं दिनानां त्रयं परि
हर ॥ उत्पात ग्रहतः उत्पा ताः दिव्य भौमां तरिक्षाः ॥ यस्मिन् दिने भवन्ति ततो ऽघ्र

हांश्च सप्त दिनानि वर्ज्यानि ॥ ग्रहो ग्रहणं तस्मा दपि सप्त दिनानि वर्ज्यानि ॥ उक्तंच ॥
चंद्र सूर्यो परागेषु अहं पूर्वं शुभे त्यजेत् ॥ स प्ताहम शुभं पश्चात् स्मृतं ग्रहण सूत
कम् ॥ त्रि विधोत्यात तश्चोर्ध्व सिंहि का सूनु दर्शने ॥ सप्त रात्रं न कुर्वीत यात्रो द्वाह
दि मंगल मिति ॥ अंगिरा अपि ॥ सर्व ग्रा से तु सप्ताह मर्द्ध ग्रासे दिन त्रयम् ॥ त्रि द्वे कांगुल तो
ग्रासे दिन मेकं विवर्जयेत् ॥ वशिष्ठः ॥ सर्व ग्रासे दिना न्य ष्टौ सर्व कार्य्ये विवर्जयेत् ॥ ष
ट् दिनानि त्रि भागो न अर्द्ध ग्रासे चतुर्दिनम् ॥ चतु र्थांशे त्रिरात्रं स्यात् ग्रहणे चंद्र सूर्य्य
योः ॥ अत्र कार्य्यं स्या वश्यक त्वे परि हारो ज्योति र्नि बंधे ॥ पंच दिना नि वशिष्ठ स्त्रिदि
नं गर्गश्च कौशिक स्त्वेकम् ॥ यवना चार्य्य स्य च मतं पंच मुहूर्त्तानि दूष यति राहुः ॥
अयंच निषेधो नित्यनै मित्ति कादि कृत्याति रिक्त विषयः ॥ गुरुः ॥ नित्यनै मित्ति के का
म्ये जप होम क्रिया सुच ॥ उपा कर्म्मणि चोत्सर्गे ग्रह वेधो न विद्यते ॥ इति शुभ दो त्पाते-
ष्व दुष्टं दिन मिति ॥ शुभ दो त्पाता वाराह संहिता याम् ॥ चंडा प्रानि मही कंप संध्यानि र्घात

निश्वनाः ॥ परिवेष रजो धूम रक्तार्क स्तमनोदयाः ॥ दुर्म्मेध्यान्नरस लोह मधु पुष्प फलोद्गमाः ॥ गो पक्षि मद वृद्धिश्च शुभा यमधु माधवे ॥ इत्यादयः ऋतु परत्वे नोक्ताः यद्दिने एते भवंति तद्दिन मेव त्यज ॥ अथ ग्रहभिन्नभं ग्रहै भौमादिभिर्भिन्नं भेदितं तथा यौद्धं ग्रह योर्युद्धं यस्मिन्दिने नक्षत्रे युद्धं यातम् ॥ तथोत्पातभम् ॥ यस्मिन्नृक्षे दिव्यां तरिक्ष भौमा स्त्रि विधोत्पाताः संभूताः ॥ एतानि ग्रह भिन्न यौद्ध उत्पात नक्षत्राणि षण्मासं त्यज ॥ भेदस्तारा खेट यो यत्र वास्या दिति विवाह चंद्रावने ॥ नारदः ॥ ग्रहणोत्पात भं त्याज्यं मंगलेषु ऋतु त्रयम् ॥ इति ॥ ननु नक्षत्र संधौ जायमाने ग्रहणे किं नक्षत्रं दूषये दित्यत आह ॥ श्रीधरः ॥ यस्मिन्विधुं राहुरिनं चाधिलेग्रहणं ति तत्त्याज्य मृतु त्रयं स्यात् ॥ पाणि ग्रहे पुंमरणं विधत्ते द्वयो र्भयो श्चे द्वय मेव जह्यात् ॥ अन्यच्च ॥ पक्षांतरेण ग्रहणं द्वयं स्या द्यदा तदा तद्ग्रहणे यभं भम् ॥ पश्चाद्धि शुद्धं भवति द्वितीयं पाणि ग्रहे शुध्यति भोग मक्षादिति ॥ ७ ॥ नेष्टं ग्रह र्क्षं सकलं तु पाद नाशे क्रमात

र्क गुरौंदु सासान् ॥ पूर्वं परस्तादुभयोस्त्रिघस्रा ग्रस्तेऽस्तगे वास्युदितेऽर्द्ध खंडे ॥ ८ ॥ अस्यार्थः ॥ नेष्टमिति ग्रहर्क्षं ग्रहण नक्षत्रं क्रमात्संपूर्णार्द्धं चतुर्थांशग्रासे सति षट् त्र्येकमासान्नेष्टम् ॥ गुरुः ॥ सर्वग्रासे सु षण्मासान्त्रीन्मासांस्तु दले ग्रहे ॥ आपाद ग्रहणे धिष्ण्ये मासमेकम् विवर्जयेत् ॥ अथ क्रमात् ग्रस्तेऽस्तगे ग्रहणार्द्ध ग्रासे उभयोः प्राक् पश्चाच्च त्रित्रि घस्रा नेष्टाः ॥ तथा ॥ अर्द्ध खंडे ग्रस्तास्त ग्रस्तोदययोर भावेऽपि ॥ अर्द्ध ग्रासे उभयोः प्राक् पश्चाच्च त्रित्रि घस्रा नेष्टाः ॥ गुरुः ॥ ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा ॥ खंड ग्रासे त्रित्रि दिनं निषिद्धो षे सप्त सप्त च ॥ कश्यपः ॥ ग्रस्तोदये परो दोषो ग्रस्तास्तेऽर्वाक् शशी नयोः ॥ द्युनिशार्द्धे तु भयं तत् खंडी खंड व्यवस्थयो रिति ॥ ८ ॥ जन्मर्क्ष मास तिथ्यो व्यतिपात भद्रा वैधृत्य मापितृ दिनानि तिथि क्षय वृद्धी ॥ न्यूनाधिमास कुलिक प्रहरार्द्ध पात विष्कुंभ वज्र घटिका त्रय मेव वर्ज्यम् ॥ ९ ॥ जन्मर्क्षेति ॥ जन्म नक्षत्र जन्म मास जन्म तिथयः शुभ कर्म्म सुवर्ज्याः ॥ अयं निषेध आद्य गर्भस्यैव ॥ नारदः ॥

न जन्म मासे जन्मर्क्षे न जन्म दिवसेऽपिवा ॥ आद्य गर्भ सुत स्याथ दुहितुर्वा कर न्न-
हः ॥ जन्म मासः स विज्ञेयो वर्जितः सर्व कर्म्मसु ॥ वस्तुतस्तु ॥ यत्र शुक्लादि चांद्र मासे
चैत्रादौ जन्मा भूत् ॥ सचांद्रो मासो जन्म मासः त्याज्यः ॥ इंद्राग्नी यत्र हूयेते मासा
दिः संप्रकीर्त्तितः ॥ अग्नी षोमौ स्मृतौ मध्ये समासः पितृ सोमकः हारीतोक्त मास लक्ष
णम् ॥व्याती पाता द्यय एव वर्ज्याः ॥ पितृ दिन म्माता पित्रो र्म्मरणा दिनम् ॥ श्राद्ध दिन मि-
त्यर्थः ॥ तिथि क्षयर्द्धी तिथि क्षयो वृद्धि श्च तल्लक्षणम् माह वशिष्ठः ॥ स्पृक्ति स्त्र स्तिथ
यो वारे एकस्मिन्नवमा तिथिः ॥ तिथि वार त्रये चैका त्रिद्युस्पृक् द्वेऽपि निंदिते ॥ न्यूनमा-
सः ॥ अधिक मास एव वर्ज्यः संक्रमद्वय सहितः क्षय मासः ॥ असंक्रांतोऽधिक मासः ॥
कुलिकाद्यं प्रहरौ ॥ पातो महापातः विकुम्भयोग वज्र योग यो राद्यं घटिका त्रयं वर्ज्यं ॥
एवं प्रकारेण केश्चिद्दज्र योगेन व घटिका वर्ज्या इत्युक्तम् ॥ यथा ॥ विष्कुंभाद्य घटित्रयं
च नवकं व्याघा तव ज्रोद्भवे ॥ इति धृत शूले तथा व्याघाते वज्रके का इति गणेशज्योति

विंदुक्तिरपि निरस्ता ॥ विष्कुंभवज्रयोस्तिस्रः षट्‌ गंडातिगंडयोः व्याघाते नव शूलेतु पं-
च नाड्यो विगर्हिताः ॥ इति कश्यपोक्तेः ॥ परिघस्याई वर्ज्यं स्यात् शूल व्याघातः पंच गंडातिगंड-
यो स्मृताः षट्‌ षट्‌ घटिकाः व्याघाते चादिमाः नव घटिकाः वर्ज्याः ॥ ९ ॥ वेसंगाख्ये नवा-
केंन्द्र पक्षरं प्र तिथौ त्यजेत्‌ ॥ वस्व क मनु तत्वा शाशरा नाडी पराः शुभाः ॥ १० ॥ वाप्या-
राम तडाग कूप भवनारंभ प्रतिष्ठा व्रतारंभोत्सर्ग वधू प्रवेशान महादानानि सोमाष्टके
॥ गो दाना ग्रयण प्रपा प्रथम कोपा कर्म्म वेद व्रत नीलो द्वाह मथाति पन्न शिशु संस्का-
रान्सुरस्थापनम्‌ ॥ ११ ॥ वाप्या रामेति ॥ वापी दीर्घिका आराम उपवनम्‌ ॥ तडागः पुष्क-
रिणी ॥ कूपः प्रसिद्धः एतेषामारंभ प्रतिष्ठा ॥ आरंभ निर्म्माणं प्रतिष्ठा उत्सर्गः ॥ तत्र गृह प्र-
तिष्ठा गृह प्रवेशो ज्ञेयः व्रतानामनंत व्रतादीनामारंभः ग्रहणम्‌ ॥ उत्सर्ग उद्यापनम्‌
महादानानि तुला पुरुषादीनि सोमः ॥ सोमयागः । अष्टका श्राद्धम्‌ । गोदानं केशांत संज्ञं
कर्म्म । आग्रयणं नवान्नेष्टिः । प्रपा जलशाला । प्रथम कोपा कर्म्म प्रथमारभ्यमाणं श्राव- 

णी कर्म्म वेद व्रतं महानाम्न्यादित्रयम् ॥ महानाम्नी उपनिषद्व्रतम् ॥ वेदव्रतंच नीलो-
द्वाहः ॥ काम्य वृषोत्सर्गः ॥ अति पन्न शिशु संस्कारः अतिपन्नाः अतिक्रांताः जातकर्मा
दयः शिशूनां संस्काराः देव स्थापनम् ॥ ११ ॥ दीक्षा मौंजि विवाह मुंडनम पूर्वन्देव तीर्थे क्ष-
णं संन्या साग्नि परिग्रहौ नृपति संदर्शनाभिषे कौगमनम् ॥ चातुर्म्मास्य समावृती श्रवणयो
र्वेधं परीक्षां त्यजेद्वृद्धत्वास्त शिशुत्व इज्य सितयो र्न्यूनाधि मासे तथा ॥ १२ ॥ अत्र मूलवच
नानि शातातपः ॥ अस्तंगते गुरौ शुक्रे वाले वृद्धे मलिम्लुचे ॥ उद्यापन मुपारंभं व्रतानां नैव
कारयेत् ॥ रत्नोच्चयः ॥ वापी कूप तडाग याग गमनं क्षौरं प्रतिष्ठा व्रतं विद्या मंदिर कर्णवेध-
न महादानं वनं सेवनम् ॥ तीर्थ स्नान विवाह देव भवनं मंत्रादि देवेक्षणं दूरे गोवर्जि जीवि-
ष्णुः परिहरे दस्तं गते भार्गवे ॥ १४ ॥ उपनयनं गोदानं पाणिग्रहणं प्रवेश गमनानि ॥ अ-
स्तमितेषु न कुर्य्यात्सुर गुरु भृगु पुत्र चंद्रेषु ॥ १५ ॥ अस्त मध्यादि फलमाह बादरायणः ॥ गु-
रौ ह्यस्ते पतिं हन्या च्छुक्रास्ते चैव कन्यकाम् ॥ चन्द्रे नष्टे उभौ हन्या त्तस्मा दस्तं विवर्जयेत्

॥ १६ ॥ वाल भावे स्त्रियं हन्या वृद्ध भावे नरं तथा ॥ तस्मा द्वाल्ये च वार्द्धे च विवाहं नै-
व कारयेत् ॥ १७ ॥ अधि मासे वर्ज्यानि गृह्य परि शिष्टे ॥ सोम यागादि कर्म्माणि नित्या-
न्यपि मलिम्लुचे ॥ तथैवा ग्रयणा धान चातुर्म्मा स्यादि का न्यपि ॥ १८ ॥ महा लयाष्ट-
का श्राद्धो पा कर्म्मा द्यपि कर्म्मयत् ॥ स्पष्ट मास विशेषाख्य विहितं वर्जये न्मले ॥ १९ ॥
गर्ग बृहस्पती ॥ अग्न्या धानं प्रति ष्ठांच यज्ञ दान व्रता नि च ॥ वेद व्रत वृषोत्सर्गं चूडा करण
मेव च ॥ मांगल्य मभि षेकं च मल मासे विवर्ज्जयेत् ॥ मरीचिः ॥ २० ॥ गृह प्रवेश
गोदान स्थाना श्रय महो त्सवम् ॥ न कुर्य्या न्मल मासे तु सं सर्प्पां ह स्य तो तथा ॥ २१
॥ वशिष्ठः ॥ वापी कूप तडागादि प्रतिष्ठा यज्ञ कर्म्म च ॥ न कुर्य्या न्मल मासे तु सं सर्पा हस्यतो
तथा ॥ २२ ॥ यदा क्षय मासो भवति तदा क्षय मास स्य पूर्वोत्तरा वधि मासौ भवतः तत्र पू-
र्वः सं सर्पः द्वितीयो हस्पतिः । गार्ग्यः । वाले वा यदि वा वृद्धे शुक्रे वास्तं गते गुरौ ॥ मल-
मास इवै तानि वर्ज्जये द्देव दर्शनम् ॥ २३ ॥ अपूर्व देवतां दृष्टा शुचः सु र्नष्टे भार्गवे ॥

मल मासे त्व नाहृत तीर्थ यात्रां विवर्ज्जयेत ॥ २४ ॥ अना वृत्ता अपूर्व तीर्थ यात्रा ॥ अत्र नि-
यत कालानि सीमंत नाम करणा दीनि ॥ पूर्वा द्दस्तादि सत्वे ऽपि स्व स्वकाल एव कार्य्याणि
॥ २५ ॥ गुरुः ॥ मास प्रयुक्त कार्य्येषु मूढ त्वं गुरु शुक्र यो ः ॥ न दोष कृन्मले मासे गुर्वादि-
त्यादि कं तथा ॥ २६ ॥ अन्य त्रापि ॥ सीमंत यात कादीनि प्राप्तानां तानि यानिवै ॥ न दोषो
मल मासस्य मौढ्यस्य गुरु शुक्रयोः ॥ २७ ॥ वशिष्ठः अतीत काला न्य खिलानि तानि
कार्य्याणि सौम्या यन गे दिने शे ॥ सिते गुरौ वाप्यति दृश्य माने तदुक्त पंचांग दिने प्य-
खंडे ॥ देवी पुराणे ॥ सिंह संस्थे गुरौ यत्नात्सर्वा रं भा न्विवर्जयेत ॥ पुत्र भातृ कल त्राणि
हन्या च्छी घ्रं न संशयः ॥ २९ ॥ कार की व्रजते नाशं संतानं मृयते ऽचिरात ॥ देवा राम
तडागानि प्रपोद्यान रक्षाणि च ॥ ३० ॥ विवाह यज्ञोपनय चूडादि च न सिद्ध्यति ॥ य-
था सिंह स्थितो जीव स्त थैव मकर स्थितः ॥ ३१ ॥ अय मपि निषेधो नियत कालानां न
संग्रहः ॥ वशिष्ठः ॥ नीच राशि गतो जीवः प्रशस्त ःसर्व कर्मसु ॥ नीचे नीचां शा क-

स्त्याज्यो यस्मा देश्येषु नीचता ॥ ३२ ॥ विशेषो मांडव्ये नोक्तः ॥ मघास्थो यदा जीवो वर्जयेत्तं
च सांप्रतकम् ॥ शेषेष्वपि च भागेषु विवाह प्रमुखो भवेन्मतः ॥ ३३ ॥ तोडर नंदः ॥ अति चारे
सप्त दिनं वक्रे द्वादश मेवच ॥ नीचस्थिते ऽपि वा शीघ्रे मास मेकं विवर्जयेत् ॥ ३४ ॥ ज्योति
र्निबंधे ॥ हरिनी चारि आरोऽपि व्रतोद्वाहादि मंगलम् ॥ ननिषिद्धं यदि स्वोच्चे स्वभे वा सं-
स्थितो गुरुः ॥ ३५ ॥ मघां त्यक्त्वा यदा गच्छेत्फाल्गुनीं च बृहस्पतिः ॥ पुत्रिणी धनिनी -
कन्या सौभाग्यं सुख मश्नुते ॥ ३६ ॥ क्वचित् पूर्व तीर्थ यात्रायां मौढ्यादि दोषो नास्ति ॥ गो-
दा वर्ष्यंगिया यांच श्रीशैले ग्रहण द्वये ॥ सुरा सुराणां गुर्वोश्च मौढ्य दोषो नविद्यते ॥ ३७
॥ वायुपुराणे त्रिस्थली सेतौ ॥ गयायां सर्व कालेषु पिंडं दद्याद्विधानतः ॥ अधि मासे जन्म दिने
ऽस्तेच गुरु शुक्रयोः ॥ ३८ ॥ नत्यक्तव्यं गया श्राद्धं सिंहस्थेच बृहस्पतौ ॥ अधिमासे सिं-
ह गुरा वस्ते च गुरु शुक्रयोः ॥ ३९ ॥ तीर्थयात्रा न कर्त्तव्या गंगां गोदावरीं विना ॥ वास्त्वःव-
काति चारे गुरा वपि गुर्वा द्यस्त वद्वर्ज्यम् ॥ मात्रो द्वाह प्रति ष्ठांच ग्रह चूडा व्रता दिकम् ॥

वर्ज्जयेद्य त्न तस्मैव जीवे वक्रातिचारगे ॥ ४० ॥ अस्यापवादो राजमार्त्तण्डे ॥ वक्रातिचार
गे जीवे वर्जयेत्तदनंतरम् ॥ व्रतोद्वाहादि चूडाया अष्टविंशति वासरान् ॥ अथ दीपिकायाम्
त्रिकोणजाया धनलाभराशौ वक्रातिचारेण गुरुः प्रयातः ॥ यदा तदा प्राह शुभं विलग्नं
विवाहपाणिग्रहणं वशिष्ठः ॥ ४१ ॥ गुर्वादित्वेऽपि सर्वं शुभकर्म वर्ज्यम् ॥ शौनकः ॥ एकराशि
गतौ सूर्य्य जीवौ स्यातां यदा पुनः ॥ व्रतबंध विवाहादि शुभकर्म्म विवर्ज त्यजेत् ॥ ४२ ॥
विश्वघस्र पक्षेऽपि यस्मिन्य क्षेतिथि द्वय नाशः त्रयोदश दिनः पक्षः सोऽतिनिंद्यः ॥ उक्तंच ॥
पक्षस्य मध्ये द्वितिथी व्यपेतौ तदा भवेद्रौरव कालयोगः ॥ पक्षे विनष्टे सकलं विनष्ट मि
त्याहु राचार्य्यवरास्स मस्ताः ॥ ४४ ॥ तथा ॥ त्रयोदश दिने पक्षे तदा संहरते जगत् ॥ अ
पि वर्ष सहस्रेण कालयोगः प्रकीर्त्तितः ॥ ४५ ॥ तस्मिन्पक्षे शुभकर्म वर्ज्यं चंडेश्वरः ॥ त्र
योदश दिने पक्षे विवाहादि न कारयेत् ॥ गर्गादि मुनयः प्राहुः कृते मृत्यु स्तदा भवेत् ॥
उपनयनं परिणयनं वेश्मारंभादि पुण्य कर्म्माणि ॥ चान्द्र द्विक्षय पक्षे कुर्य्यान्नजिजी

विष्णुः पुरुषः ॥ ४७ ॥ अस्मिन्नूनाधिकं मपित्याज्यम् ॥ राजमार्तंडः ॥ यात्रां चूडां वि-
वाहं श्रुति विवर विधिं शंख सत्र प्रवेशः । माघा शोधाच हर्म्यं सुरनर भवनारंभ विधा
विधेनि॥मौंजीबंधं प्रतिष्ठां मणिक नकरदा धारणं कुर्वते ये मृत्युः सिंहस्थिते ज्ये गुरू-
दिन करयोरेकराशि स्थयोश्च ॥ ४८ ॥ सिंहस्थे गुरौ सत्यपि सिंहांशोस न्यं शून्यो
दृपणं शो॥१३।२० भ्यो ५नं तरं सर्व्वं शानं शून्यम् ॥ पंचमो नवांश सिंहांशःतत्र गुरौ सति
विवाहो नेष्टः ॥ सिंह राशौ तु सिंहांशे यदा भवति वाक्पतिः ॥ सर्वदेशेष्वयं त्याज्यो दं-
पत्यो निधन प्रदः॥ इति राजमार्तंडः ॥ सिंहेपि भग दैवत्ये गुरौ पुत्र वती भवेत् ॥ अत्यंत
शुभगा साध्वी धन धान्य समृद्धिदा ॥ ४९ ॥ अथ देशभेदात् लक्षः ॥ गोदावर्युत्तरे
तीरे यावद्भागीरथी तटम् ॥ नेष्टस्तत्र विवाहादि सिंहस्थे ज्ये सदाबुधैः॥ ५० ॥ वसि-
ष्ठः॥ भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा ॥ विवाहो व्रत बंधो वा सिंहस्थे ज्येन दु-
ष्यति ॥ ५१ ॥ अत्र विवाह व्रत बंधान्यत मशुभ कर्माणि निषिद्धान्येव ज्योतिर्निबंधे ॥ मंग-

लानीह कुर्वीत सिंहस्थो वाक्पतिर्यदा ॥ भानौ मेषगते सन्ध्यि त्याक्तु यशोन कारयः ॥ ५२ ॥ कुत्रापि मकरस्थोऽपि न वर्ज्यः स्वल्पः ॥ नर्म्मदा पूर्वभागेतु शोणास्योत्तर दक्षिणे ॥ गंडक्याः पश्चिमे भागे मकरस्थो नदोषभाक् ॥ ५३ ॥ अन्यदपि ॥ मागधे गौड देशेच सिंधु देशे च कोंकणे ॥ व्रतं चूडां विवाहंच्च वर्ज्जये न्मकरे गुरौ ॥ ५४ ॥ लुप्तवत्सरेऽपि शुभकर्मे निंद्यः ॥ अति चारगतो जीव स्तं राशिं नैति चेत्पुनः ॥ लुप्तः संवत्सरो ज्ञेयो गर्हित स्सर्व कर्म्मसु ॥ ५५ ॥ गुरुः ॥ मेषे वृषे मृगे कुंभे यद्यती चारगो गुरुः ॥ न तत्र काल लोप स्स्या दित्याह भगवान्मः ॥ ५६ ॥ दश मासोत्तरं न दोषः च्यवनः ॥ मासा न्दशैकादश वा प्रभुज्य राशेर्यदा राशि मुपैति जीवः ॥ भुक्तेन पूर्वं च पुन स्तथापि न लुप्त संवत्सर माहु रार्य्याः ॥ ५७ ॥ देशभेदेन परिहारः ॥ लुप्त संवत्सरो रेवा नर्म्मदा सुरनिम्नगा ॥ भागीरथी तयोर्मध्ये रंतरे ऽति निषिद्धः ॥ ५८ ॥ उक्तंच ॥ लुप्ताब्दे दोषोऽत्रि मतेन मध्ये सोमोद्भवाया स्सुरनिम्नगायाः ॥ इति नारदः ॥ समहष्टि गुरौ प्रयुक्ते तन्मासे तु प्रयत्नतः ॥ विवाहादि न कुर्वीत नर्म्मदा तीर उत्तरे ॥ ५९ ॥ द्विवे

दि कुल संभूत सरयू कृत संग्रहे शिरो मर्मो सभा देषा नवकीम त्रभा शुभा ॥ ९० ॥ इति श्री संग्र-
ह शिरो मर्मो वर्ज्य कथनं नाम नवमी प्रभा ॥ ९ ॥ अथ लग्न प्रकरणम् ॥ मेषो वृषोऽथ मि-
थुनं कर्कः सिंहोऽथ कन्यका ॥ तुला च वृश्चिको धन्वी मकरः कुंभ मीन कौ ॥ १ ॥ राश-
यस्तु क्रमा देते पुंस्त्रियौ क्रूर संज्ञकौ ॥ ज्ञेयः चर स्थिर श्चैव द्विस्व भावः क्रमात्पुनः ॥ २ ॥
पृष्ठोदया धनुर्मेषौ मकरो वृष कर्कटौ ॥ उभयो दय वान्मीन स्ततोऽन्ये मस्त कोदयाः ॥ ३ ॥
मेषो वृषो धनुर्युग्मं कर्क न क्रौनि शावलः ॥ दिवा बलास्तु तेभ्योऽन्ये स्व स्व काले बला धिकाः
॥ ४ ॥ अथ राशि स्वामिनः ॥ मेष वृश्चिक यो र्भौमिः बुधो मिथुन कन्ययोः ॥ तुला वृष भयो शुक्र-
कः कर्क टस्यतु चंद्रमाः ॥ ५ ॥ सिंहस्या धि पति स्सूर्य्य स्शनि र्मकर कुंभयोः ॥ स्यान्मीन धनु-
षोर्जीव श्चैते राशी श्वरा मताः ॥ ६ ॥ अथ ग्रहो च्चानि ॥ मेषो वृष स्तथा नक्रः कन्या कर्की झ-
ष स्तुला ॥ सूर्य्या दीनां क्रमा देते कथिता उच्च राशयः ॥ ७ ॥ पर मोच्चांशकः सूर्य्यादि ग्रो रामग-
जाश्विनः ॥ बाण चंद्र शर श्शैल दृश्राः स्वाश्वि मिताः क्रमात् ॥ ८ ॥ अथ नीचम् ॥ सूर्य्या

दीनां जगु नीचं सोच्च भाग च्च सप्तमम् ॥ राहोस्तु कन्यका गेहं मिथुन स्वोच्च भं स्मृतम् ॥
९ ॥ अथ मूल त्रिकोणम् ॥ सिंहो वृषभ मेषाख्यं कन्या धन्वि तुला घटाः ॥ रव्या दीनां क्रमान्मू-
ल त्रिकोण राशयः स्मृताः ॥ १० ॥ अथ मेषादि लग्न कृत्यानि ॥ धाक रौ धातु कर्म्माणि भूमि पा-
लाभि षेचनम् ॥ निरोध स्साह सं चैते मेष लग्ने प्रसिद्ध्यति ॥ ११ ॥ क्षेत्र कूपा दिकं दानं कुमा-
री वरणं भ वस्रागरह प्रवेश उत्साह सिद्धि वैत वृषो दये ॥ १२ ॥ कला विभूषा विज्ञानं यत्कार्य्यं शुभ
भो दितम् ॥ तत्सर्वं मिथुने मोक्ष हो राणां त्वाविच क्षणैः ॥ १३ ॥ वारि बंधन मोक्षंच पौष्टिकं
चर कर्म्मच ॥ वापी कूप तडागा दीन् कर्कटे कथितं बुधैः ॥ १४ ॥ राज सेवा कृषि : पण्यंपर
यो गोवणिकाः ॥ सिंहे सिद्ध्यति तत्सर्वं मेष लग्नो दितं चयत् ॥ १५ ॥ भूषणं शिल्प विद्या-
नं औषधं पौष्टिकं तथा ॥ चर स्थिर च यत्कृत्यं कन्या लग्ने प्रसिद्ध्यति ॥ १६ ॥ वाणिज्यं क-
र्षणं सेवा यात्रा भांड तुला क्रयम् ॥ तुला लग्ने समाख्याता मुनि भि स्तत्त्व वेदिभिः ॥ १७
॥ राज सेवा भिषे कौर्य साहसं दारुणं तथा ॥ उग्रं चौर्य्यं स्थिरं कर्म्म कर्त्तव्यं तत्त्वरी हृषे ॥ ६९

मु.चि. ७०

१८ ॥ उद्वाहः पौष्टिकं यात्रा वाहनाग्नि परिग्रहौ धनुर्लग्ने चरं कर्म्म कथितं पूर्व सूरिभि : ॥
१९ ॥ दासी चतुः पदो ह्लादि शंभ सो वंध मोक्षणम् ॥ तथा क्षेत्रा श्रयं यात्रा पयसो मकरो
दये ॥ २० ॥ बीजोप्ति संगृहो नौकाचर्य्या वारिगमादिकम् ॥ पशु कर्म्मी वुकार्य्यंच कुंभ लग्ने
प्रकीर्त्तितम् ॥ २१ ॥ उद्वाह श्चाभिषे कश्च विघा लंकरणा दिकम् ॥ द्विरा गमं कृषि श्चा-
न्न प्राशनं मीन माश्रितम् ॥ २२ ॥ मेषा दिकेषु शुद्धेषु यथोक्तं कर्म्म सिद्ध्यति ॥ पापेक्षि
त युते ष्वेषु क्रूरं सिद्ध्येन्नचेतरम् ॥ २३ ॥ अथ लग्न भुक्ति प्रमाणम् ॥ तिस्रो मीने च मेषे-
च घटी प्रोक्ता चतुः पलाः॥ चतस्र श्च वृषे कुंभे पलाः प्रोक्ताश्च षोडश ॥ २४ ॥ मकरे
मिथुने पंच घटिकाच चतुःपलाः ॥ पंच कर्के च चापे च प्रोक्ता वेदाः पलाः स्मृताः ॥ २५
॥ घटिका पंच सिंहे ऽलौ प्रोक्ता वेदाः पलाः स्मृताः ॥ कन्यायांच तुले पंच पलाश्चन्द्रा-
स्तथा ग्नयः ॥ २६ ॥ अथ षड्वर्गाः ॥ षड्वर्गौ गृह होराख्ये द्रे: काणोऽथ नवांशकः ॥ द्वा-
दशांशा स्तथा त्रिंशांशा श्च शुभ जः शुभः ॥ २७ ॥ त्रिंशद्भागात्मके लग्नं होरा तस्यार्द्ध ७०

सुच्यते ॥ लग्नत्रिभागो द्रेष्काणो नवमांशो नवांशकः ॥ २८ ॥ द्वादशांशो द्विषड्भागः त्रिंशांशः त्रिंशभागकः ॥ यस्य ग्रहस्य यो राशिस्तस्य तद्गृहमुच्यते ॥ २९ ॥ सूर्येन्द्वोर्विषमे लग्ने होरा चन्द्रार्कयोः समे ॥ द्रेष्काणेशाः क्रमाद् दायपंचांकभवनेश्वराः ॥ ३० ॥ धनुः सिंहो ऽथ मेषश्च मेषाद्यास्तु नवांशकाः ॥ वृष कन्या मृगे लग्ने मकरान्नवमांशकाः ॥ ३१ ॥ कर्कालि मीन लग्नेषु नवांशाः कर्कतः स्मृताः ॥ नृयुग्म तौलि कुंभेषु तौलितस्तु नवांशकाः ॥ ३२ ॥ कर्काद्यास्ते तु विज्ञेया मीन वृश्चिक कर्कटे ॥ द्वादशांशो यथा संख्यं विज्ञातव्यं स्वराशितः ॥ विषमर्क्षे तु वाराक्षः वसु शैल शराः क्रमात् ॥ ३०॥

| होरा विषमराशौ | | | समराशौ | |
|---|---|---|---|---|
| ग्रह | सू. | चं | चं | सू |
| अंश | १५ | ३० | १५ | ३० |

| द्रेष्काणेशाः | | | |
|---|---|---|---|
| | १ | ५ | ९ |
| अंश | १० | २० | ३० |

| अथ षड्वर्गचक्रे ग्रहस्वामिनो लिख्यंते ॥ | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशि | मे | वृ | मि | क | सिं | कं | तु | वृ | ध | म | कुं | मी |
| स्वामी | मं | शु | बु | चं | सू | बु | शु | मं | गु | श | श | गु |

५।५।८।७।५॥ भौमार्कीज्य ज्ञ शुक्राणां त्रिंशांशाः परिकीर्तिताः ॥ समर्क्षे तु शर

अथ नवमांश भागाः

नवमांशाः निजतो विज्ञेयाः

| संख्या | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | मेषाः | कर्काः | तुलाः | मकराः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अंशाः | ३ | ६ | १० | १३ | १६ | २० | २३ | २६ | ३० | १।९। | ४।८ | ७।३। | १०।२ |
| | २० | ४० | ०० | २० | ४० | ०० | २० | ४० | ०० | ५ | १२ | ११ | ६ |

भाव वसु शराः तंप्र काः ५।७। ८।५।५ ॥ ३१ ॥ शुक्र सौम्यांगिरो मंद भौमा गाच

द्वादशांशाः स्वराशितो ज्ञेयाः

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २ ३० | ५ ० | ७ ३० | १० ०० | १२ ३० | १५ ०० | १७ ३० | २० ०० | २२ ३० | २५ ०० | २७ ३० | ३० ०० |

विषम राशौ त्रिंशांशादु से सम राशौ त्रिंशांशाद् से

| स्वामि | मं | श | गु | बु | शु | शु | बु | गु | श | म | स्वामि |
|---|---|---|---|---|---|---|---|---|---|---|---|
| अंशाः | ५ | ५ | ८ | ७ | ५ | ५ | ७ | ८ | ५ | ५ | अंशाः |

यथा क्रमात् ॥ अथ जन्मादि भाव संज्ञा ॥ तनु १ धनं २ सहोत्थाख्यं ३ सुहृत् ४ पुत्रो ५ रि ६ योषितः ७ ॥ निधनं ८ धर्म ९ कर्म १० य ११ व्यया १२ भावास्तनोः क्रमात् ॥ ३२ ॥ केन्द्रं पणं फरं चापोक्लिमं लग्नात्सुनः पुनः ॥ नवमं पंच मस्थानं

त्रिकोण स्थान मित्यपि ॥ ३३ ॥ त्रि दशै का दशं षष्ठं प्रोक्तं चोप चया ह्वयम् ॥ या मि-
त्रं सप्त मं घूनं छिद्रं च मदना ह्वयम् ॥ ३४ ॥ रिष्फं तु द्वादशं ज्ञेयं दुश्चिक्यं स्यात्तृतीयकम्
॥ चतुर स्रं तुरी याष्टं संख्यं रंध्र मथाष्टमम् ॥ ३५ ॥ अथ वर्गोत्तम नवांशः ॥ आद्य पूर्वरे नवांश
स्स्यात्स्थिरे षष्ठे तु पंचमाः ॥ नवमो द्विः स्वभावाख्ये शुभो वर्गोत्तम स्त्वयम् ॥ ३६ ॥ अ-
थ साधारण शुभ कार्ये लग्न ग्रह बलम् ॥ सर्वेषु शुभ कार्येषु नेष्टाः खेटाः व्ययाष्टगाः ॥ लग्ने
पापा रिपौ सौम्याः पापाः केंद्र त्रिकोण गाः ॥ ३७ ॥ सौम्याः केंद्र त्रिकोण स्थाः पापा
स्तु त्रिखछाय गाः ॥ ते सर्वे लाभगाः खेटाः श्रेष्ठा स्स्यु श्शुभ कर्मणि ॥ ३८ ॥ भावः
स्वपतिना सौम्यैर्दृष्टो युक्तो बलाधिकः ॥ पूर्णं फलं निजं धत्ते व्यस्तं पापैर्युते क्षितः ॥ ३९
॥ लग्ने षड्वर्ग सं शुद्धे प्रोक्त स्थान स्थिते ग्रहे ॥ शुभ र्क्षतिथि वारे षु कार्य्याः सर्वाः शुभाः
क्रियाः ॥ ४० ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्तैषा दशमीयं प्र
भाशुभा ॥ ४१ ॥ इति श्री संग्रह शिरो मणौ लग्न कथनं नाम दशमी प्रभा ॥ १० ॥

ये ॥ अश्विभेऽर्के कवीज्या रेवास सांरंजनं शुभम् ॥ ३३ ॥ अथ सूची कर्म ॥ मृगश्विन्यानु-
राधाश्विपुष्यांतं रेवती करः ॥ ज्येष्ठा राद्रा सरा स्त्वार्काः सूची कर्म्मणि सस्मृता: ॥ ३४ ॥
अथ वस्त्रक्षालनम् ॥ पुनर्वसु हृदेऽश्विन्यां धनिष्ठा हस्त पंचके ॥ हित्वार्का र्कि बुधान् रि-
क्तां षष्ठीं श्राद्ध दिनं तथा ॥ ३५ ॥ व्रतं पर्वन्च वस्त्राणि क्षालयेद्रज का दिना ॥ ३५ ॥ अथो
पानत्परिधानं चर्म कृत्यं च ॥ चित्रा पूर्वानुराधार्द्रा ज्येष्ठा श्लेषा मघा मृगे ॥ विष्णवा कृत्ति-
का मूले रेवत्यां न्वार्कि सूर्य्ययोः ॥ ३६ ॥ उपानत्परिधानं च चर्म कर्म्माणि सस्मते ॥ अथ
वितान तूलिकोपधानादि निर्म्माणम् ॥ कुर्य्याद्र स्त्री दिते धिष्ण्ये तूलिका सुपधान कम् ॥ विताना
धं च वधीयात् ऊर्द्ध मूर्द्ध मुखोडुषु ॥ अथ वस्त्र मय गेह निर्म्माणम् ॥ श्रुति त्रये ऽश्विनी पुष्ये
ऽनुराधा रोहिणी मृगे ॥ हस्त त्रये पुन र्भेऽन्त्ये त्र्युत्तरे पट वेश्म सत् ॥ ३७ ॥ अथ सुगंध भो-
गः ॥ श्रुति त्रयेऽश्विनी पुष्ये पूर्वाषाढा नुराधयोः ॥ हस्त त्रये पुन र्भेऽन्त्ये मृग स्वेच शु
भे हनि ॥ ४० ॥ चंद नागरु कस्तूरी पुष्पाणां धारणं शुभम् ॥ अथ शय्या रंभः ॥

रोहिणी चोत्तरा ज्ञेया हस्त पुष्य पुनर्वसू ॥ अनुराधाश्विनी शस्ता खड्ग निर्म्माण कर्म्मणि ॥ ४२॥ शुभे योगे शुभे वारे विदध्या त्खड्ग कां नरः ॥ नस्मृत के तथा ज्ञेया श्लक्ष्णकाविधि वैधृतौ ॥ ४३॥ पितृ पक्षे विशेषेण यत्नात्तां परि वर्जयेत् ॥ श्रावणे चैव पौषेच भाद्रे मा स्य शुभे हनि ॥ ४४ ॥ वर्ज्जयेद्भौम मंदेच खड्ग निर्म्माण कर्म्मणि ॥ सूर्य्य र्क्षात्तु चतुष्कंच दैंय धिलंतु मस्तके ॥ ४५॥ कोणयो रष्ट नक्षत्रं शाखाया मष्ट संख्यकम् ॥ खड्ग मध्ये त्रिकं चैव वेद संख्याच्च पादयोः ॥ ४६ ॥ तूल्यं खड्ग फलं चक्रे वार हेण च भाषितम् ॥ मस्तके च शुभं ज्ञेयं कोणयो रष्ट मृत्युदम् ॥ ४७ ॥ शाखाष्टकं शुभं प्रोक्तं त्रिकं मध्ये सुखप्रद म् ॥ पादेषु वेद नक्षत्रं हानि मृत्यु भय प्रदम् ॥ ४८ ॥ सूर्य्य भा द्दिन भं गणयं खड्ग चक्रे विशेषतः ॥ अथ पादुकाधारणादि आरंभः ॥ मैत्रेन्दु पुष्य यम भादिति वह्नि चित्रा हस्तोत्तरा त्रय हरीज्य विधात भानि ॥ एते ध्वती व पाय नाशन पादुकानां संभोग कार्य्य मुदितं मुनिभि - रशुभाह्ने ॥ ४९ ॥ अथ भूषा घट्टनम् ॥ त्रिपुष्करा भिधे योगे अश्विनी रेवती द्वये॥ श्रुतित्रये मृगेत्तु

णां जनयोर्द्युतिः ॥ १५ ॥ अथ नववस्त्र विकृतौ फलम् ॥ वास सो नवधा भागे चतुः कोणेषु देव-
ताः ॥ मध्य त्र्यंश स्थितं रक्षो नराः पार्श्व दशांतयोः ॥ १६ ॥ दग्धे जीर्णे नवे वस्त्रे लि-
प्ते वा कर्द मादिभिः ॥ सर्वं प्रति ध्वसत् चैव प्राय नाशान पादुके ॥ १७ ॥ कज्जल क-
र्दम गो मय लिप्ते वाससि दग्ध वति स्फुटिते च ॥ चिंत्य मिदं नवधा विहिते तन्निष्ठ मनि-
ष्ठ फलं च सुधीभिः ॥ १८ ॥ शंख चक्रां वुज छत्र ध्वज तोरण सन्निभा ॥ श्रीवत्स स-
र्व तो भद्र नंद्या वर्त्त शरहोपमा ॥ १९ ॥ वर्द्धमान स्वस्तिका भ मृग कूर्म्म रूपा कृतिः ॥
छेदा कृति र्दैत्य भागेऽप्याशुरर्थ प्रदा नृणाम् ॥ २० ॥ खरोष्ट्रोलूक का कादि जंबूकम्बर
को पमाः ॥ त्रिकोण सूर्प्या कृतयो देव भागेप्य शोभनाः ॥ २१ ॥ निंदितं वसनं दद्या द्वि-
जेभ्यः स्वर्ण संयुतम् ॥ आशिषो वाचनं कृत्वा त्वन्य द्वस्त्रं च धारयेत् ॥ २२ ॥ अथ मुहू-
र्त्तं विनापि वस्त्र धारणम् ॥ विप्रा ज्ञया तथो द्वाहे राज्ञा प्रीत्यार्पितं च यत् ॥ निंद्येऽपि धिष्ण्ये
वा वादो वस्त्रं धार्य्यं जगुर्बुधाः ॥ २३ ॥ अथ वस्त्र विशेष विशेषः ॥ शुक्ल वस्त्रोक्त भे धार्य्यं र-





वौ शुक्रे गुरौ बुधे ॥ विशुक्रे कर्बुरं पीतं सभौमे रक्तमं वरम् ॥ २५॥ अथ कृष्णनीलम् ॥
पुनर्वसु धनिष्ठाख्ये ऽश्विभे हस्ता च्चतुष्टये ॥ पूर्वोत्तरे भानौ सूर्ये कृष्ण नीलं वरं शुभम्
॥ २६ ॥ अथ दुकूलम् ॥ जीवे ऽर्के ऽब्जे बुधे शुक्रे वस्त्रोक्त र्क्षे ष्वथान्विते ॥ स्थिरे गे सद्गृहे युक्ते
के यद्दुकूलस्य धारणम् ॥ २७ ॥ अथ कौशेयम् ॥ अश्विनी रेवती हस्ते रोहिण्यां श्रवण त्रये
॥ पूर्वोत्तरे पुनर्वस्वोः स्वाती पुष्ये मघाभिधे ॥ २८॥ रवौ चंद्रे गुरौ धार्यं कौशेय वसनं जनैः
॥ अथ रोमजं वस्त्रम् ॥ नील वस्त्रो दिते धिष्ने रेवती पुष्ययो रपि ॥ शुक्रे मंदे रवेरे ऽर्के च धार
ये द्रोम जं वस्त्रम् ॥ २९॥ अथ सतूलकं चुक धारणम् ॥ पुष्योत्तर त्रय धंजे धनिष्ठा श्वि कर त्रये ॥
रोहिण्यां गुरु शुक्राब्जे देहे दुर्ग धृतिः शुभा ॥ ३० ॥ अथ स्वर्ण रजत तंतु मय वस्त्र परिधानम् ॥
सुवर्ण तंतु संमिश्रं धारणं च रवौ कुजे ॥ रजत तंतु शुक्रे ऽब्जे वस्त्र धारण मे शुभम् ॥ ३१
॥ अथ वस्त्र निर्माणम् ॥ रोहिणी रेवती [illegible] भोत्तरे ॥ शनिं हित्वा विदध्यात्तु तंतु-
भिः पटसाधनम् ॥ ३२ ॥ अथ कुसुंभादि वस्त्र रंजनम् ॥ पुनर्वसु द्वये हस्ता त्पंच के श्रवण द्व-

अथ मुहूर्त्त प्रकरणम् ॥ अथ नूतन वस्त्रा लंकारादि धारणम् ॥ हस्तादि पंचके पुष्ये धनिष्ठा रेवती द्वये ॥ त्र्युत्तरे च पुनर्वस्वोः रोहिण्यां च शुभे तिथौ ॥ १॥ बुधे शुक्रे ज्य वारेषु नूतनां वर धारणम् ॥ सौ वर्णं रत्न दंतादि प्रवालानां धृति श्शुभा ॥ २॥ भागुरु धिस वारेष स्वर्णी-धा भरणा दिकम् ॥ रक्तं वासो बुधे ह्यार्य्ये भौम भास्कर योरपि ॥ ३॥ शुभ गाथाः विशेषः ॥ रोहिणी गुरु पुनर्वसू नरे या विभर्त्ति नव वस्त्र भूषणम् ॥ सान योषि दव लंवते पतिं स्नान माचरति वारुणेषि या ॥ ४॥ अथान्न वार फलम् ॥ जीर्णं मर्को विधु स्त्वार्द्र भौम दुःखो कं बुधो धनम् ॥ गुरु ज्ञानं श्रिया वाप्ति भार्गवे मलिनं शनौ ॥ ५॥ कुर्वन्ते वासस्स्वे ते नूतनां वर धारणात् ॥ अथर्क्ष फलम् ॥ वस्त्र स्याश्वि न्या श्रिन्यां भरण्यां नदि नाशनम् ॥ कृत्तिकाग्नि भयं कुर्य्या द्रोहिण्यां सर्व संपदः ॥ ६॥ मृगे मूषक भीति स्या दार्द्रायां निधनं भवेत् ॥ पुनर्वसौ तथा पुष्ये धन धर्म्म महोत्सवाः ॥ ७॥ अश्लेषायां भवेच्छो को मघायां मरणं ध्रुवम् ॥ राज्ञो भयंतु पूफाया मुत्तरा यां धना गमः ॥ ८॥ कर्म्म सिद्धि स्तु हस्त र्क्षे चित्रायामिष्ट सं-





पदः ॥ मिष्ट भोजन दा स्वाती विशाखा नंद दायिनी ॥ ९॥ मित्राप्तिरनुराधायां ज्येष्ठायां वास सोहृतिः ॥ जलप्लुतिश्च मूलर्क्षे पूर्वाषाढाति रोगदा ॥ १०॥ मिष्टान्नदोत्तराषाढा श्रवणे नयनांतकृत् ॥ धान्यागमो धनिष्ठायां विष भीति प्रशता भिधे ॥ ११ ॥ पूर्वभाद्रे जला द्भीति रुत्तरायां धनागमः ॥ रत्ना वाप्तिस्तु रेवत्यां भवेद्वस्त्रस्य धारणात् ॥ १२ ॥ अथ वस्त्राभरणादि धारणे स्त्रीणां विशेषः ॥ अश्विन्यांच धनिष्ठायां रेवत्यां करपंचके ॥ सुवर्ण रत्न दंतादि वस्त्राणां धारणं स्त्रियः ॥ १३॥ अथ चूरी चक्रम् ॥ यावद्भास्कर भुक्ति भानि दिव से धिष्ण्यानि संख्या तथा ॥ वन्हि ३ भूत ५ गुण ३ ब्धि ४ सप्त ७ नयनं २ पृथ्वी १ करे २ न्दुः १ क्रमात् ॥ ॥ सूर्य्यारौ कविसौम्य राहु रविजाः जीवः शशी केतवः ॥ क्रूरे ऽसच्च शुभे शुभञ्च कथितं चक्रे करे भूषणे ॥

सूर्य्यभात् चूरी चक्रम् ॥

| ३ | ५ | ३ | ४ | ७ | २ | १ | २ | १ |
|---|---|---|---|---|---|---|---|---|
| सू | मं | शु | बु | रा | श | गु | चं | के |

॥ १४ ॥ अथ कज्जला दर्श कृत्यम् ॥ चित्रा चतुष्टयेऽश्विन्यां धनिष्ठा रेवती मृगे ॥ शुक्रे ऽर्केन्हि प्रानो स्त्रीणां दर्श

ष्ये पुनर्वस्वऽनुराधयोः ॥ हस्त त्रयेऽथ रोहिण्यां भूषा कार्य्या शुभे हनि ॥ ५० ॥ अथ रत्न युक्त भूषा घट्टनम् ॥ कृत्तिकादि त्रये हस्त पंचके रेवती द्वये ॥ श्रुति त्रये पुनर्वस्वोः पुष्य भेचो-त्तरा त्रये ॥ ५१ ॥ कुजेऽर्के रत्न युक्त भूषा घट्टनं शुभ वासरे ॥ अथ रौप्य मय वज्र युक्त भूषण निर्म्माणम् ॥ रत्न युक्त भूषणे कर्म्मे विशाखा कृत्तिकां विना ॥ ५२ ॥ शुक्रे ऽब्जे भूषणं रौप्यं वज्रं मुक्ता मयं हि सत् ॥ अथ पात्र भोजनम् ॥ अथातः संप्रवक्ष्यामि यदुक्तं शक्ति यामले ॥ सूर्य्य भाच्चंद्र पर्य्यन्तं गणनीयं सदा बुधैः ॥ ५३ ॥ दिक्षु दिक्षु द्वयं न्यस्य मध्ये का दशयो ज-येत् ॥ वर्तुला कार चक्रस्य भोक्तृ पात्रस्य निर्णयः ॥ ५४ ॥ बंधनं सौख्य हानिस्स्याल्ला-भं सौख्यं च मृत्युदम् ॥ पुत्रा युष्यौ क वृद्धी च पूर्वादि क्रमतो भवेत् ॥ ५५ ॥ अरक्तानष्टे-न्दु षष्ठी च त्रिलोस्सुतं विवर्जयेत् ॥ रोहिणी युगले हस्त त्रितये रेवती द्वये ॥ ५६ ॥ श्रव-ण त्रितये पुष्ये पुनर्वस्व नुराधयोः ॥ भृगौ गुरौ बुध शुक्रेऽब्जे वारे चामृत योग के ॥ ५७ ॥ सौ वर्ण रौप्य पात्रेषु भोजनादि शुभ प्रदम् ॥ अथ श्मश्रु कर्म्म ॥ श्रवण त्रितये हस्त त्रितये रे-

वली द्वये ॥ ज्येष्ठायां मृगशीर्षेच पुनर्वसु द्वये तथा ॥ ५८ ॥ क्षुरकर्म्म बुधैः प्रोक्तं त्यक्त्वा भौ-
म शनिं रविम् ॥ अनुराधा मुक्तांचैव कृत्तिकां रोहिणीं मघां ॥ ५९ ॥ अथ क्षुर कृत्ये वारफल-
म् ॥ भानुर्मासं शनिः सप्त भौमोऽष्टौ नाशयेत्सुखम् ॥ वर्द्धयेद्बोधनः पंच मासान्सप्तनि-
शा पतिः ॥ ६० ॥ शुक्रस्त्वेकादश क्षेमं क्षौरे वाचां पति र्दश ॥ अथ क्षौरे त्याज्य तिथिः ॥ अ-
ष्टमी प्रति पत्षष्ठी रिक्ता पर्वाणि संत्यजेत् ॥ चतुर्दशीत्वमावास्या क्षौरे त्याज्यातु सर्वदा ॥
६१ ॥ निंद्य नक्षत्राणां दुष्ट फलम् ॥ पंच कृत्वो मघायांयः षट्कृत्वः कृत्तिकास्वपि ॥ त्रिवारं
चानुराधायां रोहिण्यां अष्ट वार कम् ॥ ६२ ॥ उत्तरा फाल्गुनी संज्ञे चतुर्थे क्षौर माचरे-
त् ॥ सवेध सास मानोऽपि यावद्वत्सं जीवति ॥ ६३ ॥ अथ क्षौर निषेधेऽप्यत्र पवादः ॥ आ-
ज्ञया विप्र राज्ञो र्वाव्याधाने बंध मोक्षणे ॥ मृताशौचेच दीक्षायां मुंडनं शस्तमेव्वपि ॥
६४ ॥ मुंडनं चोपवासश्च सर्व तीर्थेष्वयं विधिः ॥ वर्जयित्वा कुरुक्षेत्रं नैमिषं पुष्करं गयाम्
॥ ६५ ॥ अथ राज्ञां श्मश्रु कर्म्म ॥ क्षौर भस्योदये राज्ञः पंचमे पंचमे ह्नि ॥ श्मश्रु कर्म्म ल-

मारव्याते निषिद्धा तारका न चेत् ॥ ६६ ॥ अथ नरव दंत कृत्यं ॥ ऋक्षेषु क्षौर कर्म्मोक्तं येषु
येषु मनीषिभिः ॥ तेषु तेषु च कर्त्तव्या नरव दंतादि का क्रिया ॥ ६७ ॥ अथ क्षौर विधौ निषेधः
॥ भुक्ताभ्यक्तो व्रती यात्रा रणो द्योगी कृताह्निकः ॥ उत्कटा चरणो रात्रौ संध्य योरुभयो रपि
॥ ६८ ॥ शुभेषु नवमे चाह्नि क्षुर कर्म्म न कारयेत् ॥ प्राक् व्रत स्नान को राजा योगी न्द्रो
गर्भिणी पतिः ॥ ६९ ॥ सजीव त्पित्र कश्चैते मुंड्याः प्राक् कथिता अपि ॥ ७० ॥ क्षौरे शुभ वा-
काम् ॥ केशवं चा नर्त्तपुरं पाटल पुत्रं पुरी महि क्षत्रम् ॥ दिति मदितिंच स्मरतां क्षौर विधौ
भवति कल्याणम् ॥ ७१ ॥ अथ क्षौरे किंचिद्विशेषः ॥ गंगायां भास्कर क्षेत्रे माता पित्रो मृते ह-
नि ॥ आधाने सोम पाने च षट् सु क्षौरं विधीयते ॥ ७२ ॥ राज कार्य्य नियुक्तानां नटानां नृ-
प जीविनाम् ॥ श्मश्रु रोम नरव च्छेदे नास्ति काल विशोधनम् ॥ ७३ ॥ अथ विद्यारंभः ॥ मृ-
गादि पंचके मूले हस्तादि त्रितये ऽश्विभे ॥ श्रवण त्रय पूर्वासु विद्या रंभः प्रशस्यते ॥ ७४
॥ रवौ शुक्रे बुधे जीवे वारे लग्न बले शुभे ॥ दशम्यादि त्रिके षष्ठी तृतीया पंचमी शुच ॥७५

॥ विद्या रंभो गुरौ शुक्रे बुधे सर्वार्थ सिद्धिदः ॥ मध्यो ऽ र्कोजाड्य कृच्चंद्रो भौमार्की मृत्युदौ स्मृतौ ॥ ७६ ॥ अथ गणिता रंभः ॥ शतद्वये ऽनुराधा र्द्रे रोहिणी रेवती करे ॥ पुष्ये जीवे बुधे कुर्य्या स्त्रारंभं गणिता दिषु ॥ ७७ ॥ अथ व्याकरणा रंभः ॥ रोहिण्यां पंचके हस्ता त्पुनर्भे मृग मेऽश्विभे ॥ पुष्ये शुक्रेज्य विद्वारे शब्द शास्त्रं पठेत्सुधीः ॥ ७८ ॥ अथ न्याय शास्त्राद्यारंभः ॥ श्रुत्तरे रोहिणी पुष्ये पुनर्भे श्रवणे करे ॥ अश्विन्यां शत भे स्वातौ न्याय शास्त्रादिकं पठेत् ॥ ७९ ॥ अथ धर्म्म शास्त्र पुराण रंभः ॥ हस्तादि पंचके पुष्ये रेवती द्वितये मृगे ॥ श्रवत्रये शुभा रंभो धर्म्म शास्त्र पुराणयोः ॥ ८० ॥ अथ वैद्य विद्या गारुडी विद्यारंभः ॥ हस्त त्रये ऽनुराधायां पुन र्भे श्रवणात्रये ॥ मूले चैवा श्विनी पुष्ये ज्येष्ठा श्लेषार्द्र भे मृगे ॥ ८१ ॥ अथ जैन विद्या रम्भः ॥ श्रुतित्रये मघा पूर्वा नुराधा रेवती त्रये ॥ पुन र्भे स्वाति भे सूर्य्ये शुक्रे जैना गमं पठेत् ॥ ८२ ॥ अथ लिंगांड छेदन मुहूर्त्तम् ॥ नराश्व वृष भादीनां लिंगांड छेदनं स्मृतम् ॥ अर्कारे ज्यांत्यपुष्यार्क स्वातीन्दु श्रुति वासवैः ॥ ८३ ॥ लिंगांड छेदो नरस्यार्द्र वर्गे ऋक्ता ष्टमार्काष्ट महीन घस्रे ॥

आरेज्या र्कौ पौष्ण पुष्यार्क दास्र श्रोत्रेन्दु श्रविष्ठा प्रशस्ता ॥ ८४ ॥ अथ नष्टतारीषः ॥ तृतीया तथै-
वाष्टमी विश्व संख्या तथा द्वादशो ऽष्ट त्रयो विंशतिश्च ॥ तथैवाष्टविंशत्तरी या निषिद्धा स-
हाया व नैवक्षारम्भ विद्भिः प्रदिष्टा ॥ ८५ ॥ अथ पारसी विद्यारंभः ॥ ज्येष्ठा श्लेषा मघा पूर्वा रेव-
ती भरणी द्वये ॥ विशाखार्द्रोत्तरा षाढा शाल भे पाप वासरे ॥ ८६ ॥ लग्ने स्थिरे च चन्द्रे-
न पारसी मारभी पठेत् ॥ अथलिप्यारंभः ॥ शुभे तिथौ शुभे वारे रेवती युगले तथा ॥ ८७ ॥
श्रवणे च्चानुराधायां तथैवार्द्रादि सुत्रिषु ॥ हस्तादि त्रितये कुर्य्यात् लिखनारंभनं सुधीः ॥
८८ ॥ अथ रत्न परीक्षा ॥ पुनर्भे प्रातहस्तर्क्षे श्रवे ज्येष्ठे परीक्षणम् ॥ रत्नानामष्टमी भूतं हित्वा
भौमं शनैश्चरम् ॥ ८९ ॥ अथ शिल्पकर्मारंभः ॥ हस्तत्रये श्रवात् त्र्यर्क्षे त्र्युत्तरे रोहिणी मृ-
गे ॥ रेवत्याश्विनी पुष्ये पुनर्वस्वनुराधयोः ॥ ९० ॥ शस्ते तिथौ शुभे वारे शिल्पविद्यां स-
माचरेत् ॥ अथ राजदर्शनम् ॥ त्र्युत्तरे श्रवणद्वंद्वे मृगे पुष्यानुराधयोः ॥ ९१ ॥ रोहिण्यां रेव-
ती युग्मे चित्राहस्ते शुभे हनि ॥ वलिन्यर्के ऽर्क वारेऽपि राजदर्शनमीरितम् ॥ ९२ ॥ अथ-

सं·शि· राजसेवा ॥ हस्तद्वये ऽनुराधायां रेवती युगले मृगे ॥ पुष्ये बुधे गुरौ शुक्रे सान्तिथौ रविवासरे ॥
८५ ९३ ॥ योनि राशिप यो मैत्र्यां स्वामी सेव्यो ऽनुजीविभिः ॥ अथ दास दासी संग्रहः॥ उत्तरा सु-
च रोहिण्यां दास दास्यादि संग्रहः ॥ ९४ ॥ अथ छत्र चामर सिंहासनादि कृत्यम् ॥ चामर छत्र
दोलादि दीर्घ सिंहासनादिकम् ॥ पट्टाभिषेक के सर्वं विदध्याच्छोभने हनि ॥ ९५ ॥
अथ मुद्राकृत्यम् ॥ मृदु ध्रुव क्षिप्र चरेषु भेषु योगे प्रशस्ते शनि चंद्र वर्ज्ये ॥ वारे तिथौ पू-
र्णा जयाख्ये च मुद्रा प्रतिष्ठा शुभदा न राणाम् ॥ ९६ ॥ गुर्वस्ते वा सितास्ते वा मुद्राणां
घटनं क्वचित् ॥ क्रूर ग्रह क्षांश लग्ने न कार्यं भूति मिच्छता ॥ ९७ ॥ अथाश्वारोहणम् गजा-
नां च ॥ पुष्य श्रविष्ठाश्विनि सौम्य भेषु चोत्तरा न त्वादित्य कराह्वयेषु ॥ सवारुणा क्षे शुबुधे-
ऽस्मृतानि सवारीणि कार्याणि तुरंगमानाम् ॥ ९८ ॥ अथाश्वारोहणे चक्रम् ॥ अश्वाकारं लि-
खेच्चक्रं साभिजिद्भानि विन्यसेत् ॥ स्कंधे तु सूर्य भात्यंच पृष्ठे च दश भानि च ॥ ९९ ॥ पु-
च्छे द्वे स्थापयेत्पादश्चतुः पादे चतुष्टयम् ॥ उदरे विन्यसेत्पंच मुखे द्वे तुरगस्य च ॥ १०० ८५

॥ अर्थलाभो मुखे सम्यक् वाजी मध्याति चोदरे ॥ चरणा स्थिरणे भंगः पुच्छे पत्नी विन श्य-
ति ॥ १॥ अर्थसिद्धि र्भवेत्पृष्ठे स्कंधे स्कंधपति र्भवेत् ॥ अथ गज कृत्यम् ॥ हस्त त्रये सौम्य ह-
रि त्रये च पौष्ण द्वये पुष्य पुनर्वसो च ॥ मैत्रेच सर्वाण्यपि कुंजराणां कर्म्माणि शस्तान्य शि-
लानि यानि ॥ २ ॥ अथ शिबिकारोहणं कृत्यंच ॥ उत्तरा रेवती युग्मे त्रिभे हस्ता त्रिभे श्रवात् ॥ पु-
नर्वस्वो स्तथा पुष्ये ऽनुराधा त्रितये मृगे ॥ ३ ॥ रोहिण्यां शिबि कायास्तु सल्लग्ने च द्दनं शुभम्
॥ शुभ वारे शुभे लग्ने शुभांशे शोभने दिने ॥ ४ ॥ अंकुशा करणं योग्यं शान्ते लग्ने शान्ते
दिने ॥ अश्व पल्याण निर्म्माणम् ॥ श्रवणे शत भे हस्ते पुष्ये मूले मृगे ऽश्विभे ॥ पुनर्वस्वो गजा
श्वोक्त पल्याण करणं शुभम् ॥ ५॥ वर्ज्जयित्वा कुजं कृत्ना मश्व कार्य्यं शुभावहम् ॥
अथाश्वस्य विशेष कृत्यम् ॥ चौलोक्त खुर कृत्यादि शिक्षा विद्योक्त भादिषु ग्रास घासादिकं त्वन्ना
शनोक्त र्क्षे गज वाजिनाम् ॥ ६ ॥ अथ रथ कृत्यम् ॥ पुष्यो पुनर्वसू ज्येष्ठा नुराधा रेवती द्वये ॥
श्रवणादि त्रिभे हस्त त्रितये रोहिणी मृगे ॥ ७ ॥ सार्के सौम्य दिने सौम्य विलग्ने रथ कर्म्म सत्

॥ अथ संधिः प्रसूतम् ॥ अनुराधा मघा पुष्ये तिष्य ईं तैतिला भिधे ॥ लग्ने शुद्धे गो ऽष्टम्यां
द्वादश्यां संधि रिष्यते ॥ ८ ॥ अथ मद्यारंभः ॥ मूलार्द्रा शत भेज्येष्ठा पूर्वा श्लेषा मघा सुच
॥ भरण्यां क्रूर वारे च मद्य कर्म्म रितं बुधैः ॥ ९ ॥ अथ मादक वस्तुभक्षणम् ॥ आर्द्रा श्लेषा म
घा पूर्वा ज्येष्ठा मूल प्रोता भिधे ॥ भरण्यां सुदिने मंदे त्व प्रनीया न्मादकं मधु ॥ १० ॥ अथन-
वांगनाभोगः ॥ प्रथमाभिगम प्रशस्तो नव वध्वा शुभे ह्नानि ॥ गर्भाधानोक्त नक्षत्रे शस्ते
ज्योत्स्ना करे निशि ॥ ११ ॥ अथ गीतनृत्यारंभः ॥ रेवत्या मनुराधायां धनिष्ठा द्वितये करे ॥
रोहिणी युगले पुष्ये त्र्युत्तरे गीत नर्तनम् ॥ १२ ॥ अथ नटक्रिया ॥ मृगार्द्रारोहिणी पुष्ये पुन
र्भे श्रवण त्रये ॥ चित्रा त्रयोत्तरा मूले कृत्यं सन्नृत्य जीविनाम् ॥ १३ ॥ अथ वृक्षलतादि रोप-
णम् ॥ हस्त चित्रोत्तरा मूले ऽनुराधा रेवती द्वये ॥ विशाखा रोहिणी पुष्ये प्रारा मोप्ति र्मृगे-
शते ॥ १४ ॥ सूर्य्य भाद्दिन पर्य्यन्तं राम रामाक्षि युग्मभं ॥ राम भूवाण षट् युग्मं चक्रे पाद
परोपणे ॥ १५ ॥ अस्त त्कुंभ मस हानिं शुभं दुःखं रिपो र्भयं ॥ शुभं सौख्यं क्रमात् ज्ञेयं

८७

फल मुक्तं विचक्षणैः ॥ १६ ॥ तिथि वार समा युक्तं सूर्य्य भाद्दिन भं युतम् ॥ नवभिश्च हर
द्भागं शेषांके न फलं दिशेत् ॥ १७ ॥ एके शरे चतुः केन्द्रे त्केन्द्र फल मादिशेत् ॥ व-
सौ षष्ठ द्वये लाभं सप्त मे नव मे मृतिः ॥ १८ ॥ अथ नौकाघटनम् ॥ अश्वि करेज्य सुधानिधि पू-
र्वामित्र धनाच्युतभे शुभ लग्ने ॥ तारक योग तिथीन्दु विशुद्धौ नौ गमनं शुभदं शुभ वारे ॥
१९ ॥ अथ सामान्यतः पशु कृत्यं रक्षाच ॥ त्यक्ता षष्ठी ममां रिक्तां रोहिणी मुत्तरा त्रयम् ॥ चित्रा-
स्वं श्रवणं भौमं पशूनां सर्व कर्म्मच ॥ २० ॥ प्रवेशं निर्गमं चापि न त्याज्यं निजयोनिभम्
॥ पूर्वा त्रये धनिष्ठेन्द्र पौष्णे सौम्य विशाखयोः ॥ अश्लेषा या मघा त्रिवन्यां यात्रा सिद्धिश्च-
तुः पदाम् ॥ २१ ॥ अथ चरही चक्रम् ॥ व्यासं विस्तीर्ण संगुण्यं प्रसुना साक्षैर्युतम् ॥ अष्ट
भिस्तु हरेद्भागं शेषांके फल मादिशेत् ॥ २२ ॥ पश्वोर्हानिः पशो र्नाशः पशु लाभः पशु
क्षयः ॥ पशु रोगः पशो र्वृद्धिः पशु भेदः पशो र्वधः ॥ २३ ॥ अथोष्ट्र महिष्यादि कृत्यम् ॥ धनिष्ठादि
नये पूर्वा षाढा तिर्य्यङ्मुखो द्रुषु ॥ अजाविमहिषोष्ट्राणां कृत्यं चाश्वतरी शुभा ॥ २४ ॥

॥ अथ वनचारिकृत्यम् ॥ ज्येष्ठा स्वात्य श्विनी पुष्ये पुनर्भे रोहिणी करे ॥ उत्तरासु शुभं कृत्यं शृंगिणां वनचारिणाम् ॥ २५ ॥ अथ पक्षीकृत्यम् ॥ शुभाहे सुखौ तिर्यङ्मुखे चोर्द्ध मुखे च भे ॥ सारिका शुक मुख्यानां पक्षिणां कृत्य मुत्तमम् ॥ २६ ॥ अथ सर्ववस्तुविक्रयः ॥ विशाखा कृत्तिका श्लेषा भरणी पूर्विका त्रयम् ॥ विक्रयः सतिषा वेषु कर्त्तव्यो न क्रय श्शुभः ॥ २७ ॥ अथ गृह क्षेत्र भूम्यादीनां क्रय विक्रयौ ॥ जीवे शुक्रे च नंदासु पूर्णायां मूल भे मृगे ॥ पूर्वाश्लेषा मघां त्येच विशाखाहितये तथा ॥ २८ ॥ पुनर्भे मुनिभिः प्रोक्तं क्रयं विक्रयणं भुवः ॥ अथ वाणिज्यम् ॥ अनुराधोत्तरा पुष्ये रेवती रोहिणी मृगे ॥ हस्त चित्राश्विभे कुर्य्या द्वाणिज्यं दिवसे शुभे ॥ २९ ॥ अथ निधिद्रव्यादि वृद्धि संग्रहौ ॥ पुष्ये मृगे ऽनुराधायां श्रवणा त्रितये श्विभे ॥ पुनर्भे ऽन्त्ये विशाखायां निधे र्वृद्धि श्च संग्रहः ॥ ३० ॥ अथ द्रव्यादीनां गुप्त स्थाने स्थापनम् ॥ धनिष्ठो फा विशाखाख्ये पूर्वाषाढाभिधे त्यभे ॥ रोहिण्यां च निधे र्भूमौ स्थापनं शुभ मीरितम् ॥ ३१ ॥ अथ द्रव्य प्रयोगः ॥ श्रवणादि त्रिभे चित्रा चतुष्के रेवती द्वये ॥ पुनर्वसौ मृगे पुष्ये शुभो द्रव्य प्र-

योग कः ॥ ३२॥ संक्रांतौ वृद्धि योगेतु हस्त र्क्षे रवि भौम योः ॥ नव ग्राह्यं ऋणं यस्मा त्तद्वंशे
सुस्थिरं भवेत् ॥ ३३॥ ऋणं भौमे न गृह्णीयान्न देयं बुध वासरे ॥ ऋण च्छेदं कुजे कुर्य्यात्सं-
चयं सोम नन्दने ॥ ३४॥ अथ धान्य विक्रयः ॥ रोहिण्या सक्षयों ऽन्त्यस्य धनिष्ठा सत भोत्तरे ॥ अ-
र्घस्य संग्रहः ॥ रस सग्रहणं श्रेष्ठं तोया रंभो दितो इषु ॥ ३५॥ अथ वृद्ध्यर्थधान्य प्रयोगः ॥ विष्णार्द्रा
रोहिणी ज्येष्ठा पुनर्भेऽश्वि प्रात त्रये ॥ न्युत्तरे स्वाति पुष्ये तु धान्य वृद्धि र्मघु भेरिता ॥ ३६ ॥
अथ गृहाच्छादनम् ॥ हस्त त्रये धात युगे सराधा घस्रादि योगे गृह गोपनं च ॥ नंदां परि त्यज्य कु-
हूं च ऋक्षां मौ मार्क जा दित्य दिनाप्य निंद्याः ३७अथ हल प्रवाहः ॥ रवौ रौद्रादि पादस्थे भूमौ संजा
यते रजः ॥ तस्मा द्दिनं त्रयं तत्र बीज वा पंन कार येत्॥३८ऋक्षाष्टमी विद्धि मुन ष्ट चंद्रे क्षीणेन्दु
रा रार्कि ज वासरे ऽपु ॥ दिन क्षये वानि शि संध्य यो र्वा कृत्ता कर्षीपूर्व धनानि हंति ॥ ३९ ॥ पुन
र्वसू द्वये मूले न्युत्तरे रोहिणी द्वये ॥ हस्त त्रये ऽनुराधायां रेवत्यां श्रवण त्रये ॥ ४० ॥ तिथौ
वारे शुभे ऽश्विन्यां हल प्रवहणं शुभम् ॥ अथ हलचक्रम् ॥ त्रिभि स्त्रिभि स्त्रिभिः पंच त्रि-

भिः पंच त्रिभिर्द्वयम् ॥ सूर्यभाद्दिनभं यावद्भानि वाह्यी हले क्रमात् ॥ ४१॥ अथ बीजोप्तिः ॥

हस्ताश्विपुष्योत्तर रोहिणीषु चित्रानुराधा मृगरेवतीषु ॥ स्वातौ धनिष्ठाच मघाच मूलं बीजोप्ति रुत्कृष्ट फला प्रदिष्टा ॥ ४२ ॥ शुभेवारे तिथौ श्रेष्ठा बीजोप्तिस्त्वथ राहुभात् ॥ अष्टाग्नी तु त्रयं चैक त्रयं तु त्रि चतुष्टयम् ॥ ४३ ॥ अशुभं च शुभं ज्ञेयं दिन र्क्षं फणि चक्रभे ॥ चक्रमुक्तं लुमं

अथ धान्यछेदनम् ॥ हस्तत्रयोत्तरा मूले धनिष्ठा रोहिणी मृगे ॥ पुष्ये मृगे ऽनुराधोत्ये म-घायां शुभ वासरे ॥ ४४ ॥ त्यक्त्वा क्रूरर्क्षं प्रानिं भौमं धान्यस्यां कुरु छेदनम् ॥ अथ खलादेः

अथ धान्य छिदा ॥ पूर्वोत्तरा मघा श्लेषा ज्येष्ठार्द्रा श्रवण द्वये ॥ भरणी हितये मूले मृगे पुष्ये कर त्रये ॥ ४५ ॥ धान्य छिदा शुभा क्रूरर्क्षं हित्वा भौम शनै श्चरौ ॥ अथ करणमर्दनम् ॥ अनु-राधा श्रवे मूले रेवत्यां च मृगे त्रिभे ॥ ज्येष्ठायां चैव रोहिण्यां शुभं स्यात्करणमर्दनम् ॥ ४६ ॥ अथ धान्यानयनं फलपुष्पोच्चारणं च ॥ शेषर्णोदित नक्षत्रे वासरे मन्दिरे बुधैः ॥ धान्यस्या नयनं पुष्प फला द्युच्चारणं च सत् ॥ ४७ ॥ अथ धान्यादिपाकक्रिया ॥ मूलं चित्रानुराधा सुविशा

सं.शि.
२९

रवा कृत्तिका मृगे ॥ उत्तरा रोहिणी ज्येष्ठा रेवतीषु पचिक्रिया ॥ ४८ ॥ सत्यक्तां बुधरं लग्नं
पक्षरंध्र तिथिं शुभम् ॥ अथनवान्नप्राशनम् ॥ हस्त चित्रा नुराधा स्वे रोहिणी श्रवण द्वये
॥ मृगाश्विन्युत्तरा स्वर्क्षे शुभेवारे तिथावपि ॥ ४९ ॥ नवान्नस्य विधानं च प्राशनं फ-
ल मूलयोः ॥ अथ नवान्न चक्रम् ॥ वुधर्क्षात्सुत्र ५ पुत्रे ५ सु ५ पुत्र ५ वेद ४ युगे २ न्दु १ क
म् ॥ सच्छुभं शुभमर्थघ्नं शुभं व्यर्थं शुभं क्रमात् ॥ ५० ॥ विना नंदां विषघटी मधुपौ-
षार्कि भूमिजान् ॥ अथ कोष्ठादौ धान्य स्थितिः ॥ पुनर्भैन्द्रमघोषेऽत्ये ऽनुराधा श्रवण त्रये ॥
हस्त त्रये ऽश्विनी पुष्ये रोहिण्या मुत्तरा त्रये ॥ ५१ ॥ गुरौ शुक्रे रवौ दोस्स्तकोष्ठादौ धान्यर
क्षणम् ॥ सूर्य्यभादग्नि वेदेषु वसुवेदाग्निषु क्रमात् ॥ शुभाशुभं क्रमाद्वेद्यं कोष्ठादौ
धान्यरक्षणे ॥ ५२ ॥ अथ बीज संग्रहः ॥ हस्त त्रये पुनर्वस्वोः रोहिण्यां श्रवण द्वये ॥ स्थिरे लग्ने
शुभे वारे विच्छिद्रे बीज संग्रहः ॥ ५३ ॥ अथ तृण रज्जु भिर्धान्य बंधनम् ॥ स्वातौ मूले च हस्ते त्वेभा
द्रा षाढ द्वये मृगे ॥ रोहिण्यां कुंभ कोष्ठां तर्द्धान्य संरक्षणं शुभम् ॥ ५४ ॥ अथोखल मूशल चक्रम्

॥ भूदिगब्धिदिग क्षोणि शने र्भाद्दिनभं क्रमात् ॥ अशुभंच शुभं ज्ञेयं क्रमा दूषल मूशले ॥ ५५ ॥ अथ चूर्ण मर्द्दन चक्रम् ॥ शने र्भात् युग ४ अब्धि ४ वसु ८ राम ३ वेद ४ त्रिभं क्रमात् ॥ असत् च्छुभं क्रमा च्चक्रे चक्रि कारव्ये मनो हरे ॥ ५६ ॥ अथ सूर्य्याचक्रम् ॥ सूर्य्य भात्पंच ५ त्र्य ३ ष्ट ८ त्रि ४ मुनि ७ भेषु शुभा शुभम् ॥ क्रमात्सूर्य्याभिधे चक्रे विज्ञेयं को विदैः सदा ॥ ५७ ॥ अथ चुल्ली चक्रम् ॥ सूर्य्य भा दंग ६ वेदा ४ ष्ट ८ राम ३ ङ्गानु ६ शुभा शुभम् ॥ चुल्ली चक्रे क्रमात् ज्ञेयं शुभा शुभं विच क्षणैः ॥ ५८ ॥ अथ मार्जनी चक्रम् ॥ सूर्य्य भाद्राम ३ रामा ३ ग ६ राम ३ तर्का ६ ग ६ भेषु च ॥ असत् शुभं क्रमात् ज्ञेयं मार्जनी संज्ञके शुभे ॥ ५९ ॥ हरि स्सूर्य्यवि त्रादि ति मैत्र पुष्ये मृगे रोहि हस्ते विरिञ्चे च भौमे ॥ त्यजे त्कुंभ मीने ऽप्य लौ लग्न गेहे पवित्रं तु कृत्ये रवे र्य्या मल्लानि ॥ ६० ॥ अथ गोमय पिंड चक्रम् ॥ सूर्य्य क्षाद्र सभैरध स्थलग्ना तैः पाको रसैः संयुतः शीर्षे शुभ मितैः शवस्य दहनं मध्ये शुभे स्सार्पभीः ॥ प्रागग्ण दिशु वेद भैः स्व सु हृदां स्यात्संग मो रोग भीः ज्ञाथा देः करणं शुभंच गदितं काष्ठादि संस्था

पने ॥ ६१ ॥ सूर्य्यभाद्र सतर्का ६ब्धि ४ नाग ८ वेदा ४ भिजित्सह्व ॥ शुभाशुभं क्रमात्
ज्ञेयं करीखादिषु संग्रहे ॥ ६२ ॥ अथ दीपचक्रम् ॥ सूर्य्यभाद्युगम २ वस्तु ८ ब्धि ४ दिक् १० त्रि-
कं ३ चाशुभं शुभम् ॥ दीपचक्रे क्रमात् ज्ञेयं फलं योगविचक्षणैः ॥ ६३ ॥ त्यक्त्वा
र्कं रविं भौमं लग्नं च घट मीनकम् ॥ अथ कलशचक्रम् ॥ सूर्य्यभात्पंच ५ रामा ३ द्रि
७ वसु ८ पंच ५ शुभाशुभम् ॥ फलं क्रमाद्बुधैर्ज्ञेयं चक्रे कलशसंज्ञके ॥ ६४ ॥ अथ कांस्य पा-
त्रं थाल्यादि चक्रम् ॥ चर मृदु लघु भे सलग्ने के चैत्र पौषे क्षिति जर विजनंदा ऽ पेम नाड़ी वि-
हाय ॥ प्रति समन व जातो ऽन्नस्य प्राप्त्या शन सत् ध्रुव गण सहितैः स्तैः कांस्य पात्रादि
भोज्यम् ॥ ६५ ॥ मुखे त्रीणि ३ शोक रसा ६ कंठ पुष्टिः त्रयो ३ रोग कुक्षे धनं राम
वामे ॥ त्रये ३ पृष्ठ व्याधिः सुखं राम ३ मध्ये रसे ६ हानि भार्या यदा भुंजि पात्रम् ॥ ६६
॥ अथ रहंट कादि मुहूर्त्तम् ॥ अदिति क्षि प्र मृदु ध्रुव संज्ञके भृगु ज्ञ वा कति पूर्णा जया तिथौ ॥
शकट नाव सुखासन शिल्पकं भ्रमर कार्य्य रहंट कसिद्धिदम् ॥ ६७ ॥ अथ कोल्हु चक्रम्

॥ जंत्र काष्ठ समुद्भवं सुललितं भान्वृक्षतः   पंच भं मूले मूल विदारणंच सर भं मध्ये स्थि-
तन्द्व्यहम् ॥ लिंगे पंच नि हन्ति तैल गुड कौ दंते द्वयं स्वामि हृत् पंचे पंच भयं रिपो प्रचर स-
भं सौख्य प्रदं कर्त्तरी ॥ ६८ ॥ सूर्य्य भात्पंच पंचेषु राम युग्म शर त्रिकम् ॥ नक्षत्र्युभमक्ष

अथ कोल्हू चक्रम् ॥ साभित्

| ५ | ५ | ५ | ३ | २ | ५ | ३ |
|---|---|---|---|---|---|---|
| अ | शु | अ | अ | अ | शु | अ |

दुःखं क्लेशं शुभमतो ऽशुभम् ॥ ६९ ॥ कोल्हू चक्रे साभिजिते
ज्ञेय मेवं विचक्षणैः ॥ अथ धर्म्मक्रिया ॥ रेवती द्वितये हस्त त्रित-
ये रोहिणी द्वये ॥ श्रवत्रयोत्तरा पुष्ये पुनर्वस्वनुराधयोः ॥ ७० ॥
इज्य शुक्रेन्दु सूर्य्ये युक्ते ज्य षड्ग शशालिनि ॥ लग्ने जीव युते जीवे वलिष्ठे धर्म्म माचरेत्
॥ ७१ ॥ अथ शांतिकं पौष्टिकं कर्म्म ॥ पुनर्वसू द्वये स्वातौ श्युत्तरे श्रवण त्रये ॥ रेवती द्वितये ह-
स्ते ऽनुराधा रोहिणी मघे ॥ ७२ ॥ शांतिकं पौष्टिकं कर्म्म पुण्यमाहे कीर्त्तितं बुधैः ॥ अथ होमादौ
खेटाहुति फलम् ॥ रवौ बुधे भृगौ मंदे चंद्रे भौमे गुरावथो ॥ केतौ च सूर्य्य भात् त्रयं त्रयं प्रत्येकं
भत्रयं क्रमात् ॥ ७३ ॥ होमाहुतिः खले नेष्टा शुभदा शुभखेचरे ॥ अथ होमादौ वन्हिवा

सफलम् ॥ तिथि वार युति स्सैका वेद भक्ता व शेषका ॥ निवासो ऽग्ने व्योम्नि रूपे १ वित्त प्राण वि-
नाशदः ॥ ७४ ॥ पाताले हि क्षये घेरा धन संचय नाशनः ॥ सुरा वेहा वड्ड्रे घेरा भूमौ वि-
पुल सौख्यदः ॥ ७५ ॥ संस्कारेषु विचारोऽस्य न कार्य्यो नापि वैसवे ॥ नित्य नैमित्तिके का-
र्य्येन चाव्दे मुनिभिः स्मृतः ॥ ७६ ॥ अर्क ध्वजा दष्ट मेत्राच्च तुर्थे मन्द प्रभुना दष्ट मेऽ
गारकश्च ॥ राहुर्धर्मे जीवतः खेट सुप्ते होमे नाशः पुत्र दारा धना नाम् ॥ अथ मंत्र दीक्षा ॥
रोहिण्यां श्युत्तरे मैत्रे जीवं धनो दित भादिषु ॥ मंत्र दीक्षा शुभे चान्हि पहरोऽथ्या गमो दिता
॥ ७८ ॥ अथ मंत्र यंत्री पाप नाहि ॥ ऊफा हस्ता श्विनी कर्ण विशाखा मृगा भे हनि ॥ शुभे सू-
र्य्ये युते शस्तं मंत्र यंत्र व्रता दिकम् ॥ ७९ ॥ अथ वीर साधनम् ॥ मघार्द्रा भरणी मूले मृगे शे
से बुधे घटे ॥ सुखे शुक्रेऽष्टमे शुद्धे सिद्धिर्वीराभिचारयोः ॥ ८० ॥ अथौषध करणं तत्सेवनं-
च ॥ हस्त त्रये ऽनुराधायां मूले पुष्ये श्रव त्रये ॥ मृगा भे रेवती युग्मे पुनर्वस्वो र्विजन्म भे
॥ ८१ ॥ व्रोन्दु शुक्रेज्य सूर्य्याणां वासरे सति चावपि ॥ द्विस्व भावे शुभे लग्ने शुद्धे धूनि

अंगे कोऽर्थः लग्ने चंद्रे कुंभे बुधयुक्ते

न्ति त्रये ॥ ८२ ॥ भैषज्यं शुभदं प्रोक्तं योगे च पुष्य दायिनि ॥ अथ स्नोत्थादनम् ॥ विशाखा
कृत्तिका मूले धनिष्ठाश्वि करे मृगे ॥ ज्येष्ठायां भाद्र भे सौम्ये वासरेषु रस क्रिया ॥ ८३ ॥
अथ रस सेवनम् ॥ हस्त त्रयेऽश्विनी पुष्येऽनुराधांत्ये श्रुति त्रये ॥ पुनर्भे मृग शीर्षेऽर्के भौमे
ज्ये रस भक्षणम् ॥ ८४ ॥ अथ वात रोगादौ तैलोप सेवनम् ॥ हित्वा श्लेषा मघा मूलं विशाखां
भरणी द्वयम् ॥ मंदे ज्येऽस्थिनि स्तैले तृतीयादि त्रिके तिथौ ॥ ८५ ॥ अथ रक्त विमोक्षणं विरे-
क वमनौ ॥ हस्त त्रयेऽश्विनी पुष्ये प्रात भे रोहिणी द्वये ॥ श्रवणे चानुराधायां ज्येष्ठायां र-
क्त मोक्षणम् ॥ ८६ ॥ गुरु भौमार्क वारेषु कार्य्यं शुभ तिथौ तथा ॥ विरेको वमनं शुक्रे चं-
द्रे चैवोक्त भादिषु ॥ ८७ ॥ अथ ताम्र लोह दाहः ॥ प्रात स्वित्रा श्विनी मूले विशाखा कृत्ति-
का द्वि भे ॥ ज्येष्ठा श्लेषा कुजेऽर्केऽगुरु क्रूरे लोहाग्नि भेषजम् ॥ ८८ ॥ अथ रोगोत्पत्तौ नक्ष-
त्र वशात्कष्ट दिन संख्या ॥ स्वाश्विनी कृत्तिका मूले ज्वरार्तौ नव वासराः ॥ रोहिण्या पुनर्भा
द्रे पुनर्वस्वोश्च पुष्य भे ॥ ८९ ॥ रूफायां वासराः सप्त मघायां विंशति स्तथा ॥ प्रात भं

भरणी चित्रा श्रवे चैका दश स्मृताः ॥ ९० ॥ धनिष्ठायां विशाखायां हस्त भे पक्ष एव च ॥ मासं मृगोत्तराषाढे कृच्छ्रं रेवत्यानुराधयोः ॥ ९१ ॥ पीडा स्यान्मुक्तादिने रुग्णे स्तु रोगस्या त्तदनंतरम् ॥ अथ रोगोत्पत्तौ नेष्टफलम् ॥ पूर्वा त्रयं तथा श्लेषा ज्येष्ठा द्री स्वाति भे ष्वपि ॥ रोगोत्पत्ति भवेद्यस्य मरणं तस्य निश्चितम् ॥ ९२ ॥ अत्र शांतिः ॥ ऋक्षेश रूपं कनकेन कृत्वा तल्लिंग मंत्रैश्च सुगंध पुष्पैः ॥ वस्त्राक्षतै गुग्गुल धूप दीप नैवेद्य तांबूल फलैश्च सम्यक् ॥ ९३ ॥ पूजां च कृत्वा मघनाशनाय द्विजाय दद्यादतुलं शिवाय ॥ अथ रोगोत्पत्तौ नेष्टयोगः ॥ अश्लेषा भरणी मूले स्वाती पूर्वार्द्र भे तथा ॥ प्रत भे पाप वारे च प्रतिपद्द्वादशी दिने ॥ ९४ ॥ चतुर्दश्यां तथा षष्ठ्यां पूर्णिमायां ज्वरी तु यः ॥ स नरो मृत्यु माप्नोति स्वर्वैद्येनापि रक्षितः ॥ ९५ ॥ अथ रोगासु पद्वैदोषज्ञानं प्रश्न लग्नात् ॥ मेषे तु पित्त दोषः स्यात्स्तु न्मादो ऽन्न विवर्णता ॥ वृषे च स्वेदतो द्भूत दुःखमो नेत्र रुक् ज्वरः ॥ ९६ ॥ महा माया भवं दोषं द्वंद्वे चैवानिल ज्वरः ॥ कर्कटे शाकिनी दोषो मौनं हास्यं च रोदनम् ॥ ९७ ॥ सिंहे ज







ले प्रेत दोषो वैसन स्यं हिमज्वरः ॥ कन्यायां खेट जो दोषो व्यथा क्रोधोऽरुचिर्भवेत् ॥
९९ ॥ तुलायां क्षेत्र पालस्य दोष स्संत ति पीडनम् ॥ नाग दोषोऽलि भेदा हौ देहेऽस्मि
न्बुद्धि नाशनम् ॥ दोषो धनुषि दे हो त्थः शो कौ दर्प्य रुजा ज्वरः ॥ मकरे चंडिका दोषो
देह भंगो ज्वरोऽनिलः ॥ २०० ॥ म लिन प्रेत दोषस्य देह पीडा घटे भवेत् ॥ दोषो मीने
तु योगिन्याः ज्वरो मानस विभ्रमः ॥ १ ॥ तल्लग्ने तत्र चन्द्रे वा ज्ञेयं फल मुदाहृतम् ॥ ल-
ग्नेऽष्टमे व्यये सूर्य्ये क्षेत्र पालस्य दूषणम् ॥ २ ॥ आकाश देव्या चन्द्रे तु लग्ने षष्ठेऽष्ट
मे व्यये ॥ द्वादशे दशमे भौमे शाकिन्या दूषणं मतम् ॥ ३ ॥ वन देवी भवो दोष स्सप्त मे द्वा
दशे बुधे ॥ षा मित्रे द्वादशे जीवे देव दोषो निगद्यते ॥ ४ ॥ षंत्ये वासप्त मे शुक्रे दोषो वा-
गे वतोद्भवः ॥ शनै श्चरे व्यये चास्ते दोष स्स्या दान्त्य वातजः ॥ ५ ॥ षा मित्रे द्वादशे रा
हौ कुगति स्स्योति दूषणम् ॥ व्यये धर्मे तृतीयेच षष्ठे पाप ग्रहो यदा ॥ ६ ॥ दृतोगरे ज-
ले शस्त्रे तस्य दोषः कुलोद्भवः ॥ शनौ जले कुजे शस्त्रे गरे सूर्य्ये स्त्रवं प्राजः ॥ ७ ॥ राहो

च विरुतो नष्टे शांति पूजा द्विजार्चनैः ॥ दशा म स्थे बुधे मार्ग दोषः प्रेत भवो गुरौ ॥ ८ ॥
शुक्रे दोष स्तु देवोत्थः पापेन्दुः शाकिनी भवः ॥ स्वगोत्रे गोत्रजो दोषः पर सत्रे परोद्भवः
॥ ९ ॥ शत्रु क्षेत्रे शत्रु दोषो मित्रे स्वजन संभवः ॥ अथ रव्यादि वारे दोषः ॥ कु दृष्टि संभव
स्सूर्ये पित्र दोषो नि[illegible] करे ॥ मंगले शाकिनी दोषो व्योम देवी भवो बुधे ॥ १० ॥ गोत्र
देवी भवोजीवे जल देव्या स्तु भार्गवे ॥ प्रेत पीडा शनौ सर्व शान्त्या शान्ति मुपैति तत् ॥
११ ॥ साध्या दोष स्त्व कीय र्हे स्वोच्चे स्वोच्च बलान्विते ॥ असाध्या विबले नीचे स्थितं शत्रु
ग्रहं गते ॥ १२ ॥ साध्या सौम्य ग्रहे दोषा बलिभिः केंद्र संस्थितैः ॥ असाध्याः रवे चैरः पापैः
केन्द्रगैर्बल शालिभिः ॥ १३ ॥ यद्दोषः पूजनं तस्य कुर्यात्तद्दोष शांतये ॥ जल देव्या जले
व्योम देव्या व्योम्नि जलं त्यजेत् ॥ १४ ॥ शाकिनी डाकिनी भूत दोष तज्वरणे तथा ॥
तदुद्देशेन हरदोष चत्वरे धारये द्बलिम् ॥ १५ ॥ गोत्र देव्यु द्भवे दोषे कुल देवी प्रपूजयेत्
॥ पित्र दोषेतु कर्त्तव्यो नारायण वले विधिः ॥ १६ ॥ प्रेत श्राद्धं त्रिपिंडा ख्यं विसौ स्तर्प-

रा मेवच ॥ अथ दोषज्वालायापरः क्रमः ॥ आत्मना मासरं चैव दूतस्यैव तु रोगिणः ॥ एकी कृत्वा त्रिगुणितं नवभि र्भाग माहरेत् ॥ १७ ॥ शेषे षड्ढे ६८४ भू १ भूतः हिके सन्न तथै ज्वरः ॥ त्र्यष्टमे पितर श्चैव वाणां के ग्रह जा भवेत् ॥ १८ ॥ अथ सर्पदंशे नेष्टम् ॥ विशाखा कृत्तिका मूले रेवत्या र्द्रा मघासु च ॥ आश्ले षाभिधाने च सर्व दंष्टो न जीवति ॥ १९ ॥ अथ रोग विमुक्त स्नानम् ॥ मघा पुनर्वसू स्वाती रोहिणी युत्तरत्रये ॥ आश्लेषायां च रेवत्यां भार्गवे चंद्र वासरे ॥ २० ॥ नरना या द्रोग निर्म्मुक्तः शुभे चंद्रे तथैवच ॥ आर्द्रायां रवि भौमार्कि वासरे चर लग्नके ॥ २१ ॥ दुष्ट चंद्रे तथा विष्टां पाता दौ दूषिते हनि ॥ रोग मुक्तो नरः स्नाया द्दानं कुर्य्या दनंतरं ॥ २२ ॥ अथ रक्त मोक्षणं स्नानंच ॥ पुष्ये हस्ते तथा श्विन्यां श्रवणे रोहिणी द्वये ॥ चित्रा द्वयेऽनुराधा ख्ये ज्येष्ठायां गुरुवासरे ॥ २३ ॥ भौमेऽर्के रक्त मोक्षं स्यात् रोगयुक्ते स्नान माचरेत् ॥ अथ रोग मुक्तस्य वहिर्गमनम् ॥ सद्वारे गमनोक्त र्क्षे सतिथौ शोभने दिने ॥ सल्लग्ने रोग मुक्तस्य वहिर्न्निगमनं शुभम् ॥ २४ ॥ अथ दोलिकोत्सव स्ना-

नम् ॥ राजा पुरोऽपि स स्नायाच्छोभने ह्नि शुभे तिथौ ॥ होलिका नंतरं स्नाया द्धि मंदार दिने प्रजा २५ ॥ अथ मल्लक्रिया ॥ ज्येष्ठार्द्रा भरणी पूर्वा मूला श्लेषा मघा शिवे ॥ जया पूर्णा सुसद्वार सौर्केशी चेंद्रियेगके ॥ २६ ॥ सत्वेटैः केन्द्रगैः स्वार्कैः मल्ल क्रीडा शुभा वहा ॥ अथ सर्प ग्रहणम् ॥ भरण्या र्द्रा मघा श्लेषा पूर्वा ज्येष्ठाख्य मूलके ॥ क्रूरेऽन्हि केन्द्रगैः पापैः हित्वा काल महि ग्रहः ॥ २७ ॥ अथ नराश्व पशूनां दमनम् ॥ कृत्तिका रोहिणी पुष्ये स्वाती हस्ते श्व द्वये ॥ मृगे ऽर्के रवि शुक्रे तं प्रशस्तं शनूनां बंधनं गोनर वाजिनाम् ॥ २८ ॥ अथ सेतु बंधः ॥ ध्रुवत्र रोहिणी स्वाती मृगे ऽर्के मंगले गुरौ ॥ सेतूनां बंधनं प्रशस्तं शुभे लग्ने शुभे क्षिते ॥ २९ ॥ अथ लवण कृत्यम् ॥ लवणा रंभ कृत्यं तु भरणी रोहिणी श्रवे ॥ पूर्ने वीरे दिवा श्रेष्ठो जन्म राशौ ग्राने वले ॥ ३० ॥ अथ जिन चार्वाक्या खंड क्रिया ॥ कृष्णाश्विनी मृगे स्वाती पुनर्भे श्रवण त्रये ॥ जया पूर्णा सु शुक्रे ऽ ह्नो बुधे हनि चरो दये ॥ ३१ ॥ चार्वाकि जिन पाखण्ड मण्डली करणं शुभम् ॥ अथ ओलू खनट कृत्यम् ॥ चित्रार्द्रा रोहिणी पुष्ये ध्रुवत्रे श्रवणा त्रये ॥ शुभा हे ऽर्के च ओलू खनट कृत्यं समीरितम् ॥ ३२ ॥ अथ तैलिक यंत्र कृत्यम् ॥ धनिष्ठाश्विकरं चित्रा ऽनुराधा पुष्य भे तथा ॥ ज्येष्ठायां च

मु० चि०

१०४

पुनर्वस्वो रेवत्यां शुभवासरे ॥ ३३ ॥ तैलयंत्रक्रिया शस्ता हित्वा रिक्ता कुजावपि ॥ अथ कुं-
भकारकृत्यम् ॥ पुनर्वसू द्वये हस्तत्रये त्वेशो हिरणी मृगे ॥ ३४ ॥ अनुराधा श्रवो ज्येष्ठा ससूर्य्ये
सौम्यवासरे ॥ तथा च रौद्रये प्रोक्ता कुंभकार क्रिया बुधैः ॥ ३५ ॥ अथ काष्ठशिल्पकृत्यम् ॥
हस्तषट्के ऽश्विनी पुष्ये रेवत्यां श्रवणत्रये ॥ पुनर्भे रोहिणी युग्मे सूत्रधारि क्रियोत्तमा ॥ ३६
॥ अथ स्वर्णकारकृत्यम् ॥ श्रवत्रये ऽश्विनी पुष्ये मृगे हस्तचतुष्टये ॥ कृत्तिकायां पुनर्वस्वोः शु-
भे लग्ने तिथावपि ॥ ३७ ॥ हेमकार क्रिया शस्ता हित्वा बुधशनैश्चरे ॥ अथ चर्म्मकारकृत्यम्
॥ शुक्रार्क शनिवारेषु चर्म्मकारक्रिया शुभा ॥ वसु पूर्वा द्विदैवाश्वि पौष्णा कैन्द्रवासरे
॥ ३८ ॥ अथ लोहाश्ममणीनां कृत्यानि ॥ स्वातौ ज्येष्ठा द्वये मूले चित्रार्द्रा भरणी त्रये ॥ मणि लो-
हाश्मनां कृत्यं पापे चाह्नि स्थिररौद्रये ॥ ३९ ॥ अथ नापितक्रिया ॥ ज्येष्ठा हस्तत्रये कर्णात्रि-
तये ऽश्वि मृगे ऽन्त्यभे ॥ पुनर्वसू द्वये हित्वा रिक्ता षष्ठ्यष्टमी तिथिः ॥ ४० ॥ सद्वारे ना-
पितानां चक्षुरादि सकला क्रिया ॥ अथाभीरजनकृत्यम् ॥ विशाखायां पुनर्भे ऽन्त्ये ज्येष्ठा

हस्ताश्विनी मृगे ॥ पूभा कर्ण त्रये पुष्ये स्तेऽर्के ऽर्के बलवृश्चिका ॥ ४१ ॥ अथ चौरकृ-
त्यम् ॥ विशाखा कृत्तिका पूर्वा मूलार्द्रा भरणी मघे ॥ आश्लेषा ज्येष्ठयो मंद भौम यो प्रणकु-
ने वले ॥ ४२ ॥ लग्ने वा दशमे भौमे चौर्य्यं स द्रव्यलब्धये ॥ अथ प्रेतदाहः ॥ प्रत्यक्ष शव
संस्कारे दिनं नैव विशोधयेत् ॥ अशौच विनि वृत्तौ चेत्पुनः संक्रियते मृतः ॥ ४३ ॥ सं-
शोध्यैव दिनं ग्राह्य मूर्द्ध्वं संवत्सराद्यदि ॥ प्रेत कार्य्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम् ॥
४४ ॥ कृष्ण पक्ष श्च तत्रापि वर्जयेत्तु दिनत्रयम् ॥ चतुर्थाष्टमगे चंद्रे द्वादशे च विवर्ज-
येत् ॥ ४५ ॥ प्रेत कृत्यं व्यतीपाते वै धृतौ परिघे तथा ॥ करणे विष्टि संज्ञे च शनैश्चर दि-
ने तथा ॥ ४६ ॥ त्रयोदश्यां विशेषेण जन्म तारा त्रये तथा ॥ जन्म दशै कोन विंशतिज-
न्म तारा त्रयन्त्विदम् ॥ ४७ ॥ नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः ॥ न प्रोष्ठपद
योः कार्य्यं तथा ग्नेयेच भारत ॥ ४८ ॥ दारुणेषु च सर्वेषु प्रत्यरिंच विवर्ज्जयेत ॥
भरण्याद्रा मघा श्लेषा मूलं त्रिचरणानि च ॥ ४९ ॥ प्रेत कृत्येषु दुष्टानि धनिष्ठाद्यं च पंचकं

म् ॥ फाल्गुनी द्वितये रोहिण्यनुराधा पुनर्वसू ॥ ५० ॥ आषाढे द्वे विशाखा च भानि
द्वि चरणानि च ॥ एतानि किंचिद्दुष्टानि संभवे सति वर्ज्जयेत् ॥ ५१ ॥ चतुर्दशी तिथिं
नंदां भद्रां शुक्रार वासरौ ॥ सितेज्य योरस्त मितं द्व्यंघ्रि भं विषमांघ्रि भम् ॥ ५२ ॥ शु
क्ल पक्षं च संत्यज्य पुनर्दहन मुत्तमम् ॥ वसूत्तरार्द्रतः पंच नक्षत्रेषु द्विजन्मसु ॥ ५३
॥ पौष्ण ब्राह्म र्क्षयो श्चैव दहनात्कुल नाशनम् ॥ गुरु भार्गव योर्मध्ये पौष मासे मलि-
म्लुचे ॥ ५४ ॥ नातीतः पितृमेधस्याब्दं यां गोदावरीं विना ॥ अथ लग्नादि तिथ्यं तानां ब-
लाबल ज्ञानार्थं गुणाः ॥ सहस्र गुण श्च लग्ने चंद्र श्शत गुणो बली ॥ ताराषष्टि गुणो योगो द्वा
त्रिंशद्गुण भाग्भवेत् ॥ ५५ ॥ नर्दशं करणं विद्या द्वार स्त्वष्ट गुणः स्मृतः ॥ द्विवेदि कुल
संभूत सरयू कृत संगृहे ॥ शिरो मणौ समास्ते सैकादशीयं प्रभा शुभा ॥ ५६ ॥ इति श्री
संग्रह शिरो मणौ मुहूर्त्त कथनं नामैकादशी प्रभा ॥ ११ ॥ अथ संक्रांति प्रकरणम् ॥ ए-
कामूर्त्ति र्नव बाहू लंबोष्ठी दीर्घ नासिका ॥ षष्टि योजन विस्तीर्णा संक्रांति स्त्रिया कृतिः

॥ १ ॥ संक्रांति भौम वारे स्याद्वो रारव्या भरणी मघे ॥ पूर्वात्रये च नक्षत्रे शूद्राणां सुखदा स्मृता ॥ २ ॥ सोम वारे ऽभिजि त्सुष्ये ऽश्विनी हस्तेषु भास्वतः ॥ संक्रांतिः कथिता ध्वांक्षी विप्राणां सौख्य प्रदायिनी ॥ ३ ॥ श्रवणादि त्रिभे स्वातौ पुनर्वस्वोः कुजे हनि ॥ या भवेत्सा तु चौराणां सौख्य दात्री महोदरी ॥ ४ ॥ बुधा हेया च रेवत्यां मृगे चित्रा नुराधयोः ॥ सा तु मंदा किनी नाम्ना नृपाणां सौख्य वर्द्धिनी ॥ ५ ॥ बृहस्पतौ यदा जाता रोहिण्यां चोत्तरा त्रये ॥ तदा मंदा भिधा ज्ञेया विप्राणां हित कारिणी ॥ ६ ॥ भृगो वारे विशाखायां कृत्तिकायां च या भवेत् ॥ सा तु मिश्रेति विख्याता पशूनां प्रीति दायिनी ॥ ७ ॥ शनौ मूले तथार्द्रा याम श्लेषा ज्येष्ठयोरपि ॥ या भवे द्राक्षसी सा स्यात् अंत्य जानां सुखा वहा ॥ ८ ॥ माघ ऽन्हि त्र्यंश के राह्नो द्वितीये हंति वै द्विजान् ॥ तृतीयेकाश्यकान्तस्यं संक्रांतिः शूद्र वर्ण कान् ॥ ९ ॥ प्रति या मं क्रमा द्वारो पिशाचान् राक्ष सानूनदान् ॥ पशु पालन गणां हंति प्रभाते सर्व लिंगिन : ॥ १० ॥ अथ संक्रांतरम् ॥ वृश्चिके वृष भे सिंहे कुंभे

विष्णुपदा स्मृता ॥ षडशीति मुखा मीने कन्या मिथुन धन्विषु ॥ ११ ॥ प्रोक्तं याम्या यना कर्के मकरे त्वोत्तरा यणम् ॥ विषुवाख्या तुला मेषे संक्रांति स्स मुदा हृता ॥ १२ ॥ अथ क्रूर सौम्य परत्वेन फलमाह ॥ रवि रविज भौम वारे संक्रांतौ दिन करस्य तन्मासि ॥ पित्त कफानिल जामय नर पति कलह स्त्व वृष्टिश्च ॥ १३ ॥ बुध गुरु सित चंद्रा हे सति संक्रांता वनामय न्नृणाम् ॥ क्षिति पति निकर क्षेमं सस्य वि वृद्धि र्विधर्म्मिणां पीडा ॥ १४ ॥ यस्य जन्म र्क्ष मा साद्य रवि संक्रमणं भवेत् ॥ तन्मासा भ्यं तरे तस्य रोग क्लेश धन क्षयाः ॥ १५ ॥ अज कन्या झष कर्किरि संक्रांतौ यदि नचे द्दर्षम् ॥ आमय मरणं भू भृद्युद्धमन र्घ्यं त्व वृष्टिश्च ॥ १६ ॥ वृष वृश्चिक तुला मकरे ष्वर्कस्या त्संक्रम विषये ॥ विस्फोटामय तस्कर पीडा वृष्टिः कृशानु भयम् ॥ १७ ॥ अथा रिष्ट संक्रमे शांतिः ॥ तगर कुष्ठ रुद्र पत्रै रजनी सिद्धार्थ लोध्र संयुक्तैः ॥ स्नानं जन्म र्क्षे रवि संक्रांतौ नृणां शुभदम् ॥ १८ ॥ अथ पुण्य समयः ॥ प्रागूर्द्ध्वं स्युः पूर्वतो षड् वनि स्त्वह्न्यत्र पूर्वत स्त्रिंश त्षोड श पूर्वतो ऽथ

परतः पूर्वाः परास्त्सु दश ॥ पूर्वाः षोडश चोत्तरा स्त्वतु भुवः पश्चा त्त्व वेदाः पुनः पूर्वाः षोडश चोत्तराः पुन रथो पुरायास्तु मेषा दितः ॥ १९ ॥ अस्यार्थः ॥ मेषे प्रागूर्द्ध्व दश घटिकाः पुण्य कालः १ वृषे पूर्वाः षोडश २ मिथुने पराः षोडश ३ कर्के पूर्वास्त्रिंशत् ४ सिंहे पूर्वाः षोडश ५ कन्या यां पराः षोडश ६ तुलायां प्रगूर्द्ध्व दश ७ वृश्चिके पूर्वाः षोडश ८ धनुषि पराः षोडश ९ मकरे चत्वारिं शत्पराः १० कुंभे पूर्वाः षोडश ११ मीने पराः षोडश । १२ पुण्याः षोडश नाड्य स्तु पराः पूर्वा स्तु संक्रमात् ॥ त्रिंशत्कर्कटके पूर्वास्त्वत्वारिं शत्परा मृगे ॥ २० ॥ मध्यान्हा दुत्तरं पुण्यं प्राङ्निशी थातु संक्रमे ॥ निशीथा दूर्द्ध्वकालेतु मध्यान्हा त्प्राक् परे हानि ॥ २१ ॥ चेन्नि शीथेद्वा द्दुपुण्यं पर पूर्व विभा गयोः ॥ अथायन यो र्विशेषः ॥ सूर्य्या स्तमन संध्यायां यदि सौम्या यनं भवेत् ॥ तदोदया दहः पुण्यं पूर्वाह्नः पूर्वतो यदि ॥ २२ ॥ अथ संध्या लक्षणम् ॥ अर्द्धास्त मना त्संध्या घटिका त्रय संमिता ॥ तथै वार्द्धो दयान्मात घटिका त्रय संमिता ॥ २३ ॥ अस्ता दूर्द्ध्वं च मकरे रात्रौ च संक्रमं रवेः ॥

संभि<br>१०९

तदोत्तर दिने पुण्यं मध्यान्हात्प्राक् प्रकीर्त्तितम् ॥ २४ ॥ यदा सूर्योदयात्पूर्वः कर्क संक्रमणो रविः ॥ तदा पूर्व दिने पुण्यं तदूर्द्ध तत्परे ह्वनि ॥ २५ ॥ आदौ विष्णु पदे यामे मध्येतु विषुवाभिधे ॥ षड शीतिमुखे सौम्येऽयने पुण्ये तदुत्तरम् ॥ २६ ॥ अथ रात्रौ स्नान दान निषेधेऽपि विशेषः ॥ रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ॥ नैमित्तिकंतु कुर्वीत स्नानं दानं च रात्रिषु ॥ २७ ॥ सुत जनने संक्रांता वुप रागे सूर्य्य चंद्र यो र्नित्यम् ॥ रात्रा वपि कर्त्तव्यं स्नानं दानं विशेषतो न्नृणाम् ॥ २८ ॥ अथ संक्रांति मुहूर्त्ता स्तत्फलंच ॥ पुनर्वसू विशाखाच रोहिणी चोत्तरा त्रयम् ॥ सुभिक्षं तत्र संक्रांतौ वारा वेद मुहूर्त्तकाः ॥ २९ ॥ भरण्या र्द्रा शता श्लेषा स्वाती ज्येष्ठा जघन्य भं ॥ संक्रांतौ तत्र दुर्भिक्षं मुहूर्त्ता वारा भूमिताः ॥ ३० ॥ शेष भानि समाख्यानि संक्रांता वर्द्ध साम्यता ॥ मुहूर्त्ता स्त्रिंश्च ति प्रोक्ता फलं चंद्रो दयेऽपि तत् ॥ ३१ ॥

| अथ कर्के मेघ विंशोपकाः | | | | | | |
|---|---|---|---|---|---|---|
| सू | चं | मं | बु | बृ | शु | श |
| १० | २० | ८ | १२ | १८ | १८ | ५ |

अथ कर्के मेघ विंशोपकाः ॥ अर्कादि वारे संक्रांतौ कर्के स्याद्ध वि [illegible] पकाः ॥ दिशो न खा गजाः सूर्य्याः धृत्यो ऽष्टा स्तृप्ता सायकाः ॥ ३२ ॥

१०९

नैऋ स्तुङ्गो रवि र्नागे तै तिले च चतुः पदे ॥ किंस्तुघ्ने कौल वे तिष्ठन् शकुनौ संक्रमित प्रभु-
भः ॥ ३३ ॥ गरादि पंच के मध्य प्रदीप विद्धाऽर्घ वधरो ॥ अथ संक्रांते वाहनानि ॥ सिंहो
व्याघ्रो वराहश्च खरे भ महिषो हयः ॥ श्वाजोगौः कुक्कुटो वाहाः संक्रांतेः क्रमशो व-
बाल ॥ ३४ ॥ अथ वस्त्राणि ॥ श्वेतं पीतं हरित्पांडु रक्तं श्यामं च मेचकम् ॥ चित्रं कंबल दिगं-
घसन्निभं क्रमतोऽवरम् ॥ ३५ ॥ अथ शस्त्राणि ॥ भुशुंडीच गदा खड्गो दंडः को दंड तो-
मरो ॥ कुंतः पाशोऽकुशोऽस्त्रं च वाण श्चैवायुधं क्रमात् ॥ ३६ ॥ अथ भक्ष्याणि ॥ अन्नं
च पायसं भैक्ष्यं पक्वान्नंच पयो दधि ॥ चित्रान्नं गुड मध्वाज्यं शर्करा भक्षणं क्रमात्
॥ ३७ ॥ अथ विलेपनानि ॥ कस्तूरी कुंकुमं चैव चंदनं मृच्च रोचना ॥ यावको तु मदो वापि ह-
रिद्रां जन कोऽगरुः ॥ कर्पूर श्चेति विज्ञेयं संक्रांते श्च विलेपनम् ॥ ३८ ॥ अथ जातयः
॥ देवो भूतो रगः पक्षी पशुरेणो द्विजः क्रमात् ॥ क्षत्रियो वैश्य शूद्रो च संकरो जातय-
स्त्विमाः ॥ ३९ ॥ अथ पुष्पाणि ॥ पुन्नाग जाति वकुलं केतकी विल्व मर्कजम् ॥ दूर्वाब्जम-

ह्निका पुष्पं पाट लाच जया क्रमात् ॥ ४० ॥ अथाभरणानि ॥ नूपुरं किंकिणी मुक्ता विद्रुमं कं-
कणं मणिम् ॥ गुंजा वराटिकानीलं वज्रं भूषा गरुत्मकम् ॥ ४१ ॥ अथमाला ॥ प्रवाल
मुक्ता रजतं मणिस्तथा गोमेद नीलं च सुवर्ण शीसम् ॥ कांस्यं तथा ताम्रक लोहकं-
च विभर्त्ति सर्वे गल के सुशोभितम् ॥ ४२ ॥ अथ वयांसि ॥ बाला कुमारिका रंडा मध्या
प्रौढा प्रगल्भिका ॥ वृद्धा वंध्याति वंध्या स्यादसूता योगिनी वयः ॥ ४३ ॥ योगिनी स्थि
त काथान स्संक्रांते राग मो मतः ॥ चंद्र स्य दिशि दृष्टि स्स्यात् गमनं वार दिक् स्मृतम्
॥ ४४ ॥ अथ दृष्टिः ॥ चंद्रे गुरौ दृष्टि विदिक् कुभानौ सूर्य्ये शिते नैर्ऋति कोणगा दृक् ॥ धा
त्री सुते दक्ष वने निरुक्ता बुधे शनौ रुद्र दिशि हीनां भवेत् ॥ ४५ ॥ अथगमनम् ॥ मंदे चं-
द्रे गमस्सौम्ये बुधे भौमे च वारुणे ॥ रवौ शुक्रे गमो याम्ये गुरौ प्रागगमनं स्मृतम् ॥ ४६
॥ मुखसंक्रांतेः ॥ रवौ संक्रमणो पूर्वे मुखं जीवेतु चोत्तरे ॥ भृत्यङ् मुखंभानौ सोमे शोषेद
क्षिणतो मुखम् ॥ ४७ ॥ ववे पूर्व मुखं प्रोक्तं वालवेयम दिङ्मुखम् । कौलवे पश्चिम मु-

खेले तिले चोत्तरे मुखम् ॥ ४८ ॥ गौरे वायव्य दिग्वक्त्रं वारिण्यां यदि वा मुखम् ॥ भद्रा यामी प्रादि वक्त्रं शकुने निर्ऋतौ मुखम् ॥ ४९ ॥ चतुःपदि च पाताले नागे चोर्ध्व मुखी भवेत् ॥ किंस्तुघ्ने सर्व दिग्वक्त्रं संक्रांति मुख लक्षणम् ॥ ५० ॥ अथ संक्रांते र्वाहनादीनां दुष्टफलम् ॥ वाहनान्या युधाहारादीनां तद्वृत्ति जीविनाम् ॥ विना शास्त्यात्व संक्रांते वस्त्रादीनां महर्घता ॥ ५१ ॥ स्थितोपविष्ट सुप्तानां तथा ज्ञेयं विनाशनम् ॥ अथ प्रति मासं संक्रांतौ जन्म भवसात्फलम् ॥ संक्रांति दिन भात्पूर्व नक्षत्रात्त्रिषु चेत्त्वभम् ॥ मार्गोद्यस्तया षट्सु सौख्यं पीडा ततस्त्रिभे ॥ ५२ ॥ ततो गर्भे ऽशुक प्राप्ति रर्थ हानि स्त्रिभे ततः ॥ षड्भि प्रश्नो धैर्यं न प्राप्ति रेवं मासे फलं सदा ॥ ५३ ॥ यस्यां चेज्जन्म नक्षत्रं शुभ वारे शुभं स्मृतम् ॥ पाप वारे त्वसन्प्रोक्तं मासि मासि फलं त्विदम् ॥ ५४ ॥ अथाशुभ फलदायां संक्रांतौ दानम् ॥ तिलोपरि लिखेच्चक्रं त्रिशूलं त्रित्रिकोणकम् ॥ तत्र हेम विनिःक्षिप्य दद्याद्दोषापनुत्तये ॥ ५५ ॥ अथ प्रसंगात्सर्वेषां ग्रहाणां संक्रांतौ पुण्य कालः ॥

सं.शि. २१३

नाड्यो राम गुणा रवे ३३ स्य विधोः षट् दोः पलै र्युक्त द्वयम् २२६ भौमस्याक्षि पलै र्युता नव ५४ विदो युक्ता पलै स्त्वाब्धिभिः षट् नाड्यो ६२० ऽष्ट गजा ८८ गुरोरथभं शो र्नन्दाः पलै र स्वभिः ५८ गुरव्याः स्युः स्वन्नृपाः १६० शनै रुभयंता रा स्वर क्षयोः संक्रमे ॥ ५६ ॥ अथाधिमास क्षय मासौ ॥ असंक्रान्ति रसां तोयो मास स्त्वेत्सोऽधि मासकः ॥ पर मासा क्षयो ज्ञेयः साय स्त्वेवादि सप्त सु ॥ ५७ ॥ द्वि संक्रांतौ क्षया ख्य स्यात्कदाचित्कार्त्ति क त्रये ॥ युग्माख्य स्सतु तत्रा ब्दे ह्यधि मास द्वयं भवेत् ॥ ५८ ॥ मलमास द्वति द्वे योग ह्रिति स्सर्व कर्म्म सु ॥ अथ तारादि बलान्येषां बलम् ॥ तारा या बल त श्चंद्रः बलं सूर्य्य स्य चंद्र तः ॥ सूर्य्य तस्सर्व खेटानां बलं ज्ञेयं शुभा शुभम् ॥ ५९ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्तैषा द्वादशी यं प्रभा शुभा ॥ ६० ॥ - इति श्री संग्रह शिरो मणौ संक्रांति कथनं नाम द्वादशी प्रभा ॥ १२ ॥ अथ गोचर प्रकरणम् ॥

अत्रादौ ग्रहाणां जन्म राशेः प्रत्येक स्था न फलानि आदौ रवेः ॥ श्रमो हानिर्ध नंरो गो दैन्यं सौख्यं गु

सं॰शि॰ रुता रुजः ॥ पापं सौख्यं धनं पीडां फलं भानो स्स्वजन्मभात् ॥ १॥ (चंद्रस्य) पुष्टि र्वित्तं श्रियो रो-
२१४ गः सुखं जा भोधनं रुजः ॥ मानं सौख्यं श्रियं पीडां चंद्रस्यै तत्फलं क्रमात् ॥ २॥ पा
पान्तः पाप युक् द्यूने पापाच्चन्द्रः शुभोऽप्यसत् ॥ शुभांशे चाधि मित्रांशे गुरु दृष्टोऽशु
भोऽपिसत् ॥ ३॥ सिता सितादौ सदृष्टे चन्द्रे पक्षौ शुभा वुभौ ॥ व्यत्यासे चाशुभौ ज्ञेयौ
सङ्कटेऽत्र वलं त्विदम् ॥ ४॥ (भौमस्य) भीति र्हानिः श्रियो वैरं रुग्लाभो कार्यं स्वल्पुच ॥ पापं रो-
गस्सुखं शोको भौम स्यै तत्फलं स्मृतम् ॥ ५ ॥ बुधस्य॥ बंधो लाभो भयं वित्तं शोको ल-
क्ष्मी क्षयो धनम् ॥ रोगो भोग स्सुखं वाधा फलं चैत द्बुधस्य च ॥ ६ ॥ गुरोः ॥ भीर्वित्तं रु
ग्भयो लाभ श्शोक सौख्यं रुजस्तथा मानो दैन्यं धनं रोगः फलं चैत द्बृहस्पतेः ॥ ७ ॥ शुक्र
स्य ॥ सुखं वित्तं धनं सौख्यं रोगः पीडा विपत्सुखम् ॥ धर्म्मो दुःखं धनं लाभः फलं शुक्र
स्य कीर्त्तितम् ॥ ८ ॥ शनेः ॥ भीति श्शोकः श्रियो दुःखं हानि स्सौख्यं भयं रुजः ॥ पापं
शोको धनं कष्टं शने रेतत्फलं क्रमात् ॥ ९ ॥ राहुकेत्वोः॥ हानि र्व्ययो धनं वैरं शोको वि- २१६

त्तं विप दुजः ॥ पापे वैरं सुखं हानी राहु केत्वोः फलं त्विदम् ॥ १० ॥ अथ शुभ फलदा ग्रहाः
॥ शुभा एका दशे सर्वे त्रिषष्ठ दश गो रविः ॥ षट् त्रिं शस्थो धरा पुत्रो राहु केतु शनै श्चराः
॥ ११ ॥ दश सप्त त्रिषड्काद्य संस्थिताश्चंद्रमाः शुभः ॥ शुक्ल पक्षेतु नवमो द्वितीयः
पंचमो ऽपिच ॥ १२ ॥ द्विग श्चाष्टिव चतु स्वं स्थो गोचरे शुभ दो बुधः ॥ बृहस्पति-
श्शुभः प्रोक्तो द्वि पंच नव सप्त गः ॥ १३ ॥ एक द्वि त्रि चतुः पंच नवाष्ट व्यय गो भृगुः ॥
अथ ग्रहाणां क्रम वेधः तत्रादौ रविः ॥ षष्ठं द्वादश गो विध्ये ह्यष्टमं तूर्य्य गो ग्रहं ॥ तृतीय नवमे
सूर्य्य लाभस्थं पंचम स्तथा ॥ १४ ॥ द्वितीय स्सप्तम श्चंद्रः पंचमं पंचम स्तथा ॥ षष्ठंद्वा-
दश गो विध्ये दशं मो लाभ संस्थितम् ॥ १५ ॥ अथ भौम शनि केतूनाम् ॥ तृतीयं द्वादशं ष-
ष्ठं नवमो ऽप्य थ लाभगम् ॥ विध्येतं च मगो भौमं राहु केतु शनैश्चरम् ॥ १६ ॥ अथ
बुधस्य ॥ द्वितीयं पंचमं तुर्य्यं तृतीयो नवमो रिगम् ॥ आद्ये ऽष्टमं बुधं स्व स्थ मष्टमोंति
म स्त्वायगम् ॥ १७ ॥ अथ गुरोः ॥ द्वितीयं गुरु रंत्यस्थः पंचमं तुर्य्य गो ऽष्टमम् ॥ लाभ

गं सप्तम स्थि स्थो नवमं दशमो ग्रहः ॥ १८ ॥ अथ भौमो॥ भार्गवं चाष्टमस्थः त्रिगाम
द्यो रि गो त्यगः ॥ स्वस्थ सूर्य्यं च लाभस्थो नवमं त्रिग ग्रायगम् ॥ १९ ॥ द्वितीयं सप्तमः
खेटो नवमः पंचमं तथा ॥ पंच गं चाष्ट गं विद्धोत्क्रम वेध उदाहृतः ॥ २० ॥ अविद्ध शु
भदः खेटो नवेध स्यात पुत्रयोः ॥ निंद्य स्थान गतो पीड़ो विद्ध श्चे त्सविलो मतः ॥ २१

| सूर्य्यस्य | | | | चंद्रस्य | | | | | | | | भौः शः राः केः | | | | | बुधस्य | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ | १० | ३ | ११ | ३ | ७ | १ | ६ | ११ | १० | + | + | ३ | ११ | ६ | शुभा | | २ | ४ | ६ | ८ | १० | १२ |
| १२ | ४ | ९ | ५ | ९ | २ | ५ | १२ | ८ | ४ | + | + | १२ | ५ | ९ | वेधः | | ५ | ३ | ९ | १ | ८ | १२ |
| शनि वर्ज्यं | | | | बुधवर्ज्यं | | | | | | | | शनैरेव रविवर्ज्यं | | | | | | | | | | |

| जीवस्य | | | | | शुक्रस्य | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ५ | २ | ९ | ११ | ७ | | १ | २ | ४ | ५ | ११ | ३ | १२ | ९ | ८ | शुभः |
| ४ | १२ | १० | ८ | ३ | | ८ | ७ | १० | ९ | ३ | ११ | ६ | ११ | ५ | वेधाः |

अथ देश विभागेन जन्मतो ग्रहतो वावेध ग्रयानां ॥ हिमाद्रि विंध्ययो र्मध्ये खेट स्यात् वेधको भवेत् ॥ अन्यत्र ज-

न्म राशौ तु विज्ञेयो वेध्य वेधको ॥ २२ ॥ अथाष्टवर्गानुसारेण ग्रहफलम् ॥ स्वाष्टवर्गे यथा
खेटोऽधिकारे खग राशिगः ॥ तदा गोचर दुष्टेऽपि श्रेष्ठो नाल्प करे खगः ॥ २३ ॥ अ
थ ग्रहाणां निःफलत्वम् ॥ सत्फलो वीक्षितः पापैः सौम्यैर्दृष्टोऽप्यसत्फलम् ॥ ता वुभौ नि-
फलौ ज्ञेयौ गोचरे जातकेऽपि च ॥ २४ ॥ सत् सेन गतः खेटो नीच गोप्यस्त गोऽवि-
वा ॥ निःफलस्सोऽपि विज्ञेयः यत्नु दृष्टोऽपि ता दृशः ॥ २५ ॥ अथ ग्रहाणां राशि भो-
मानम् ॥ मासं शुक्रो बुधः सूर्य्यः सार्द्ध मासं महीसुतः ॥ गुरु रब्दं तमस्सार्द्धं शनि स्सार्द्ध
द्वक द्वयम् ॥ २६ ॥ अथ शनेर्विचारः ॥ ऋक्षे यत्र शनि स्थितो भवति तद्रक्षे सदा योज-
येत् वाहौ दक्षिणके ततो भ चतुरः षट् पादयोर्विन्यसेत् ॥ पंचोरस्य थ हृद्य-
भान्यथ करे वामेऽथ शीर्षे त्रयं युग्मे लोचनयोर्द्वयं गुद गतं जन्मर्क्ष श्रोक्तं फलम् ॥
२७ ॥ मुखे हानिर्जयो बाहौ भ्रम स्त्वांघ्रौ धनं हृदि ॥ कुक्षं वा मस्तके राज्यं नेत्रे सौख्यं म-
ति गुदे ॥ २८ ॥ मुखाच्चरति गुह्येच गुह्यादयाति लोचनम् ॥ लोचनान्मस्तकं याति म-

स्त का द्याम ह स्तकम् ॥ २९ ॥ वाम हस्ता च हृदयं हृदया चरणा द्वयम् ॥ पद्भ्यां दक्षि-
णा हस्तंच शनि चक्रे विचारयेत् ॥ ३० ॥ एक मासोत्तरं वर्षं दिनानां दशकं तथा ॥
प्रत्येक मृक्ष मा क्रम्य शनि र्गच्छ ति सर्वतः ॥ ३१ ॥ सार्द्ध वर्ष द्वयं राशि मेकं सकल
संमतम् ॥ त्रिंश दर्याणय भि व्याप्य राशि चक्रे भवे च्छनिः ॥ ३२ ॥ एवं सौरे र्गतिं ज्ञा-
त्वा फलं ब्रूया द्विच क्षणाः ॥ अभीष्ट फल लाभाय विना शाया शुभ स्यच ॥ ३३ ॥
शने रिदं फलं प्रोक्तं स्वर शास्त्रा दि संमतम् ॥ रिष्फ १२ रूप १ धन २ भेषु भा स्करिः सं-
स्थितो भवति यस्य जन्म भात् ॥ लोचनो दर पदेषु संस्थितिः कथ्यते रविज लोक जै
र्जनैः ॥ ३४ ॥ स्थान मेषु पुन रुच्यते वुधैः सार्द्ध भूधरसमा सुभा स्करिः ॥ तत्र चक्र
मन वद्य मुच्यते मानुजा कृति पदं मुनीरितम् ॥ ३५ ॥ आनने दिन शतं प्रकीर्तितम्
१०० हानि रत्र वहुधा प्रजायतेः दक्षिणे तु भुज के चतु श्शतं वास राणि विजयो रणां
गने ॥ ३६ ॥ षट् शतं चरण युग्म के पुनः भ्रांति रत्र सततं दिगं तरे ॥ जाठरेषु शर

५०० संख्य के भवेल्लाभ स्व धन धान्य यो स्सदा ॥ ३७॥ दक्षिणे त्तर भुजे चतुः श्च·
तं दुः खदं शिर सित च्छत त्रयम् ॥ राज्य दं भव ति नेत्र यो र्द्वयोः द्विः शतं च सुखदं
प्रकीर्त्तितम् ॥ ३८ ॥ गुह्य गतं दनु त च्छत द्वयं दुः ख दं मुनि वरैः प्रकीर्त्तितम् ॥ चक्र·
मे तद व लोक्य कीर्तये त्साई भूधर शतोद्भवं फलम् ॥ ३९ ॥ अथ चरणादि विचारः ॥ज·
न्मां १ग ईरुद्रे ११षु सुवर्ण पादं द्वि २ पंच नंदै रज तस्य पादम् ॥ त्रि सप्त दिक् ताम्र पदं
वदंति वेदाष्ट सार्के ष्वि ह लोह पादम् ॥ ४० ॥ लोहे वित्त विना शस्स्यात् सर्व सौख्यं च कां·
चने ॥ ताम्रे च सम ता ज्ञेया सौभाग्यं राज ते भवेत् ॥ ४१ ॥ अथ शनिवाहनम् ॥ यामले·
मन्द ऋक्षा च्छ शि १ वेद ४ तर्क ६ विशिखा ५ ऽब्ध्य ४ ग्न्य ३ष्ट ८ पक्ष २ क्रमा च्छा गो १
श्वो २ भयनो गजोहि माहिषो ऽश्वो वृषो वापसः ॥ हानिं वैर भयं भ्रमो धन चयो मा
नाल्य को भूपतेः सौख्यं रोग चयो नरस्य वस तो मंदस्य वाहा क्षमी ॥ ४२॥ सपा·
द द्वि दिनं चंद्रः प्रायः खेट भ भोग कः ॥ अथ ग्रहाणां फल समयः ॥ राशेरादौ कुजः सू·

र्य्यो मध्ये शुक्र बृहस्पती ॥ अंत्ये चंद्रः शनि गेहे फलदः सर्वदा बुधः ॥ ४४ ॥ सू-
र्य्यः पंच दिना त्पूर्वं शीत रश्मि र्घटी त्रयात् ॥ भौमोष्टसाष्ट का दर्वाक् शुक्रो द्वौ सप्त
वासरात् ॥ ४५ ॥ गुरुर्म्मासद्वय श्चैव षण्मासात्तु शनैश्चरः ॥ राहुर्म्मासत्रया दस्य राशे
स्तु फलदः स्मृतः ॥ ४६ ॥ राशि नक्षत्र संधिस्थाः फलदा भव मे ध्ययोः ॥ राशिनक्षत्रयो
र्वेदाः पूर्वगो स्वे द्विलो मतः ॥ ४७ ॥ अथ जन्म राशितो ग्रहाणां फलम् ॥ ग्रहाणां जन्म भाच्चैवं
दशैका दश षट् त्रिगः ॥ मध्यमं पंच सप्ताश्विनवम स्थान संस्थितम् ॥ ४८ ॥ नेष्टमं-
त्याष्ट तुर्य्यस्थं जन्मं क्षेतु मृति र्भवेत् ॥ जपात् सुवर्ण गो दानात् शांते श्चादर्शनाच्छुभ-
म् ॥ ४९ ॥ अथ विषम स्थे ग्रहे विवर्ज्यानि ॥ क्षारखेट ऽकाल चर्य्यान्त दूर देश गमो नृपे ॥ तुरगा
जि गजा रोहे गमनं पर मन्दिरे ॥ ५० ॥ न कार्य्यं साहसं कर्म्म विषमे षु ग्रहे षुच ॥ अथ
ग्रहाणां दानानि ॥ येखेटाः खेचरे दुष्टाः दशायां स्वाष्ट वर्गके ॥ जप दानादि नाते स्युः प्रश-
स्ता स्नान तो ऽपिवा ॥ ५१ ॥ माणिक्यं धेनु गोधूम हेमं ताम्रं गुडो बुजम् ॥ चंदनं चाम्बरं

रक्तं देयं भास्वान्मुदे बुधैः ॥ ५२ ॥ मुक्ता रौप्यं सितं वस्त्रं शंखं चंद्रस्यतंदुलान् ॥ कर्पू-
रं गो-श्रुगं दद्याद्दून कुंभं विधो मुदे ॥ ५३ ॥ प्रवालं हेम गोधूमान् रक्तं वासो ऽरुणं वृषम्
॥ करवीरं गुडं ताम्रं मसूरा भौम तुष्टये ॥ ५४ ॥ कांस्यं नीलां वरं हेम गज दंतं गरुत्मकं
॥ मुद्गाज्यं सर्वपुष्पं च दद्यात्प्रीत्यै बुधस्य च ॥ ५५ ॥ हरिद्राश्वः शितो हेम पीतं धान्यं
तथां वरम् ॥ लवणं पुष्प राग श्च देयो वाचस्पते र्मुदे ॥ ५६ ॥ धेनुश्चित्रां वरं वाज्यश्वे
ता श्वो हेम तंदुलाः ॥ सुगंधं रजतं वस्त्रं देयं सुप्रीत ये भृगोः ॥ ५७ ॥ तिला स्तैलं तथा
मारवानिन्द्रनीला सितां वरम् ॥ कृष्णां गां महिषीं लोहं स्वर्णं न्द्द्याच्छ नेर्मुदे ॥ ५८ ॥
गोमेदं तुरगं खड्गं नील वस्त्रं च कांचनम् ॥ स्वर्णं तैलं तिलान्दद्या त्सैंहि केय मुदे नृपः
॥ ५९ ॥ कस्तूरी कमलं वस्त्रं च्छागो वैडूर्य्य कांच ने ॥ तिला स्तैलं मही पालैः प्रदेयं के-
तु तुष्टये ॥ ६० ॥ अथ ग्रह दुःख हर मौषधी स्नानम् ॥ एलाय हिम धूसीरला श्च पुष्पा श्च कुंकु-
मैः ॥ स्नानं मन त्रिफला देव दारु र्भास्वि तुष्टये ॥ ६१ ॥ पंच गव्ये भवानां नु शंख स्फटि

क मुक्तिभिः ॥ कुमुदैर्मिश्रितैः स्नानं चंद्रदोषापनुत्तये ॥ ६२ ॥ ह्रिंग्व लू विल्व फलिनी मांसी व कुल चंदनैः ॥ रक्तपुष्पैर्बला मिश्रैः स्नानं भौमार्तिनुत्तये ॥ ६३ ॥ गोमयाक्षत मुक्ताभी रोचना मधु हेमभिः ॥ फल मूलैर्युतं स्नानं बोधनार्तिविनाशनम् ॥ ६४ ॥ मालती कुसुम श्वेत सर्षपक्षौद्र संयुतैः ॥ पल्लवैर्मदयंत्याश्च स्नाया द्गुरु मुदे नृपः ॥ ६५ ॥ स्नान मन शिलाला मूल फलं कुंकुम वारिभिः ॥ स्नानं भुक्र कृतां बाधां नाशयेत्येव भूभुजाम् ॥ ६६ ॥ बला लाजाञ्जनैः कृष्णतिलै र्लोध्रघनैरपि ॥ शत पुष्पान्वितै स्नाया न्मंद बाधापनुत्तये ॥ ६७ ॥ अथ ग्रहाणां दोष शांतये सामान्यौषधी स्नानम् ॥ लाजा कुष्ठ बला भिस्त्र श्रियं गुघन सर्षपैः ॥ देव दारु हरिद्राभिः पुंखा लोध्रेण संयुतैः ॥ ६८ ॥ वारिभिः स्नान मुक्तं हि प्रोक्तं दान पुरस्सरम् ॥ एतत्सामान्यतस्सर्व ग्रह पीडोपशान्तये ॥ ६९ ॥ अथ ग्रह प्रीतये रत्नादि धारणम् ॥ भुक्रेन्दो रजतं चैव विद्रुमं भानु भौमयोः ॥ कांस्य हेम भाने लौहं गुरोर्मुक्ता फलं नरः ॥ ७० ॥ प्रीतये धारयेदं गे लाजावर्त्तन्त तोन्ययोः ॥ अथन-

व ग्रह मुद्रिका ॥ माणिक्यं तरणेर्मध्ये प्राच्यां वज्रं भृगो र्विधोः ॥ आग्नेय्यां मौक्तिकं याम्ये प्रवालं मंगलस्य च ॥ ७१ ॥ गोमेदं राक्षसो राहोः पश्चिमे नीलकं शनेः ॥ वायौ वैडूर्यकं केतौ उदीच्यां पुष्पकं गुरोः ॥ ७२ ॥ गारुत्मकं तथैशान्यां सोम पुत्रस्य तुष्टये ॥ मुद्रिकायां नरैर्धार्य्य मथवा हृदये वहिः ॥ ७३ ॥ अथ ग्रह पीडोपशमनो पायः ॥ पालना दुरु वाक्यानां देव ब्राह्मण वंदनात् ॥ नो कुर्वंति ग्रहाःपीडां दुष्टस्थान स्थिता अपि ॥ ७४ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरोमणौ समाप्तेयं प्रभेयंच त्रयोदशी ॥ ७५ ॥ इति श्री संग्रह शिरोमणौ गोचर कथनं नाम त्रयोदशी प्रभा ॥ १३ ॥ अथ संस्कार प्रकरणम् ॥ अथ संस्कार प्रकरणे आदौ रजो दर्शनम् ॥ वैशाखे फाल्गुणे माघे मार्गशीर्षे श्रवणाश्विने ॥ पक्षे शुक्ले शुभा हे च सद्दिलग्ने तथा दिवा ॥ १ ॥ श्रुति त्रये ऽनुराधायां रेवती द्वितये मृगे ॥ हस्त त्रये च रोहिण्यां पुष्य भे चोत्तरासु च ॥ २ ॥ सित वस्त्रे शुभं स्त्रीणां प्रथमं ऋतु दर्शनम् ॥ मध्यं ज्येष्ठे पुनर्वस्वौ मूले चान्यत्र निंदितः ॥ ३ ॥ अष्टम्यां द्वा

दृष्टी छूले ऽरक्ता दर्शी ऽथ संक्रमे ॥ भद्रा निद्रा व्यतीपाते ग्रहणे काजि वैधृतौ ॥४॥ पर
स्नात्तु गृहं संध्या कुदेशे कृष्ण वाससि ॥ प्रायु जो दर्शनं नेष्टं शांत्या तु शुभदं भवेत् ॥५॥
सा युक्ता विलयं यांति रजो दर्शन संभवाः ॥ सर्वे दोषास्तु सद्यमे सितेज्य युत वीक्षिते
॥ ६ ॥ अथ ऋतुमती स्नानम् ॥ पुनर्वसु स्तथा चित्रा ज्येष्ठा पुष्या श्विनी ध्रुव ॥ स्नाया दृतु मती
नारी शुभे वारे शुभे तिथौ ॥ ७ ॥ रोहिणी त्रितये स्वातौ हस्ते मै रेवती द्वये ॥ स्नानात्तु युवती ग
र्भं विधत्ते शीघ्र मे वहि ॥ ८ ॥ अथ गर्भाधानम् ॥ जन्मर्क्ष भरणी मूलं नक्षत्रं रेवती मघां ॥
पूर्वाह्नं च व्यतीपातं वैधृतिं परिघार्द्धकम् ॥ पित्रोः श्राद्ध दिनं संध्यां दिवा षष्ठी च पर्वन ॥
आर्त्त वाह चतुष्कं च विष्टी रदकार्क संक्रमान् ॥ १० ॥ तथैव क्रूर वारांश्च गर्भाधाने विव
र्जयेत् ॥ स्वातौ हस्ते ऽनुराधायां रोहिण्यां श्रवण त्रये ॥ ११ ॥ उत्तरे मृग शीर्षे च शुभा
हे शुभ राशिषु ॥ गर्भा धानं प्रशस्तं स्यात् चंद्रे शस्ते पुमांस के ॥ १२ ॥ कारिकायाम् ॥ पुंन
क्ष त्राणि चैतानि तिष्यो हस्त पुनर्वसू ॥ अभिजिच्छ्रोत्र या च्चैव अनुराधाश्विय्युक् मघा ॥ 

॥ १३ ॥ केन्द्र कोण स्थिते सौम्ये पापेचत्रिषडायगे ॥ पुं लग्ने पुन्नवांशेन्द्व तथा पुंग्रह वीक्षिते ॥ १४ ॥ चित्रा पुनर्वसू पुष्य माश्विभं मध्य मं स्मृतम् ॥ निषेके शेष धिष्ण्यानि संत्याज्या न्य शुभानिच ॥ १५ ॥ अथ जन्म भं सीमंते निषेद्धं ॥ वशिष्ठः ॥ बालान्न भुक्तौ व्रत बंधने च राजा भिषेके खलु जन्म धिष्ण्यम् ॥ शुभं त्व निष्टं सततं विवाह सीमंत यात्रा दिषु मंगलेषु ॥ १६ ॥ मास प्रयुक्त कार्य्येषु मूढत्वं गुरु शुक्रयोः ॥ नदोष कृन्मले मासे गुर्वादि त्यादिकं तथा ॥ १७ ॥ अथ पुंस वन सीमंतो न्नयने ॥ द्वितीये वा तृतीये वा मासि पुंस वनं स्मृतम् ॥ मासे षष्ठे ऽष्टमे वापि गर्भ सीमंत कं विदुः ॥ १८ ॥ पुनर्वसू द्वये मूले श्रवणे मृग हस्तयोः ॥ गुरु भौमार्क वारेषु शीघ्रं पुंस वना दि कम् ॥ १९ ॥ रेवत्यां त्युत्तरे ऽष्ये के शुक्रे चंद्रे बुधे जगुः ॥ मासे शे सबले चंद्रे लग्ने पुंसास के शुभे ॥ २० ॥ सौम्ये ऽकेन्दु त्रिकोण स्थे पापे लाभे त्रिषट्के ॥ अथ मासे श्वरः ॥ मासे श्वरा भृगु भौमि गुरु सूर्ये न्दु सूर्य्यजाः ॥ बुधो लग्न पति श्चन्द्रः सूर्य्य श्चैते यथा क्रमम् ॥ २१ ॥ अथ संस्कारे विशेषः ॥ विवाहे गर्भसंस्का

रे चंद्र शुद्धि स्त्रिया अपि ॥ भूषां वरादि कार्य्येषु भर्तुरेवैंदवं बलम् ॥ २२ ॥ गर्भाधा-
नादि संस्कारे तथान्न प्राशने शिशोः ॥ न तत्र गुरु शुक्रास्तमन्न मासादि दूषणम् ॥
२३ ॥ अथ विष्णु पूजा ॥ सीमंतोर्द्ध शिते पक्षे रोहिण्यां श्रवणे तथा ॥ द्वादशे सप्तमे घस्ते
हर्य्यर्च्चा गर्भ पुष्टये ॥ २४ ॥ अथ सूतिका गृह प्रवेशः ॥ श्रुति त्रयोत्तरा हस्त त्रये पुष्यानु
राधयोः ॥ पुनर्भे रोहिणी युग्मे रेवती द्वितये तथा ॥ २५ ॥ शुभाह्ने प्रश्न वोधुक्ता सूति
का मंदिरं विशेत् ॥ अथ जात कर्म्म ॥ जात कर्म्म क्रियां कुर्य्यात्सुतायुः श्री विवृद्धये ॥ ग्र-
ह दोष विनाशाय सूत का शुभ विच्छिदे ॥ २६ ॥ कुमार ग्रह नाशाय पुंसां सत्व वि-
वृद्धये ॥ एकादशे न्हि विप्राणां क्षत्रियाणां त्रयोदशे ॥ वैश्यानां षोडशे नाम मासा
न्ते शूद्र जन्मनः ॥ २७ ॥ चैत्रादि मास नामानि वैकुंठोऽथ जनार्द्दनः ॥ उपेन्द्रो य-
ज्ञ पुरुषो वासुदेवस्त्रि विक्रमः ॥ २८ ॥ योगीशः पुंडरी काक्षः कृष्णो नंतोऽच्युत-
स्तथा ॥ चक्र धारीति चैतानि कमाराकुर्मनीषिणः ॥ २९ ॥ मार्ग शीर्षे विशाखा

क्षी पौषे लक्ष्मीश्च देवता ॥ माघेतु रुक्मिणी प्रोक्ता फाल्गुने धात्रिनामिका ॥ ३० ॥
चैत्रे मासि रमा देवी वैशाखे मोहिनी तथा ॥ पद्माक्षी ज्येष्ठ मासेतु आषाढे कमलेति
च ॥ ३१ ॥ कांति मती श्रावणे च भाद्रे तु अपराजिता ॥ पद्मावती आश्विनेतु राधा देवी
तु कार्तिके ॥ ३२ ॥ मित्रादित्य मघोत्तराश्रुत भिषक् स्वाती धनिष्ठा च्युत प्राजेशा श्विश
शांक पौष्ण दिन कृत्युध्ये तुरङ्गेतु स्थिरे ॥ छिद्रां पंच दशीं विहाय नवमी षुक्रे ऽ
ष्टमे भार्गवि ज्ञाचार्य्या मृत पाद भानु दिवसे नामानि कुर्य्युः शिशोः ॥ ३३ ॥ श
र्मा संक्राति विख्यातं प्राप्तकाले ऽपिना चरेत् ॥ शर्म्मांतं ब्राह्मणस्या द्वर्म्मांतं क्षत्रियस्य
तु वैश्यस्य धन संयुक्तं शूद्रस्य प्रेष्य संयुतम् ॥ ३४ ॥ मास नाम गुरोर्न्नाम देवा द्वालस्य
वै पिता ॥ देवालय राजधानां वृक्षाणां वापि कूपयोः ॥ ३५ ॥ सर्व पदार्थानां पण्यानां चि
न्हार्थं योषितां नृणां ॥ ३६ ॥ काव्या नाञ्च रूवीणाञ्च पश्वादीनां च सर्वशः ॥ राज
प्रसाद वस्तूनां नाम कर्म्म विधीयते ॥ ३७ ॥ तदं ऋणादि कं नाम यस्मिन्धिते पर

स्वरम् ॥ ये प्रोक्ता ङ ञ णा वर्णाना मादौ संतिते नहि ॥ चेद्भवन्ति तदा ज्ञेया गजडास्ते
यथा क्रमम् ॥ ३८ ॥ अथ जननसमयेदुष्टकालः ॥ तत्रादाव भुक्त मूलम् ॥ ज्येष्ठांत्ये घटिका युग्मं
मूलादौ घटिका द्वयम् ॥ अभुक्त मूल मेत त्स्यादित्येवं नारदो ब्रवीत् ॥ ४२ ॥ वशिष्ठो क्तं त-
योरंत्या घयो रेक हिनादिकम् ॥ अंगिरा घटिका मेकां अन्ये पंचाष्ट तत्रसु ॥ ४३ ॥ जातं
शिशुं त्यजेत्ता तो न पश्येद्द्वा दृष्ट ह्रायनम् ॥ अथ मूल जनने पाद फलम् ॥ आद्ये पिता नाशमुपैति
मूल पादे द्वितीये जननी तृतीये ॥ धनं चतुर्थेऽस्य शुभोऽथ शांत्या सर्वत्र सत्स्याद्दहि भे
विलोमम् ॥ ४४ ॥ दिवा जातस्तु पितरं रात्रौ तु जननीं तथा ॥ आत्मानं संध्ययो र्हंति नास्ति
गंडो निरामयः ॥ ४५ ॥ मूलादि पादो यदि रात्रि भागे तदात्मनो नास्ति पितु र्विनाशम्
॥ द्वितीय पादो दिन गो यदि स्यान्न मातु रल्पोऽपि तदास्ति दोषः ॥ ४६ ॥ माघा षाढा
श्विने भाद्र पद मूलं वशोदिवि ॥ कार्तिके श्रावणे चैत्रे पौषे मासे तु भूतले ॥ ४७ ॥ वैशा
खे फाल्गुने ज्येष्ठे मार्गे पाताल वर्जितम् ॥ भूतले वर्त्तमाने तत् ज्ञेयो दोषोऽन्यथा नहि

४८॥ अथ मूलनक्षत्र ॥ मूलं स्तंभं त्वचाशाखा पत्रं पुष्पं फलं शिखा ॥ मुनयोऽष्टौ दिशो रुद्रा सूर्य्याः पंचाब्धयोऽग्नयः ॥ ४९ ॥ मूलेतु मूल नाशःस्यात् स्तंभे वंश विनाशनम् ॥ त्वचि मातुर्भवेत्क्लेशः शाखायां मातुलस्य च ॥ ५० ॥ पत्रे राज्यं विजानीया त्पुष्पे मं-त्रि पदं स्मृतम् ॥ फले च विपुला लक्ष्मीः शिखायामल्पजीवितम् ॥ ५१ ॥ मूलस्य घटिका न्यासो मूर्द्ध्नि पंच नृपो भवेत् ॥ मुखे सप्त मृतिः पित्रोः स्कंधे वेदा महाबलः ॥ ५२ ॥ बाह्वो रष्टौ बली पाण्यो स्त्रिस्रो हत्यान्वितो भवेत् ॥ हृदि खंदा भूप मंत्री नाभौ द्वौ न्न स्वदि द्भवेत् ॥ ५३ ॥ गुह्ये दशाति कामी स्याज्जानुनोः षण्म हा मतिः ॥ पादयोः षट् स्मृति स्तस्य प्रोक्त बान्कमला शनः ॥ ५४ ॥ अथ कन्या जननेंगविभागः ॥ चतस्रो नाडिकाः शीर्षे कु-र्वन्ति पशुनाशनम् ॥ मुखे षड्धन हानिःस्यात्कंठे पंच धनागमः ॥ ५५ ॥ कौटिल्यं हृदये पंचबाह्वो र्वित्तागमं ततः ॥ वेदाः पाण्यो र्दयां धर्म्मे वेदा गुह्येति कामिनी ॥ ५६ ॥ ज्येष्ठ मातुल नाशश्च जंघयोर्युग नाडिका ॥ ज्येष्ठ भ्रातृ विनाशश्च चतस्रो जानु युग्मके

५७ ॥ पादयो र्दश नाड्यश्च तत्र वैधव्य मादिशेत् ॥ इति मूल प्रसूता याः मुनिभिः फल मीरितम् ॥ ५८ ॥ अथाश्लेषा फलम् पुत्रकन्ययोः ॥ मूर्द्ध्नि पंच सु राज्याप्ति र्मुखे सप्त पितृ क्षयः ॥ नेत्रे द्वे जननी नाशो ग्रीवायां स्त्रीषु लंपटः ॥ ५९ ॥ स्कंधे वेदा गुरौ भक्तिः हस्ते ऽष्टौ चंचली भवेत् ॥ हृदेऽका दश भिश्वात्म घाती संजायते नरः ॥ ६० ॥ स्त्री वान्नाभौ भ्रमः षड्भि र्गुह्ये न वतपो धनः ॥ पादे पंच धनं हंति सार्प्या रेत्फलं क्रमात् ॥ ६१ ॥ अथाश्लेषा वृक्षः ॥ फलं पुष्पं दलं शाखा वल्ली लता स्कंध एव च ॥ सार्प्य वल्ल्यां दशाक्षांक स्व रवि श्वार्क सागराः ॥ ६२ ॥ नाडिका स्तद्भवे वाले फल ज्ञेयं यथा क्रमम् ॥ श्रीः श्री राज भयं हानि र्मातृ पित्रात्म संक्षयः ॥ ६३ ॥ अथ ज्येष्ठा पाद फलम् ॥ आद्ये पादे ऽग्रजं हंति ज्येष्ठाया मनुजं द्विके ॥ तृतीये जननीं हंति स्वात्मानं च तुरीय के ॥ ६४ ॥ पुनः ज्येष्ठा द्येजननी माता द्वितीये जननी पिता ॥ तृतीये जननी भ्राता स्वयं माना च तुर्थ के ॥ ६५ ॥ आत्मानं पंचमे हंति षष्ठे गोत्र क्षयो भवेत् ॥ सप्तमे चो भय कुलं ज्येष्ठ भ्रातर मष्ट

मे ॥ ६६ ॥ नवमे स्व सुरं हंति सर्वं हंति दशांशकः ॥ निर्ऋत्यभेोद्भूत सुत स्सुता वाप्यि श्राद वश्य स्व सुरं नि हंति ॥ तदंत्य पादे जनितो निहंति तस्योत्क्रमे णाहि भवेत्क लत्रम् ॥ ६७ ॥ सुरे यता राजनिता धवा ग्रजं द्विदैवता राज निता च देवरम् ॥ पुरंदर्क्षे जनि- तः सुत स्तया स्वस्रा ग्रजं हंति न पुत्रिका यदि ॥ ६८ ॥ मूल जा स्वसुरं हंति व्याल जा च तदं गजाम् ॥ माहेन्द्र जा ग्रजं हंति देवरं तु द्विदैव जा ॥ ६९ ॥ धवा ग्रजं हंति सुरेन्द्र जाता तथैव पत्न्या भगिनी पुमांश्च ॥ द्विदैव जा देवर माशु हन्याद्भार्या नुजामाशु निहंति सूनुः ॥ ७० ॥ पत्न्य ग्रजा म ग्रजं वा हंति ज्येष्ठा र्क्षतः पुमान् ॥ तथा भार्या स्वसा रं वा श्याल कं वा द्विदैव जः ॥ ७१ ॥ कन्यका देवरं हंति विशाखां त्य समुद्भवा ॥ आ द्य पाद त्रये नैव माद्य भेतु पुमान्भवेत् ॥ ७२ ॥ न हन्या द्देवरं कन्या तुला मिश्र द्विदै व जा ॥ तदृक्षां नोद्भवा वर्ज्यां दुष्टा वृश्चिक पुच्छ वत् ॥ ७३ ॥ चित्राद्यर्द्धे पुष्य मध्ये द्वि पादे पूर्वाषाढा धिष्ण्य पादे तृतीये ॥ जातः पुत्र श्चोत्तरार्द्धे विधत्ते माता पित्रो र्भ्रातरं

बालनाशनम् ॥ ७४॥ द्विमासं चोत्तरा दोषः पुष्ये चैव त्रिमासिकः ॥ पूर्वाषाढाष्टमे
मासि चित्रा षाण्मासिकं फलम् ॥ ७५॥ नवमासं तथा श्लेषा मूले चाष्टकवर्षकं
॥ ज्येष्ठा पंच दशे मासि वर्जितं पुत्र दर्शनम् ॥७६ ॥ व्यतीपातेंग हानि स्स्यात्परि
घे मृत्यु मादिशेत् ॥ वैधृतौ पितृ हानि स्स्यान्न शेन्द्रा वंधतां व्रजेत् ॥ ७७ ॥ मूले
समूल नाशस्स्यात्कुल नाशो धृतौ भवेत् ॥ विकृतांगे च हीने च संध्ययो रुभयो
रपि ॥ ७८ ॥ पर्वण्यपि प्रसूतौ च सर्वारिष्ट भय प्रदः ॥ तद्वत्स दन्त जातश्च पाद
जातस्तथैव च ॥ ७९॥ तस्माच्छांतिं प्रकुर्वीत ग्रहाणां क्रूर चेतसाम् ॥ पूर्णानन्दा
ख्ययो स्तिथ्यो स्संधिर्नाडी द्वयं तथा ॥ ८० ॥ गंडांतं मृत्युदं जन्म यात्रो द्वाह व्रता
दिषु ॥ कुलीर सिंहयोः कीट चापयोर्मीन मेषयोः ॥ ८१ ॥ गंडांत मंतरालं स्याद्घ
टिकार्द्धं मृति प्रदम् ॥ तिथिगंडम् ॥ कृष्णा चतुर्दशी षोढा कुर्य्यादादौ शुभं स्मृतम् ॥ द्वि
तीये पितरं हंति तृतीये हन्ति मातरं ॥ ८२॥ चतुर्थे मातुलं हंति पंचमे वंश नाशनं ॥

षष्ठेच धन नाशःस्या दात्मनो वंश नाशनम् ॥ ८३॥ अथैतेषांदानं ॥ तिथि गंडेच्च नक्षत्रे नक्ष
त्रे धेनु रुच्यते ॥ कांचनं लग्न गंडेतु गंड दोषोविन श्यति ॥ ८४॥ उत्तरे तिल पात्रं स्यात्तु
ष्ये गोदान मुच्यते ॥ अजा प्रदानं त्वाष्ट्रे स्यात्पूर्वा षाढे तु कांचनम् ॥ ८५॥ उत्तरा तिष्य
चित्रासु पूर्वा षाढोद्भवस्य च ॥ कुर्य्याच्छांतिं प्रयत्नेन नक्षत्रा कार जां पुनः ॥ ८६॥ य
द्ये कस्मिन् धिष्ण्ये जायंते दुहित रोऽथवा पुत्राः॥ पितुरंत करा ह्येते यद्य परे भ्रातिरतुला
स्यात् ॥ ८७॥ एकस्मिन्नेव नक्षत्रे भ्रात्रो र्वापित पुत्रयोः ॥ प्रसूतिश्च तयो र्मृत्यु र्भवे-
देकस्य निश्चितम् ॥ ८८॥ ग्रहणे चंद्र सूर्य्यस्य प्रसूतिर्य्यदि जायते ॥ व्याधिः पीडा तथा
स्त्रीणां आद्ये तु ऋतु दर्शनात् ॥ ८९॥ अकाल प्रसवा नार्य्यः कालातीत प्रजास्तथा ॥
विकृत प्रसवा श्चैव युग्म प्रभव कास्तथा ॥ ९०॥ अमानुषा अमुंडाश्च अजा तव्यं जना
स्तथा ॥ हीनांगा अधि कांगाश्च जायंते यदि वास्त्रियः ॥ ९१ ॥ पशवःपक्षि णश्चैव तथै-
वच सरी सृपाः ॥ वि ना श स्तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥ ९२॥ निर्वासयेनां

नगरा त्तन प्रशांतिं समा चरेत् ॥ अथ त्रिक दोष: ॥ सुतत्रये सुता चे त्स्या त्त त्रये वा सुतो यदि ॥ माता पित्रो: कुलस्यापि तदानिष्टं महद्भवेत् ॥ ५३ ॥ एते दुष्ट काला: ॥ गंडांत: परिघ: शूलं व्यतीपातो ऽथ वैधृति: ॥ मूला श्लेषार्द्र्य मा ज्येष्ठा जम घंटो ऽर्क संक्रमम् ॥ ५४ ॥ गंड योगो मृति र्भद्रा व्याघा तो दग्ध वासरा: ॥ कृष्णा चतुर्दशी पात स्तत स्सो दर जन्म भम् ॥ ५५ ॥ तथाव मस्दिनं नेष्टं जन्म काले शि शो: स्त्रिय: ॥ तद्दोष परिहाराय शांतिं कुर्य्याद्य था विधि ॥ ५६ ॥ अथ जन्म समये द्वादश भाव फलम् अथ तनुस्थानस्य ॥ लग्न स्थितो दिन कर: कुरुतेंग पीडां पृथ्वी सुतोवितनु ते रुधिर प्रकोपं ॥ छायासुन: प्रकुरुते वहु दुःख भाजं जीवेन्दु भार्गव वुधा: सुख कांति दा: स्यु: ॥ ५७ ॥ अथ धन स्थानस्य ॥ दुःखा वहा धन विना शकरा: प्रदिष्टा वित्ते स्थि तारवि शनैश्चर भूमि पुत्रा: ॥ चंद्रो वुध: सुर गुरु भृगु नंद नो वा नाना विधं धन चयं कुरुते धनस्थ: ॥ ५८ ॥ अथ सहजस्थानस्य ॥ भानु: करोति विरुजं रजनी करोपि कीर्त्या युतं क्षिति सुत: प्रचुर प्रकोपम्

 ॥ त्र्यरहिं वुध स्सुधि षणं सुविनीत वेषं स्त्रीयां प्रियं गुरु कवी रविज स्तृतीये ॥ ९९ ॥
 अथ सुहृत्स्थानस्य ॥ आदित्य भौम शनयः सुख वर्जितां गं कुर्वन्ति जन्मनि नरं सुचिरं चतुर्थे ॥ सोमो वुधः सुर गुरु र्भृगु नन्दनो वा सौख्या न्वितं च नृप कर्म्म रतं प्रधानम् ॥
॥ १०० ॥ अथ सुत स्थानस्य ॥ पुत्रे रविः प्रचुर कोप युतं वुधस्व स्वल्या त्मजं शनिधरा तनुजाव पुत्रं ॥ शुक्रेन्दु देव गुरवः सुत धाम संस्थाः कुर्वन्ति पुत्र वकुलं सुखिनं सुरूपम्
॥ १ ॥ अथ रिपुस्थानस्य ॥ मार्तंड भूमि तनु जौ हत शत्रु पक्षं पंगु नरं रिपु गृहे ष्वति पूजनीयं ॥ काव्येन्दु जौ मति विहीन मनल्प रोगं जीवः करोति विकलं मरणं शशांकः ॥
॥ २ ॥ अथ जाया स्थानस्य ॥ तिग्मांशु भौम रविजाः किल सप्त मस्था जायां कु कर्म्मनिरतां तनु संत तिंच ॥ जीवेन्दु भार्गव वुधा वहु पुत्र युक्तां रूपा न्वितां जन मनो हर रूप शीलां ॥ ३ ॥ अथ मृत्यु स्थानस्य ॥ सर्वे ग्रहा दिन कर प्रमुखानि तांतं मृत्यु स्थिता नि तनुते किल दुष्ट वुद्धिम् ॥ शस्त्रा भिघात परिपीडित गात्रय ष्टिं सौख्ये र्विहीन म- 

नि रोग गदो नृपे नम् ॥ ४ ॥ अथ धर्म्मस्थानस्य ॥ धर्म्मस्थिता रवि शनैश्चर भूमिपुत्राः कु-
र्वन्ति धर्म्म रहितं विमतिं कुशीलं ॥ चन्द्रो बुधो भृगुसुतः सुरराज मंत्री धर्म्म क्रिया
सुनिरतं कुरुते मनुष्यम् ॥ ५ ॥ अथ कर्म्मस्थानस्य ॥ आदित्य भौम शनयः किल क-
र्म्मसंस्थाः कुर्युर्नरं वहु कुकर्म्म रतं कुपुत्रम् ॥ चंद्रः सुकीर्त्ति मुशना वहु वित्त युक्तं रू-
पान्वितं बुध गुरू शुभ कर्म्म भाजम् ॥ ६ ॥ अथ लाभस्थानस्य ॥ लाभस्थितो दिनक-
रो नृप लाभ युक्तं नारा पति र्वहु धनं क्षितिजः क्षिती शम् ॥ सौम्यो विवेक सुभ गंच ध-
नायु पीज्यः शुक्रः करोति स गुणं रविजः सुकीर्त्तिम् ॥ ७ ॥ अथ व्ययस्थानस्य ॥ सूर्य्यः क-
रोति पुरुषं व्यय गो विशीलं काणं शशी क्षिति सुतो वहु पाप भाजं ॥ चंद्रांग जोगत-
धनं धिषणः कुशांगं शुक्रो वहु व्यय करं रविजः सुतीक्ष्णम् ॥ ८ ॥ राहु केतु फलं सर्वं स-
न्द वत्कथित म्बुधैः ॥ अथ मृत्युयोगः ॥ चंद्राष्ट मं च धरणीसुत सप्त मंच राहुर्नवंच शनि
जन्म गुरुस्तृतीये ॥ अर्कस्तु पंच भृगु षष्ठ बुधश्च तुर्थे जातो न जीवति नरः नव हन्ति सं-

तः ॥ ९ ॥ अथ स्त्रीहंतायोगः ॥ षष्ठेच भवने भौमो राहुःसप्तम संभवः ॥ अष्टमेच्च यदा सौरि स्तस्य भार्य्या न जीवति ॥ १० ॥ अथ पराक्रमयोगः ॥ मूर्त्तौ शुक्र बुधौ यस्य केंद्रे चैव बृहस्पतिः ॥ दशमोंगार को यस्य सज्ञेयः कुल दीपकः ॥ ११ ॥ अथ दुर्बलयोगः ॥ नैव शुक्रो बुधो नैव नास्ति केन्द्रे बृहस्पतिः ॥ दशमोंगार को नैव सजातः किं करिष्यति ॥ १२ ॥ अथ जातिभ्रंश कारक योगः ॥ धन स्थाने यदा सौरिः सैंहिकेयो धरात्मजः ॥ शुक्रो गुरुः सप्तमे च त्वष्ट मौरवि चंद्रकौ ॥ १३ ॥ ब्रह्म पुत्र पदे वापि वेश्यासु च सदा रतिः ॥ प्राप्ते विंशति मे वर्षे म्लेच्छो भवति नान्यथा ॥ १४ ॥ अथ मातृ पितृ नाशक योगः ॥ षष्ठे च द्वादशे राशौ यदा पाप ग्रहो भवेत् ॥ तदा मातृ भयं विद्या च्चतुर्थे दशमे पितुः ॥ १५ ॥ अथ मृत्युकारक योगः ॥ अर्को राहु कुजः सौरि र्लग्ने तिष्ठति पंचमे ॥ पितरं मातरं हंति भ्रातरं स्वं शिघ्रशुक्रमात् ॥ १६ ॥ लग्न स्थाने यदा सौरिः षष्ठे भवति चंद्रमाः ॥ कुजस्तु सप्तमे स्थाने पिता तस्य न जीवति ॥ १७ ॥ पाताल स्थो यदा राहु श्चेंदुः षष्ठाष्ट मे पिच ॥ पाप

दृष्टोपि विशेषेण सद्यः प्राण हरः शिशोः ॥ १८ ॥ जन्म लग्ने यदा राहुः षष्ठो भवति चंद्र
माः ॥ जातो मृत्युम वाप्नोति कुदृष्ट्या त्वपमृत्युना ॥ १९ ॥ जन्म लग्ने यदा भौम श्चाष्ट
मेच बृहस्पतिः ॥ वर्षेच द्वादशे मृत्यु र्यदि रक्षति शंकरः ॥ २० ॥ शनि क्षेत्रे यदा सूर्यो
भानु क्षेत्रे यदा शनिः ॥ वर्षेच द्वादशे मृत्यु र्देवो वै रक्षिता यदि ॥ २१ ॥ षष्ठोष्टम स्त
था मूर्तौ जन्म काले यदा बुधः ॥ चतुर्थ वर्षे मृत्युश्च यदि रक्षति शंकरः ॥ २२ ॥ भौम
क्षेत्रे यदा जीवः षष्टाष्ट सु च चंद्रमाः ॥ वर्षे ष्टमेपि मृत्युर्वै ईश्वरो रक्षिता यदि ॥ २३
दशमोपि यदा राहु र्जन्म लग्ने यदा भवेत् ॥ वर्षेतु षोडशे ज्ञेयो बुधे र्मृत्यु र्नरस्य च ॥
२४ ॥ अथ ग्रहाणां दृष्टिः ॥ पादैक दृष्टि र्दशमे तृतीये द्विपाद दृष्टि र्नव पंचमे वा ॥ त्रिपाद दृ
ष्टि श्चतुरष्ट केच संपूर्ण दृष्टिः सम सप्त केच ॥ २५ ॥ शने स्त्रैका दशे पूर्णा दृष्टि र्जीवस्य
कोण के ॥ बुधे ज्ञेया पूर्णा दृष्टि र्भौमि स्य चतुरष्टके ॥ २६ ॥ अथ ग्रहाणां उच्च त्वनी चत्वम्
॥ रवि र्मेषे तुले नीचो वृषे चंद्र स्तु वृश्चिके ॥ भौमश्च नक्रे कर्केच स्त्रियां सौम्यो झषे तथा

समूहं दोषाणां दहन इव तूलं प्रशमयति ॥ २२१ ॥ अथ पंगवंधादित्याज्यलग्नानि ॥ दिने सदा
न्धा वृष मेष सिंहाः रात्रौ च कन्या मिथुनं कुलीरः ॥ मृगस्तु लाति वधिरो पराह्ने संध्या
सु कुब्जा घट धन्वि मीनाः ॥ २२२ ॥ दिवान्धो वर हंता च रात्र्यंधा धन नाशकाः ॥ दुः
ख दो वधिरो लग्नः कुब्जो वंश विनाशकः ॥ २२३ ॥ अथ होलाष्टकम् ॥ शुक्लाष्टमीं समार
भ्य फाल्गुनस्य दिनाष्टकम् ॥ पूर्णिमा मवधिं कृत्वा त्याज्यं होलाष्टकं शुभे ॥ २२४ ॥
ऐरावत्यां विपाशायां शतद्रौ च त्रिपुष्करे । होलाष्टकं विवाहादौ त्याज्य मन्यत्र शोभन
म् ॥ २२५ ॥ राष्ट्रायो मास शून्याश्च लग्नं काणांध पंगुयत् ॥ तत्त्याज्यं मालवे गौडे ना
न्यत्रा शुभदं स्मृतम् ॥ २२६ ॥ हन्या हिनार्द्र जन्दोषं तिथि स्सिद्धा वमोद्भवम् ॥ गुरुः
केन्द्र गतः शून्य तिथिजं लाभ गश्शुभः ॥ २२७ ॥ अब्दायनर्तु मासोत्थाः पक्ष तिथ्यृ
क्ष संभवाः ॥ काणांध वधिरोद्भूता दग्ध लग्न तिथेर्भवाः ॥ २२८ ॥ अकाल जाश्च नी
हार विद्युत्पाताभ्र संभवाः ॥ पापे वेधे शती सूर्य्ये शक्र चाप ध्वजादयः ॥ २२९ ॥ दोष

प्रदा मंगलेषु कालजा श्चेन्न दोषदाः ॥ वृषभो वृश्चिको मीनः कन्या मकर कर्कटाः ॥
२३० ॥ लग्ने ष्वेतेषु नो दोषो जन्म तोह्यष्टमे ष्वपि ॥ अथ शुभनवांशाः ॥ कन्या युग्म तुला
धन्वि नवांशाश्च शुभदा ग्रहाः ॥ विवाहे न्येतु मीनस्य नवांशाः शुभदा जगुः ॥ २३१॥
अथभंगदाग्रहाः ॥ लग्ने शनै श्चरः सूर्यो लग्नारि र्निधने शशी ॥ लग्ने ऽष्टमे मही सूनुरस्त
मे बुधवाक्पती ॥ २३२॥ राहु स्तुर्ये विलग्ने वा निधनारि गतो भृगुः ॥ द्यूनेतु खेचरा स्स
र्वे विवाहे भंगदाः स्मृताः ॥ २३३॥ कुजः रवे द्वादशे मन्दो लग्ने शो निधनारि गः ॥ तृ
तीये भार्गव श्चन्द्रो व्यये नैते ऽपि शोभनाः ॥ २३४॥ अथरेखाप्रदाग्रहाः ॥ त्र्यायाष्ट षट्
सुर विकेतु तमो ऽर्क पुत्राः त्र्याया रिगः क्षिति सुतो द्वि गुणाय गो ब्जः ॥ सप्त व्ययाष्ट रहि
तौज्ञ् गुरू सितो ष्ट त्रि द्यून षट् व्यय मदाद्य रिहन्त्य शस्तः ॥ २३५॥ अथदिनज्ञानम् ॥ छा
या पादो रसो पेतो एक विंश शतं भजेत् ॥ लब्धां के घटिका ज्ञेया शेषां के च पलाः
स्मृताः ॥ २३६ ॥ अथेष्टकालाह्नमायनम् ॥ सायनार्कस्य भवानि निजोदय विनाडिकः

स्वत्रि भक्ता भवेद्भोग्य कालो लब्ध पलात्मकः ॥ २३७ ॥ सोध्यो ऽभीष्ट घटी भ्यश्च तद्गम निजोदयः ॥ शोध्याः शेष खरा मध्रान शुद्ध तिथि भाजितम् ॥ २३८ ॥ लब्धमं शादिकं योज्यं मेषादौ शुद्ध राशिभिः ॥ अयनांश विहीनाय विलग्नं तत्स्फुटं भवेत् ॥ २३९ ॥ भोग्य कालेन शुद्धिश्चेदिष्ट कालः पलात्मकः ॥ खरा मघ्रो हृतस्वी योदये नाप्तिं ल वादि कम् ॥ २४० ॥ योज्यं सूर्ये स्फुटं लग्न मयनांश वि वर्ज्जितः ॥ रात्रीष्ट काल तो वापि सषड्भार्काच्च पूर्ववत् ॥ २४१ ॥ अथास्पष्ट लग्नादिष्ट काल ज्ञानम् ॥ भानो र्भोग्य स्तुयः कालो भुक्त काल स्तथा तनोः ॥ तदैक मेतयो र्म्मध्यो दयाढ्यं समय स्स्फुटः ॥ २४२ ॥ यद्ये कर्क्षेतु लग्नार्कौ तियो र्भागान्तरे हृतः ॥ स्वीयो दयः खरा माप्तो ऽभीष्ट काल स्फुट स्तदा ॥ २४३ ॥ अथ प्रशस्त योगः ॥ शुभै स्तनु गतैः खेटै र शुभै र्निधनो पगैः ॥ ध्वजो यं परिणीतात्र युवती प्रिय वल्लभा ॥ २४४ ॥ कुजे ऽर्के लाभ गे षष्ठे शनौ चन्द्रे द्वितीयगे ॥ धर्म्मस्थे खेचरै रन्यैः श्रीवत्सो योग उत्तमः ॥

२४५ ॥ यदि स्यात्कन्यका लग्ना तृतीये चन्द्र वाक्पती ॥ पञ्चमे भृगुरानन्दो योग-
श्चानंद कृत्सदि ॥ २४६ ॥ लाभेऽर्केऽरिगृहे भौमे दुश्चिक्येऽथ शने श्चरे ॥ यो-
गो यमर्द्ध चन्द्राख्य स्तत्रो ढा शुभगा सती ॥ २४७ ॥ गुरौ धर्म्मे बुधे मूर्त्तौ लाभे मंदे
गजाभिधः ॥ परिणीता हि वा मासी साध्वी धर्म्मार्थ दायिनी ॥ २४८ ॥ खतूर्य नव
गे स्तौम्यैः प्राखोय शुभ कृत्सदा ॥ अथ नेष्ट योगाः ॥ पापा चक्रस्य पूर्वार्द्धे पश्चार्द्धे सौ-
म्य खेचराः ॥ विवाहे चक्र योगोऽयं न दूढा स्वैरिणी भवेत् ॥ २४९ ॥ सर्वैः केन्द्र गतैः
पापैः वापी योगोऽति निंदितः ॥ सौम्यै लग्ने व्यये वित्ते पापैः को दण्ड कोऽप्य सत् ॥
२५० ॥ भौमे द्वादशगे षष्ठे शुक्रे तुर्य्ये शने श्चरे ॥ कुठारोऽयं समाख्यातः शुभवल्ली
विदारणः ॥ २५१ ॥ व्यये केन्द्र विगे शुक्रे रिपौ मन्देऽष्टमे विधौ ॥ योग स्यात्कूर्म्मना
मा यमत्रो ढाभिक्षुकी भवेत् ॥ २५२ ॥ रवौ लग्ने व्यये मन्देऽष्टमेऽब्जे मुशला युधः
॥ तत्रोढाया कुमारी सा कुल मारी भवेद्ध्रुवम् ॥ २५३ ॥ अथ गोधूलिकलग्नं ॥ विन्ध्यादि कुलि

के क्रांतं विद्धं भं पाय युक् तथा ॥ लग्नाष्टारि गतं चन्द्र लग्ने गोधूलिकं त्यजेत् ॥ २५४
॥ नान्यो गोधूलिके चिंत्यो दोषा श्चण्डा युधादयः ॥ अपघन्ते यत स्सर्वे गोरजो भिस्स
मंततः ॥ २५५ ॥ यत्र चैका दश श्चन्द्रो द्वितीयो वा तृतीयगः ॥ गोधूलिक स्स विज्ञे-
य श्शेषा धूलिसुखाः स्मृताः ॥ २५६ ॥ कुलिकं क्रांति साम्यं च मूर्तौ षष्ठाष्ट ग श्शसी ॥
पंच गोधूलिके त्याज्या श्चन्ये दोषा श्शुभा वहाः ॥ २५७ ॥ पाव द्दिनांते निशि पश्चिमा
यां पश्येत्तृतीयं रवि बिंब भागम् ॥ तस्मात्परं नाडिक युग्म मेके गोधूलिकालं मुनयो व-
दन्ति ॥ २५८ ॥ अर्द्धा स्तात्पूर्व मप्यूर्द्ध घटि कार्द्धं तु गोरजः ॥ शनौ सार्के गुरौ चास्ते उ-
भयत्रा न्य वासरे ॥ २५९ ॥ स कालो मंगले श्रेया न्विवाहादौ शुभ प्रदः ॥ अर्द्ध बिंबा-
स्तं के चिद्घटी द्वय मिदं ज्जगुः ॥ २६० ॥ निदा घेसार्द्ध बिंबेऽर्के पिंडी भूते हि मांग के ॥ मेघकाले
तु पूर्णास्ते प्रोक्तं गोधूलिकं शुभम् ॥ २६१ ॥ प्राच्यानां च कालिंगानां मुख्यं गोधूलिकं स्मृ
तम् ॥ गांधर्वादि विवाहेषु वैश्यो द्वाहे तु योजयेत् ॥ २६२ ॥ विप्रेषु घटिका लाभे दातव्यं -

गोरजोंबुधैः ॥ सकीर्णे गोरज स्समस्तं परेषु हितयं शुभम् ॥ २६३ ॥ मह्ला शेषान्य रित्य-
ज्य शोकान् धिसादि के शुच ॥ कार्येष्ठे रजोधा वत्ता वहग्नं शुभा वहम् ॥ २६४ ॥ अ-
थ यद्दवशात् ज्ञानम् ॥ सूर्य्या त्स्याति स्त्रीच विधो स्तथा राहितं सुतो ध्वान्च सुखं गुरो श्च ॥
धर्म्म स्सिता दर्के सुताच्च वेश्म ब्रूयात्स मुद्दाह विधौ स्व युक्त्या ॥ २६५ ॥ लग्नो देह:
भृगु स्त्व भ्रुः स्व भुरो ऽ कौमन प्रशा श्री॥ भर्त्ता कांता कल त्रेश स्त ल लभा त्सुखं वदेत
॥ २६६ ॥ सुखं स्वोच्चो दिते ज्ञेयं दुःखं नीचा स्तगा दिभिः ॥ अथा वश्य के राज्ञां खड्ग विवाह:
॥ चंद्र पञ्चांग सं शुद्धो सौम्याय न विवाह भे ॥ राज्ञो गो धूलिके लग्ने खड्गो द्वाह: प्र-
शस्यते ॥ २६७ ॥ अथ हीन जातीनां विवाहे विशेषः ॥ अनुक्त तिथि मास र्क्षे संकीर्णानां प्रु
अप्रद: ॥ विवाहो धन पुत्रायुः प्रीति सौख्य करो भवेत् ॥ २६८ ॥ अथ शूद्रादीनां स्त्रि-
या पुन र्विवाह: ॥ शूद्रा दीनां विवाह र्क्षे पुन रुद्वहनं स्त्रियः ॥ रात्रौ कुर्य्यान्न तत्रास्ति ति
थि मासादि शोधनम् ॥ २६९ ॥ सूर्य्य भा द्वेद ४ नेत्रा २ ग्नि ३ भू १ चन्द्रा १ ब्धि रसा ६

नयः ३ ॥ भू २ राम ३ संमिता स्तारा गंधर्वादि विवाह के ॥ २७० ॥ नेष्टाः श्रेष्ठाः
क्रमा देतास्त्रि पद्यां गदिता बुधैः ॥ २७१ ॥ अथ विवाहांग कार्य्यं ॥ कार्य्यं विवाह का-
र्य्यांगा विवाहो दित भे जनैः ॥ विवले ऽपि विधौ हित्वा त्रिषष्ठ नवमं दिनम् ॥ २७२
॥ चित्रा विशाखा श्रुत तार काश्विनी ज्येष्ठा भरण्यौ शिव भाच्च तुष्टयम् ॥ हित्वा
प्रशस्तं फलते लवेदि का मडान कं कंडन मंडनादि कर्म् ॥ २७३ ॥ मूलेन्तु रुद्र
श्रवणार्क पौष्ण विश्वेष्ठ चित्रा नर्त्तरेवतीषु ॥ संस्थापनं कं जिक कुंडिका या वारे
रवे भूमि सुतस्य प्रस्तम् ॥ २७४ ॥ अथ तैल लेपने दिन संख्या ॥ मेषादि राशि जातानां
कुर्य्यात्तैलादि लेपनम् ॥ शैल दिग्बाण दिग्बाणान्स प्तांगेषु शरेष्विषु ॥ २७५ ॥
बाण शैलेषु घस्लेषु क्रमात्कै श्चि दिती रितम् ॥ अथ वेदिका निर्म्माणम् ॥ हस्तो छ्रितान्च तु-
र्हस्तैश्च तुरस्त्रां समंततः ॥ स्तंभैश्चतुर्भि स्तु प्रलस्तौ र्वाम भागे स्वसद्मनः ॥ २७६ ॥
ई शान्यां स्थापये त्स्तंभं सिंहादि त्रितये खौ-वृश्चिकादि त्रि भे वायौ नैर्ऋत्यां कुंभतस्त्रिभे

 ॥ वृषात्त्रयं तथा मे यां स्तंभ खात स्तथे वह्नि ॥ २७७ ॥ अथ विवाहानंतरं मंडपो द्वासनम्

 ॥ मण्डपो द्वासनं कार्य्यं समे च शुभ भे तिथौ ॥ षष्ठं तु विषमं नेष्टं मुक्ता सप्तम पंचमौ

॥ २७८ ॥ उत्पातान्सह पात दग्ध तिथि भिर्दुष्टां श्च योगां स्तथा चन्द्रे ज्योष्णन

साम ष्या स्तमयनं तिथ्याः क्षयर्द्धी तथा ॥ गंडांते सच विष्टि संक्रम दिनं तन्वं शपयास्तं

तथा तन्वंशेश विधून थाष्टरिपुगान्या पस्य वर्गास्तथा ॥ २७९ ॥ सेन्दु क्रूर खगो

दयांश मुदयास्ता शुद्धि चंडा युधान् खार्जूरं दश योग योग सहितं या मित्र लत्ता-

भिधम् ॥ वाणो पग्रह पाप कर्त्तरि तथा तिथ्य र्क्षयो गोत्थितं दुष्टं योग मथार्द्ध यामकु-

लिका द्यान्वार दोषा नपि ॥ २८० ॥ क्रूरा क्रांत विमुक्त भं ग्रहण भं यत्क्रूर गन्तव्य भं त्रे

धोत्पात हतं च केतु हत भं संध्यो दितं भं तथा ॥ तद्वच्च ग्रह भिन्न युद्ध गत भं सर्वानि मा-

संन्त्यजे दुद्वाहे शुभ कर्म्म सुग्रह कृतान् लग्न स्य दोषा नपि ॥ २८१ ॥ द्विवेदि कुल

सम्भूत सरयू कुल संग्रहे ॥ शिरो मणौ समाप्तैषा प्रभा पंच दशी शुभा ॥ २८२ ॥ इति 

श्री संग्रह शिरोमणौ विवाह कथनं नाम पंच दशी प्रभा २५ ॥ अथ वधू प्रवेश प्रकरणम् ॥ आ-
रभ्यो द्वाह दिवसा त्षष्ठे वाप्यष्टमे दिने ॥ वधू प्रवेश स्संपत्त्यै दशमेऽथ समे दिने ॥ १ ॥ व-
धू प्रवेशनं कार्य्य म्पञ्चमे सप्तमे दिने ॥ नवमे च शुभे वारे सुलग्ने शशिनो बले ॥ २ ॥
विवाह मारभ्य वधू प्रवेशो युग्मे दिने षोडश वासरान्तः ॥ ऊर्द्धन्ततोऽब्देऽयुजि पंच
मांतं पुनः पुरस्ता न्नियमो नवास्ति ॥ ३ ॥ श्रवण द्वितये मूलेऽनुराधा रोहिणी मृगे
॥ हस्त त्रये मघा पुष्ये त्र्युत्तरे रेवती द्वये ॥ ४ ॥ प्रवेशो शुभदो वध्वाः सोमे शुक्रे गुरौ
शनौ ॥ मध्यो वुधे कुजार्कौ तु नेष्टो रिक्ता तिथि स्तथा ॥ ५ ॥ विवाहा त्प्रथमे पौषे
आषाढे चाधि मासके ॥ न सा भर्तृ गृहे तिष्ठे च्चैत्रे तात गृहेऽपि च ॥ ६ ॥ ज्येष्ठे पति
ज्येष्ठ मथाधिके पतिं हन्त्यादिमे भर्तृ गृहे वधूः शुचौ ॥ श्वश्रुं सहस्ये श्वसुरं क्षये
तनुं तातं मधौ तात गृहे विवाहतः ॥ ७ ॥ इतिवधूप्रवेशनम् ॥ अथ द्विरागमनम् ॥ विवाहा
द्विषमे वर्षे कुंभे मेषालि गेरवौ ॥ वलिन्यर्के विधौ जीवे शुभा हे चाश्विनी मृगे ॥ ८

रेवती रोहिणी पुष्ये त्र्युत्तरे श्रवण त्रये ॥ हस्त त्रये पुनर्वस्वो स्तथा मूला नुराधयोः ॥ ९ ॥ कन्या मीन तुले युग्म वृषे प्रोक्त वला न्विते ॥ लग्ने पद्म दला क्षीणां द्विरागमन मिष्यते ॥ १० ॥ सन्मुखे दक्षिणे शुक्रे नो गच्छेत्तु कदाचन ॥ गर्भिणी तु विगर्भा स्यान्नवोढा वंध्यतामियात् ॥ ११ ॥ वालकश्च विपद्येत विमोहादपि चेद्व्रजेत् ॥ भौमार्कि वर्ज्जितो वारा वृक्षा षष्ठी च निंदिते ॥ १२ ॥ द्वादश्यय मासदा वर्ज्या द्विरागमन कर्म्मणि ॥ दीपोत्सवे दोषापवादः ॥ अस्तं गते गुरौ शुक्रे सिंह स्थे वा वृहस्पतौ ॥ दीपोत्सव दिने चैव कन्या भर्तृ गृहं विशेत् ॥ १३ ॥ स्व भवन पुर प्रवेशे देशानां विभ्रमे तथोद्वाहे ॥ नूतन वध्वा गमने प्रति शुक्रं विचारणं नास्ति ॥ १४ ॥ एक ग्रामे पुरे वापि दुर्भिक्षे राज विप्लवे ॥ विवाहे तीर्थ यात्रायां प्रति शुक्रं न दुष्यति ॥ १५ ॥ पित्रा गारे कुच कुशुमयोस्संभवो वा यदि स्यात् पत्युश्शुद्धिर्न्न भवति रवेः सम्मुखो वाथ शुक्रः ॥ शुद्धे लग्ने गुणवति तिथौ चन्द्र तारा विशुद्धौ स्त्रीणां यात्रा भवति सफला सेवितुं स्वामि सद्म ॥

॥ १६ ॥ कश्यपेषु वशिष्ठेषु भृगवत्र्यांगिरसे षु च ॥ भारद्वाजेषु वत्सेषु प्रति शुक्रे न दुष्यति ॥ १७ ॥ विवाहे गुरु शुद्धिश्च भृगु शुद्धि र्द्विरागमे ॥ त्रिगमे राहु शुद्धिश्च चन्द्र शुद्धि श्चतुर्गमे ॥ १८ ॥ आद्यर्क्षे भ्रमते राहुः पूर्वा शादिक् चतुष्टये ॥ सराहु दक्षिणे त्याज्य स्तृतीय गमने स्त्रियः ॥ १९ ॥ गमोक्त तिथ्यादिषु कारये द्बुधो वध्वा स्तृतीयं पति वेश्म नो गमः ॥ तत्रा लित स्त्रि त्रिभि संस्थिते रवौ प्रागादि राहु र्न्न शुभोग्र दसे ॥ २० ॥ गेहा त्पुरा च्चान्य गृहे पुरे वा देशे तृतीये च वधू प्रवेशे ॥ युद्धे ऽलि गेहा त्त्रि भगेन सूर्ये प्रागादि राहु र्न्न शुभो ग्र दसे ॥ २१ ॥ मार्गादि केषु त्रिषु मास्तु पूर्वाद्यास्यां तथा फाल्गुण तः प्रयाति ॥ ज्येष्ठा त्प्रती चीन्दिश मुत्तरस्यां भाद्रादिकेषु त्रिषु याति राहुः ॥ २२ ॥ सौरेन मासेन विचिंत्य मेतत् मार्गाद्य था वृश्चिक तस्तथैव ॥ त्रिभि स्त्रिभी राशि भि रिन्द्र दिक् तो ककुप्सु राहु भ्र्चति सृष्टि हेति ॥ २३ ॥ मेषादि राशीषु चतुर्षु गते पतं गेभ्या वर्त्य पूर्व ककुभः क्रमतः प्रयाति ॥ राहुः

ककुप्सु चतस्त्रष्वपि वर्ज्जनीयो ह्युद्योगेषु कर्म्मसु संसन्मुख दक्षिणस्थः ॥ २४ ॥
येन्त्र राहौ वैधव्यं दक्षिणे सुखदो भवेत् ॥ पृष्ठे पुत्रवती नारी वामे दो भाग्यवर्द्धि
नी ॥ २५ ॥ छागे नर्क्ष १ शरां ५ क ७ राशिषु गते पूर्वे मृगो छां १० गनास्ये २।६
याम्ये वरुणालये घट तुलायुग्म र्क्ष ११।७।३ संस्थेऽसुरे ॥ सौम्येऽन्त्यान्त्य च कर्क
गे ८।१२।४ धवगृहे वध्वास्तृतीये गमे वामः पृष्ठगतः शुभो मुनिवरैर्भूमासिकः
कीर्त्तितः ॥ २६ ॥ आदित्य हस्तेऽन्त्य मृगाश्वि मैत्रे तथाश्र विष्ठास्वपि वात पित्रे
॥ वध्वास्तृतीये गमने प्रशस्तं स्याद्योगिनी शूल तमे विशुद्धे ॥ २७ ॥ न सन्मुख
स्थे न च दक्षिणस्थे यात्रा तृतीया पति साधनेष्टा ॥ वध्वास्तृतीये गमने स्वभर्तुर्गृ
हे सुवारेसु तिथौ प्रशस्तम् ॥ २८ ॥ वत्सोऽयं वाम भागे गुर्दक्षिणे पुरुषस्य च ॥
उभयोः पृष्ठदेशे च शोभनं यामतो मतम् ॥ २९ ॥ अथ विशेषः ॥ त्रिमासं मासि
कं चैव त्रिपक्षं द्वि मुहूर्त्तकम् ॥ चतुर्विधं गतिं राहोर्म्मुनीनां चाभि भाषितम् ॥

॥ ३० ॥ गृहारंभे त्रिमासं च वधू यात्रा सुमासिकम् ॥ गृह प्रवेशे त्रिपक्षं युद्ध काले ऽर्द्ध यामिकम् ॥ ३१ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरोमणौ समाप्तैया प्रभेयं षोडशी शुभा ॥ ३२ ॥ इति संग्रह शिरो मणौ वधू प्रवेश द्विरागमनादि कथनं नाम षोडशी प्रभा १६ ॥ अथाग्न्याधानम् ॥ सौम्यायने विशाखायां कृत्तिका रोहिणी मृगे ॥ त्र्युत्तरे रेवती ज्येष्ठा पुष्येऽग्न्या धान मिष्यते ॥ १ ॥ कुजेऽर्केऽब्जे गुरौ शुक्रे नो नीचेऽस्तं गतेऽरिभे ॥ नो रिक्तायां तिथौ कर्के लग्ने नैव मृगात्त्रये ॥ २ ॥ अग्न्याधानं प्रकुर्वीत नेन्दौ लग्न गतेऽपि च ॥ त्रिकोणे पञ्चमे केन्द्रे सूर्य्य जीव कुजेन्दु षु ॥ ३ ॥ शेषे चोप चये शुद्धे रंध्रेऽग्न्या धान मुत्तमम् ॥ लग्ने जीवे धनुर्गे वा द्यूने ७ ख १० वाज गे कुजे ॥ ४ ॥ चन्द्रे वा त्रिषडा यस्थे सूर्य्ये वा दीक्षितो भवेत् ॥ यस्य चा धान लग्नस्थे चंद्रे वा भृगुनंदने ॥ जायेत तस्य जातोऽग्नि निर्वाणः सततं कुले ॥ ५ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्तैया प्र-

भा सप्तदशी शुभा ॥ ६ ॥ इति श्री संग्रह शिरोमणावग्न्याधान कथनं नाम स-
प्तदशी प्रभा १७ ॥ अथ राजाभिषेक प्रकरणम् ॥ उदिते ऽ ब्जे गुरौ शुक्रे विचैत्रे चोत्तरायणे
॥ जन्मेंशे वास्तकें गें शे रवौ भौमे बलान्विते ॥ १ ॥ रोहिणी द्वितये पुष्ये ज्येष्ठा
यां त्र्युत्तरे तथा ॥ रेवती युगले हस्ते चित्रायां श्रवणे ऽपि च ॥ २ ॥ तिथौ वारे शुभे
ऽर्क्षे ऽपि कुर्य्याद्राजाभिषेचनम् ॥ स्थिरे चोपचये लग्ने जन्म भान्मस्तकोदये ॥
३ ॥ शुभे युक्ते क्षिते वापि पाप दृग्योग वर्ज्जिते ॥ धन केन्द्र त्रिकोणस्थ्य रहितैः
पाप खेचरैः ॥ ४ ॥ सौम्यैरषष्ठ गैस्सर्वैर्व्यय मृत्यु विवर्ज्जितैः ॥ केन्द्र त्रिकोण
गैःसौम्यैरसौम्यैः षट् त्रिलाभगैः ॥ ५ ॥ सुहृत्स्वर्क्षोच्चगैः खेटैः नीचारातिभ
वर्जितैः ॥ राज योगो चिते लग्ने कुर्य्याद्राज्ये ऽभिषेचनम् ॥ ६ ॥ पापैस्तनौ
रुक् निधने मृतिः सुते पुत्रार्तिरर्थी व्यय गौ दरिद्रता ॥ स्यात्खे ऽलसो भ्रष्ट पदो धु
नाम्बुगैः सर्वं शुभं केन्द्र गते प्यशुभ ग्रहैः ॥ ७ ॥ गुरु लग्न कोणे कुजारै सितः

रवे स राजा सदा मोदते राज लक्ष्म्या ॥ तृतीयाय गौ सौरि सूर्यौ ख वंध्यो गुरुश्चे द्धरि-
त्री स्थिरा स्यान्नृपस्य ॥ अथ युवराज्याभिषेकः ॥ युवराज्याभिषेकः स्यादभिषेकोक्तभा-
दिषु ॥ अथ पुत्राभावेऽन्यस्याभिषेचनम् ॥ स्वज्ञाति राज्ञस्तत्स्थाने पुत्राभावे कुलोद्भवम्
॥ नो चिंत्यास्तिथि वाराद्यास्तत्कालमभिषेचने ॥ ९ ॥ राजचिन्ह धारणम् ॥ चामरं
छत्र दोलादि पीठ सिंहासनादिकम् ॥ यदाभिषेक के सर्वं विदध्याच्छोभनेऽहनि
॥ १० ॥ द्विवेदि कुल सम्भूत सरयू कूल संगते ॥ शिरोमणौ समाजैषा प्रभा ह्यष्टा-
दशी शुभा ॥ ११ ॥ इति श्री संग्रह शिरोमणौ राज्याभिषेक कथनं नामाष्टा-
दशी प्रभा १८ ॥ अथ यात्रा प्रकरणम् ॥ विज्ञात जन्मनां राज्ञां ज्ञात्वा शुभ फलोदयम्
॥ योज्या यात्रा शुभे पृष्टास्ता प्रश्नाद ज्ञात जन्मनाम् ॥ १ ॥ अथ प्रश्न लग्नाद्यात्रा या
शुभाशुभ फलम् ॥ जनुषो लग्न राशौ वा लग्नेऽस्ते वा तदीश्वरौ ॥ ताभ्यां चोपच-
यं लग्नं तदा राज्ञां जयो ध्रुवम् ॥ २ ॥ जन्मतो लग्नभे शत्रो स्तूर्येऽस्ते बातयोप-

तिः ॥ ताभ्यामुपचयं भं वा यातुस्याद्वैरिसंक्षयः ॥ ३ ॥ जयो लग्नेऽथ सद्वर्गे भं वे
च्छीर्षोदयेऽपि वा ॥ शुभैर्युक्ते क्षिते वापि शुभा यात्रा चरोदये ॥ ४ ॥ स्थिरोदये
गमो नस्याच्छुभे दृष्टे युते शुभे ॥ द्विस्वभावोदये पापैर्युक्ते वाथ निरीक्षिते ॥ ५ ॥
प्रस्थितोऽपि निवर्त्तेत निर्ज्जितोऽरिजनैः पुनः ॥ रम्ये भूमितले दृष्टे शुभे मांगल्य
वस्तुनि ॥ ६ ॥ अत्यादरेऽपि चेत्प्रश्ने जयो लाभोऽपि जायिनाम् ॥ भृगौ लग्ने बु
धे तुर्य्ये सहोत्थेऽर्के सुते गुरौ ॥ ७ ॥ लाभगैरपरैः शत्रून्जित्वाभ्येति न्रपो गृहम्
। लग्ने भौमेऽथवा मन्दे सुते जीवेऽथवा रवौ ॥ ८ ॥ लाभे कस्मरिणी वा चन्द्रे शुक्रेऽ
ऽपि विजयो ध्रुवम् ॥ लग्ने भौमेन्दुयुक्ते वा दिनेशतनुजेक्षिते ॥ ९ ॥ चंद्रे वा नि
धनेऽस्तस्थे भास्करे लग्नवर्त्तिनि ॥ पापैर्वाधून लग्नाष्ट हिबुको पगते र्ग्रहैः ॥
१० ॥ एभिस्त्रिभिश्च दुर्य्योगैः प्रष्टुर्भंगो न संशयः ॥ कोणे भौमा बुधे ज्या र्किशु
क्रा वेषु चतुर्ष्वपि ॥ ११ ॥ एकश्चेद्गमनं न स्यात्सूर्य्यो द्वा कोणगो विधौ ॥ नयेद्दा

स्वदिशं सोऽन्वयः खेटो बलवांस्तयोः ॥ २२ ॥ प्रश्ने गम्यदिशी शात्खेटः पंचमगो-
यः ॥ वो भूया द्बल युक्तस्त्वामाशां नयतेऽसौ ॥ २३ ॥ अथ संक्रांति यात्रा ॥ मेषसिं-
ह धनुः संस्थे यात्रा शस्तां शुमालिनि ॥ कुंभ नक्रांगनाशुग्म राशि संस्थे तु मध्य-
मा ॥ १४ ॥ कर्कालि मीन गेऽर्केनु यात्रा दीर्घतमा मता ॥ विशेषोऽपि ॥ यात्रा ज-
सिंह तुरगोपगते वरिष्ठा मध्या शने श्चर बुधो शन सां गहेषु ॥ भानौ कुलीर वृष वृ-
श्चिकगेऽतिदीर्घा शस्तश्च देवल मतेऽथ निपृष्ठ गोऽर्कः ॥ १५ ॥ अर्द्ध यामावशे-
षा या रात्रेर्याम प्रमाणतः ॥ अष्टास्वपि क्रमाद्दिक्षु भ्रमणं भास्वतः स्मृतम् ॥
१६ ॥ अङ्गारिणी दिग् विणा विमुक्ताय स्यां रविस्तिष्ठति सा प्रदीप्ता ॥ प्रधूमिता यास्य-
न्तियां दिने शाः शेषाश्च शान्ताश्च दिशो भवंति ॥ १७ ॥ दग्धादिगे शोज्वलिता दि-
गैन्द्री धूमान्विता वानल दिक्च भाते ॥ इत्येव मेवं प्रह्लाराष्ट्र केन भुंक्ते दिशं ना-
मिहति गमरस्मिः ॥ १८ ॥ लग्नस्थे वरुणं शांहि वुक स्थे दक्षिणं रवौ यायात्-

॥ १९ ॥ अथ तारा तिथ्यादि शुद्धिः ॥ ना-
॥ सप्तम गे पूर्वा स्यामे चूरणा संस्थिते सौम्याम् ॥ १९ ॥ अथ तारा तिथ्यादि शुद्धिः ॥ शुक्लाद्या द्वादशी षष्ठी हित्वा चंद्र व-
रा त्रिपंच सप्ताद्या कृष्णा मा पूर्णिमा ष्टमी ॥ शुक्लाद्या द्वादशी षष्ठी हित्वा चंद्र व-
रा त्रिपंच सप्ताद्या कृष्णा मा पूर्णिमा ष्टमी ॥ कृष्णा च प्रति पच्छ्रेष्ठा नो शुक्ला गमना दिषु ॥
ले गमः ॥ २० ॥ पृथक् तिथि फलम् ॥ कृष्णा च प्रति पच्छ्रेष्ठा नो शुक्ला गमना दिषु ॥
द्वितीया कार्य्य सिद्धौ स्या त्तृतीया क्षेम संपदे ॥ २१ ॥ चतुर्थी क्लेश दा ज्ञेया लाभ
दा पंचमी तथा ॥ व्याध्यर्त्ति दायिनी षष्ठी सप्तमी भक्ष्य भोज्यदा ॥ २२ ॥ रोगद
चाष्टमी ज्ञेया नवमी मृत्युदा सदा ॥ दशमी लाभदा नित्यं हेम देका दशी स्मृता
॥ २३ ॥ मारण द्वादशी प्रोक्ता सर्व सिद्धा त्रयो दशी ॥ शुक्ला चतुर्दशी नेष्टा कृष्ण पक्षे
वि शेषतः ॥ २४ ॥ पूर्णिमा मध्यमा प्रोक्ता त्याज्यो दर्शस्तु सर्वदा ॥ तिथीनां फल
मे त द्धि विचार्य्य हृ मने वुधैः ॥ २५ ॥ अथ शुभवाराः ॥ सत्वे चरे वासरे चोपचयस्थ स्या
पि वासरे ॥ यात्रा श्रेष्ठा वुधे मध्या लोके प्राह्ने तु न कचित् ॥ २६ ॥ रवौ सूर्य्यो दये याया
दुष्काले प्राप्नो नरः ॥ भौमे भुक्त्वा सदान्यत्र वारे केऽप्यि दिती रितम् ॥ २७ ॥ अयो-

त्तम मध्यमा धम नक्षत्राणि ॥ धनिष्ठा श्रवणो हस्तो ऽनुराधा रेवती द्वयम् ॥ मृगः पुनर्वसुः
पुष्यः श्रेष्ठान्येतानि भानि च ॥ २८ ॥ मूलं पूर्वात्रयं ज्येष्ठा रोहिणी स्वाति तारका ॥ उ
त्तराणां त्रयं याने मध्यान्येतानि भानि च ॥ २९ ॥ चित्रात्रयं मघाश्लेषा कृत्तिकाद्वी
भरण्यपि ॥ वर्ज्यान्येतानि धिष्ण्यानि यात्रायां जन्मभं तथा ॥ ३० ॥ अथावश्यके नक्षत्रा
णां त्याज्य घटिकाः ॥ पूर्वासु षोडश त्वाषाढा कृत्तिका स्वेक विंशतिः ॥ मघा स्वेका दश त्याज्या
भरण्यां सप्त नाडिकाः ॥ ३१ ॥ स्वात्यश्लेषा विशाखासु ज्येष्ठायां च चतुर्दश ॥ यात्रायां ल
ग्न बले दोष नाडी स्यावश्यके सति ॥ ३२ ॥ मतांतरम् ॥ कृत्तिकायां मघा स्वात्यो रेके पू
र्व दलं जगुः ॥ उत्तरार्द्धं तु चित्राया भरण्य श्लेषयोरपि ॥ ३३ ॥ सर्व स्वाती मघा त्या
ज्यो सन सो मत मीदृशम् ॥ ३४ ॥ अथ नक्षत्र विशेषे विजययात्रा ॥ संप्रस्थायानुराधायां
स्थित्वा ज्येष्ठाभिधे ततः ॥ मूले गच्छेन्महीपालो यदि स्यात्स्व जयो ध्रुवम् ॥ १ ॥ हस्ते
प्रस्थाय वा स्थित्वा तत्रैव स्वाति चित्रयोः ॥ विशाखायां व्रजन्भूपो विजयं लभते ध्रुवं

॥ ३६ ॥ प्रस्थाय मृगशीर्षे वास्थित्वार्द्रायां ततो व्रजेत् ॥ पुनर्वसौ महीपालो लभते
च जयश्रियम् ॥ रेवत्यामुष्य से वापि धनिष्ठायां महीश्वरः ॥ उषित्वा स्वीय शिवि-
रे राज्ञो गच्छन् जयत्यरीन् ॥ ३८ ॥ अथ दिक्शूलम् ॥ दिक्शूलं पूर्व दिग्भागे ज्येष्ठायां श-
नि सोमयोः ॥ पूर्व भाद्रपदे याम्यां तथैव गुरु वासरे ॥ ३९ ॥ रवौ शुक्रे च रोहिण्यां
पश्चिमायां त्यजेद्बुधः ॥ उदीच्यामुत्तरा फाल्गुण्य भिधे मंगले बुधे ॥ ४० ॥ अथ विदि-
क् शूलम् ॥ आग्नेय्यां च गुरौ चन्द्रे नैर्ऋत्यां रवि शुक्रयोः ॥ ईशान्यां चंद्रजे वायौ मंग-
ले गमनं त्यजेत् ॥ ४१ ॥ अथ दिक्शूल परिहारः ॥ सूर्य्य वारे घृतं प्राश्य सोम वारे पयस्त-
था ॥ गुड मंगार के वारे बुध वारे तिलान्यपि ॥ ४२ ॥ गुरु वारे दधि प्राश्य शुक्रवा-
रे यवा नपि ॥ माषान्भुक्त्वा शनेर्वारे गच्छन्शूलेन दोष भाक् ॥ ४३ ॥ अथापरः ॥ तां-
बूलं चंदनं मत्स्य पुष्पं दधि घृतं तिलाः ॥ वार शूल हराण्यर्कात्स्मरणादपि वा निशि
॥ ४४ ॥ अथ समय विशेषे त्याज्यानि भानि ॥ पूर्वाह्ने रोहिणी धिष्ण्ये विशाखा कृत्तिकोत्तराः

॥ मध्यान्ह समये ज्येष्ठा श्लेषार्द्रा मूल भन्तथा ॥ ४५ ॥ अपराह्णे परित्याज्या गमने
चाश्विनी सदा ॥ चित्रान्त्य मनुराधा च या मिन्याः प्रथमें शके ॥ ४६ ॥ मध्येंऽष्टके
त्यजेत्पूर्वा त्रितयं भरणी मघा ॥ प्रान्ते पुनर्वसू स्वाती धनिष्ठा शत तारका ॥ ४७ ॥
अथ सर्वकाले श्रेष्ठ नक्षत्राणि ॥ श्रवो पुष्यो मृगो हस्त श्चैषा यात्रा सुसर्वदा ॥ ४८ ॥ अथ
युद्ध यात्रायां विशेषः ॥ राहु भुक्ता नि नक्षत्राणि जीव पक्ष स्त्रयो दश ॥ मृत पक्ष स्तु भोग्या
नि कर्त्तरीतद धिष्ठितम् ॥ ४९ ॥ ततः पंच दशे ग्रस्तं चिंत्यं युद्धे गमा दिषु ॥ जीव-
पक्ष श्शुभो ज्ञेयो मृत पक्ष स्त्व शोभनः ॥ ५० ॥ मृत पक्षा च्छुभं ग्रस्तं ग्रस्त भात्क-
र्त्तरी शुभा ॥ मृत पक्षे सहस्रांशो जीव पक्षे विधौ स्थिते ॥ ५१ ॥ यात्रायां विजय
स्तत्र विपरीते पराजयः ॥ उभौ चेज्जीव पक्ष स्थौ यात्रा तत्रापि शोभना ॥ ५२ ॥
चेदुभौ मृत्यु पक्ष स्थौ रविन्दू तत्र कष्टदा ॥ यायिनो जय दश्चंद्रो जीव पक्षे व्यव-
स्थितः ॥ ५३ ॥ भानु मानू जीव पक्ष स्थ स्स्यायिनो विजया वहः ॥ अथ अकुलकुल कुलाकु-

लगणः ॥ आदो अकुलम् ॥ धनिष्ठा भरणी स्वाती हस्तो श्लेषा पुनर्वसू ॥ रोहिणी श्रु-
त्तरं चान्त्या नुराधा विषमा तिथिः ॥ ५४ ॥ सूर्येन्दु गुरु मंदाख्य वारा श्चैव गणोऽ
कुलः ॥ अत्र संप्रस्थितो राजा शत्रून् जयति संगरे ॥ ५५ ॥ अथ कुल गणः ॥ पूर्वाश्वि-
नी मघा पुष्यः कृत्तिका श्रवणो मृगः ॥ चित्रा ज्येष्ठा विशाखा च कुज शुक्रौ चतुर्द-
शी ॥ ५६ ॥ अष्टार्काश्वि मितास्ति थ्यो गणोऽयं कुल संज्ञकः ॥ संग्रामे यायिनो भं-
गः स्थायिनोऽत्र जयो भवेत् ॥ ५७ ॥ अथ कुलाकुल गणः ॥ अभिजिन्मूल मार्द्रा च श-
तभं बुध वासरः ॥ द्वितीया दशमी षष्ठी कुलाकुल गणा स्त्वयम् ॥ ५८ ॥ राज्ञस्तत्र
स्थि तस्यात्र संधि भवति वैरिणा ॥ अथ नामादि वर्णं चक्राणां सर्गिको वर्णस्वरः ॥ कचडाधभ
वानां स्याद कारो वर्णजः स्वरः ॥ खजढा नमसानान्तु स्वर इकार उच्यते ॥ ५९ ॥ग-
झता पय षा वर्णा उकार स्वर भाजिनः ॥ घट था फरशा वर्णा एकार स्वर संज्ञकाः ॥
६० ॥ चठदा वल हा श्चैषा मोकारः कथित स्वरः ॥ नाम्नि यश्चादि मो वर्ण स्तद् ग्राह्य

राजस्वरः ॥ ६१ ॥ अथतिथिस्वरः ॥ अकारादि स्वराः पंच नंदाद्यास्तिथयः क्रमात् ॥
निजस्वरतिथेर्ज्ञेया बालप्रभृतयस्वराः ॥ ६२ ॥ आद्यो बालः कुमारोऽन्यो युवा वृद्ध
स्तथा मृतः ॥ दूषण्लाभ कर स्त्वाद्यः कुमार स्त्वर्द्धलाभदः ॥ ६३ ॥ सर्वसिद्धिं युवा कु-
र्याद्वृद्धो मध्योऽधमोऽन्तिमः ॥ अथपथिराहुचक्रम् ॥ विशाखा पुष्य मश्लेषाऽनुराधा-
श्वि न्यातामिधम् ॥ धनिष्टे तानि धर्म्मे स्युश्चक्रेऽस्मिन्पथि राहुके ॥ ६४ ॥ भरणी
श्रवणो ज्येष्ठा मघा स्वाती पुनर्वसू ॥ पूर्वभाद्र पदै तानि भान्यर्थे गदितानि च ॥ ६५ ॥
चित्रार्द्रा कृत्तिका मूलं पूर्वा फाल्गुणि का भिजीत् ॥ तथा भाद्रोत्तरे तानि कामे धिसा
नि सतत्च ॥ ६६ ॥ उत्तरा फाल्गुणी हस्तो रोहिणी रेवती मृगः ॥ पूर्वाषाढा द्वयं मोक्षे
भान्येतानि बुधा जगुः ॥ ६७ ॥ धर्म्मर्क्षे संस्थिते सूर्ये चन्द्रो मोक्षार्थ गम्शुभः ॥
स्वर्थर्क्षे भास्करे चंद्रः प्रशस्तो धर्म्म मोक्षगः ॥ ६८ ॥ सूर्ये कामर्क्षगे श्रेष्ठो मो
क्ष धर्म्मार्थ गस्तशशी ॥ मोक्षधिस स्थिते सूर्ये चंद्रमा धर्म्म गः शुभः ॥ ६९ ॥

| अ | पुष्य | श्ले | चि | अनु | ध | प्र | धर्म |
|---|---|---|---|---|---|---|---|
| भ | पु | म | स्वा | ज्ये | श्र | पू | अर्थ |
| कृ | आ | पू | चि | मू | अ | उ | काम |
| रो | म | उ | ह | पू | उ | रे | मोक्ष |

अथान्यत्रा शुभो ज्ञेयो यात्रायां शुभमीप्सुभिः ॥ अथ गोरक्षकमतेन तिथिचक्रम् फल श्च ॥ मासे शुक्लादिके चोथे तिथिः प्रतिपदादितः ॥ द्वितीया द्यास्तु माघे स्यु स्तृतीया द्यास्तु फाल्गुने ॥ ७० ॥ एवं चान्येषु मासेषु तिथ्यो द्वादश सञ्ज्ञकाः ॥ लेख्यास्त्र के त्रयो दश्या सविहायतिथित्रयम् ॥ ७१ ॥ तृतीयादित्रये तत्र त्रयोदश्यादिके फलम् ॥ याने प्राच्यादिकाद्या सु वक्ष्ये द्वादशधा क्रमात् ॥ ७२ ॥ सौख्यं शून्यं धनार्तिश्च लाभोलाभो भयं धनम् ॥ कष्टं सौख्यं कलिर्मृत्युः शून्यं प्राच्यां फलं क्रमात् ॥ ७३ ॥ क्लेशो नैश्वं व्यथा सौख्यं द्रव्याप्ति लभि पीडने ॥ सौख्यं लाभः कष्ट सिद्धिः र्लाभ स्सौख्यन्तु दक्षिणे ॥ ७४ ॥ भयं नैश्वं श्रियाप्तिश्च भयं द्रव्यं मृतिर्द्दनम् ॥

संग्रि २९७

| चै | मा | फा | चै | वै | ज्ये | आ | श्रा | भा | आश्वि | का | मार्ग | पूर्वे | दक्षिणे | पश्चिमे | उत्तरे |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | सौख्य | क्लेश | भीति | अर्थागम |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | शून्यं | नैस्वं | नैस्वं | मिश्रता |
| ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | द्रव्यलो· | दुःखं | वृद्धाग्निः | अर्थः |
| ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | लाभः | सौख्य | मंगलम् | वित्तलाभः |
| ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | लाभ | द्रव्याप्ति | धनम् | सौख्यम् |
| ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | भीति | लाभः | मृत्युः | अर्थागमम् |
| ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | लाभ | कष्टं | द्रव्यलाभः | सुखम् |
| ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | कष्टम् | सौख्यं | क्लेशलाभः | सुखम् |
| ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | सौख्यं | लाभः | कार्यसिद्धिः | कष्टम् |
| १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | क्लेश | कार्यात्सिद्धिः | अर्थः | धनम् |
| ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | मृत्यु | लाभ | द्रव्यलाभः | शून्यम् |
| १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | शून्य | सौख्यं | मृत्युः | अत्यंतकष्टम् |

क्लेशलाभो र्थसिद्धिस्स्वं लाभो मृत्युश्च पश्चिमे ॥७५॥ धनं मिश्रं धनं लाभः

२९८

सौख्यं लाभस्सुखं सुखम् ॥ कष्टं द्रव्यात्त्व शून्यत्वं कष्टमुत्तर दिक् फलम् ॥ ७६
॥ अथ सर्वांक योग फलम् ॥ तिथि नक्षत्र वारैक्यं सप्ताष्टाग्नि विभाजितम् ॥ आदि
शून्ये ऽति पीडा स्यान्मध्य शून्ये भयं तथा ॥ ७७ ॥ शून्येंत्ये वपुषो रोगो मृत्यु-
श्शून्य त्रये ध्रुवम् ॥ जय प्रयाणे गमस्सौख्यं शेषे च स्थान कत्रये ॥ ७८ ॥ चिं
त्यमेतद्धि यात्रादौ शुक्ला यास्तिथयो ऽन्नतु ॥ अथाडल भ्रमौ त्याज्यौ ॥ यात्रायंत्रह-
ल प्रवाह समरे चौर्य्ये च संधौ तथा कूपाराम तडाग बंधन विधौ पापर्द्धि दुर्गग्र-
हे ॥ शय्यै भोक्त रसाधिरोहण विधौ त्याज्यं सदैवाडलं यत्नान्नात्र शुभेषु मंगल
विधौ दोषो न तस्य क्वचित् ॥ ७९ ॥ रवि भात्साभिचान्द्रे सप्त भिर्हते २ द्वि ७ शेष
के ॥ आडलो ऽथ नि ३ पट ६ शेषे भ्रमो नेष्टौ गमे त्विमौ ॥ ८० ॥ अथ प्रशस्तो हैरव
योगः ॥ चंद्र भं सूर्य्य भायुक्तं पक्षादि तिथि वासरैः ॥ नवाप्तं सप्त शेषे तु हैरवस्य
च्छ भो गमे ॥ ८१ ॥ अथ घवाडाख्यः शुभयोगः ॥ सूर्य्य भाद्गणये च्चांद्रं त्रिगुणं तिथि

संयुतम् ॥ सप्तभिस्तु हरेद्भागं त्रिशेषं स्याद् वाडकम् ॥ ८२ ॥ गमे शुभं सदा
ज्ञेयं धवाड़ं हेरवात्सदा ॥ अथ टेलकम् ॥ सूर्य्य भा द्गणये च्चांद्रं तिथि वारं च मि-
श्रितम् ॥ सप्तभिस्तु हरेद्भागं पञ्च शेषेतु टेलकम् ॥ ८३ ॥ अथ गोरवम् ॥ सूर्य्य
भा द्गणये च्चान्द्र तिथि वारं च मिश्रितम् ॥ अर्क संख्ये हरेद्भागं नव शेषेतु गोर
वम् ॥ ८४ ॥ प्रवेशे गोरवं दद्यान्निर्गमे हेरवन्तथा ॥ तस्करे टेलकं दद्याद्धवाडं
सर्वकर्मसु ॥ ८५ ॥ अथ मेषादीनां घात चंद्रः चंद्र घातो लाघवत्वेन ॥ मेष कन्या घट हरी
नक्र युग्म धनुर्वृषाः ॥ मीन सिंह धनुः कुंभा घात चन्द्रा अजादितः ॥ ८६ ॥ युद्धे
चैव विवादे च कुमारी पूजने तथा ॥ राज सेवा वाहनादौ घात चंद्रं विवर्ज्जयेत् ॥
८७ ॥ तीर्थ यात्रा विवाहान्न प्राशनोपनयादिषु ॥ मांगल्य सर्व कार्य्येषु घात
चन्द्रं न चिंतयेत् ॥ ८८ ॥ जन्मस्थो मेष राशेस्स्याद्वृष भस्य तु पंचमः ॥ नवमो
मिथुनस्येन्दुः द्वितीयः कर्कटस्य च ॥ ८९ ॥ षष्ठस्तु सिंह राशेश्च कन्याया स्त्र-

म स्स्मृतः ॥ तृतीयस्तु तुलाराशे र्वृश्चिकस्य च सप्तमः ॥ ८० ॥ चतुर्थो धन्विनो
ज्ञेयो मकरस्याष्टमस्तथा ॥ कुंभस्यैकादशः प्रोक्तो मीनस्य द्वादशः स्मृतः ॥
८१ ॥ घात चंद्रा इमे वर्ज्या यात्रायां राजदर्शने ॥ विवादे वाहनारोहे युद्धे भै-
षज्य सेवने ॥ ८२ ॥ विवाहादि शुभेऽन्यत्र नैते चिंत्या मनीषिभिः ॥ अथ मेषा
दीनां घात नक्षत्राणि ॥ मेषे मघा वृषे हस्तो मिथुने स्वाति रुच्यते ॥ कर्कटे चानुराधाख्यं
सिंहे मूलं प्रकीर्तितम् ॥ ८३ ॥ कन्यायां श्रवणो ज्ञेय स्तुलायां शततारकाः ॥ वृ
श्चिके रेवती धिष्ण्यं भरणी धनुषि स्मृता ॥ ८४ ॥ मकरे रोहिणी कुंभे चार्द्राश्ले-
षा तु मीनगे ॥ एतानि घात धिष्ण्यानि जन्मराशे र्नरस्य च ॥ ८५ ॥ अथ घातवाराः ॥
मेषे रवि र्बुधः कर्के मिथुने चन्द्र एव च ॥ कन्या वृषभ सिंहेषु शनिः स्यान्मकरे कु-
जः ॥ ८६ ॥ धनु र्वृश्चिक मीनेषु शुक्रोऽथ तुलकुंभयोः ॥ जीवश्चेज्जन्मराशौ
च घात वारा बुधै स्स्मृताः ॥ ८७ ॥ अथ घाततिथयः ॥ मेष वृश्चिकयोर्नन्दा भद्रा

मिथुन कर्कयोः ॥ जया सिंह धनुः कुंभे रिक्ता च तुल कुंभयोः ॥ ९८ ॥ कन्या वृषभ-
मीनेषु पूर्णा घात तिथिस्स्मृता ॥ अथ घात तिथीनां त्याज्य घटिकाः ॥ कार्य्येऽत्या वश्यके
नाडी षट्कं घात तिथौ बुधैः ॥ आदिमं प्रं परित्यज्य नो निंद्या शेष नाडिकाः ॥ ९९ ॥
॥ अथ घात लग्नानि ॥ मेष गो कर्कट तौलि नक्र मीनांगनालयः ॥ धन्वि कुंभौ युग्म
सिंहो घात लग्नानि मेष भात् ॥ १०० ॥ अथा वश्यके घात चन्द्र नक्षत्र पादस्त्याज्यः ॥ मे
षेतु कृत्तिका द्यो ऽघ्रि र्वृषे चित्रा द्वितीयकः ॥ युग्मे घाते तृतीयोऽघ्रि र्मघाया श्चापि
कर्कटे ॥ १०१ ॥ धनिष्ठाद्या स्तथा सिंहे स्त्रियश्चार्द्रा तृतीयकः ॥ तुले मूले द्विती
योऽघ्रिरलौ रोहे स्तृतीयकः ॥ १०२ ॥ पूभा तुर्य्यो धनुः संज्ञे मघा तुर्य्यो मृगे तथा ॥
कुंभे मूल चतुर्थोऽघ्रि मीने पूभा तृतीयकः ॥ १०३ ॥ त्याज्या घात विधौ चोक्त पादा
आवश्यके बुधैः ॥ अथ सूर्य्यादयो घात ग्रहाः ॥ अथ सूर्यः ॥ वेदाष्टा केषु नंदेन्दु रस दिक्
शैल संमिताः ॥ रुद्र नेत्राग्नि संख्याश्च घात सूर्य्या स्तु मेषतः ॥ १०४ ॥ अथ चंद्रः

इन्दुबाणाक्कनेत्राग दिगाग्नि शैल संख्यकाः ॥ वेदाद्रे घार्क संख्या का मेषाद्घाते
दवः क्रमात् ॥ २०५ ॥ अथ भौमः ॥ बाणां केन्दु रसाष्टाग्न हक् शैल रुद्रे भ संमिताः
॥ सूर्य्याग्न्यब्धि मिता मेषात्क्रमाद्घातो धरात्मजः ॥ २०६ ॥ अथ बुधः ॥ नेत्रांगाग्नि

अथ घात तिथि वार नक्षत्र लग्न चंद्रमा लिख्यते ॥ अथसूर्य्यादयो घातग्रहाः

| राशि | मे | वृ | मि | क | सिं | कं | तु | वृ | ध | म | कुं | मी | मे | वृ | मि | कं | सिं | कं | तु | वृ | ध | म | कुं | मी | राशयः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ति | नं | पू | भ | भ | ज | पू | रि | नं | ज | रि | ज | पू | ४ | ८ | १२ | ५ | ९ | १ | ६ | १० | ७ | ११ | २ | ३ | सूर्य्यः |
| वा | सू | श | चं | बु | श | श | गु | शु | बु | मं | गु | शु | १ | ५ | ९ | २ | ६ | १० | ३ | ७ | ४ | ८ | ११ | १२ | चंद्रः |
| न | म | ह | स्वा | अनु | मू | श्र | श | रे | भ | रो | आ | श्ले | ५ | ९ | १ | ६ | १० | २ | ७ | ११ | ८ | १२ | ३ | ४ | भौमः |
| ल | १ | २ | ४ | ७ | १० | १२ | ९ | ८ | ९ | ११ | ३ | ५ | २ | ६ | १० | ३ | ७ | ११ | ४ | ८ | ५ | ९ | १२ | १ | बुधः |
| चं | १ | ५ | ९ | २ | ६ | १० | ३ | ७ | ४ | ८ | ११ | १२ | ६ | २ | ११ | ७ | ११ | ३ | ८ | १२ | ९ | १ | ४ | ३ | गुरुः |
| क्र | कृ | चि | श्र | म | ध | आ | मू | रो | पूभा | म | मू | पूभा | ७ | १० | ३ | ८ | १२ | ४ | ९ | १ | १० | २ | ५ | २ | शुक्रः |
| घा | १ ० | २ ० | ३ ० | ३ ० | १ ० | ३ ० | २ ० | ३ ० | ४ ० | ४ ० | ४ ० | ३ ० | ३ ० | ७ १ | ११ ८ | ४ ४ | ८ ९ | १२ ४ | ५ ३ | ९ ६ | १ २ | ४ १० | १ ११ | ६ ५ | शनिः राहुघात चंद्रः |

[illegible]न शैलेषु वेदाष्टेख्यंक संमिताः ॥ द्वादशेन्तु मिता घात वोधनः क्रमतस्त्वज्ञात् ॥ १०७ ॥ अथ गुरुः ॥ रसनेत्रेषु शैलेषु वन्हि नागार्क संमिताः ॥ नंदेन्दु द्वि त्रिसंख्याता घातेज्या मेषतः क्रमात् ॥ १०८ ॥ अथ शुक्रः ॥ शैल दिग्वन्हि नागार्क वेद नंदेन्दु भिर्म्मिताः ॥ आशाश्च बाण दृक् संख्या घात शुक्रस्तु मेषतः ॥ अथ शनिः वन्हि शैलेषु वेदाष्ट सूर्य्य बाणांक भूमिताः ॥ दिगीन्दु रस संख्याश्च मेषाद्घात शनैश्चरः ११० अथ स्त्रीणां घातचन्द्रः ॥ भूनागाब्ध्यंक वेदाग्नि रसाभ्याशा शिवेषुभिः ॥ सूर्य्यैश्च प्रमिता मेषाद्घात चन्द्रो मृगी दृशाम् ॥ १११ ॥ अथ चंद्र वासः ॥ तिथिं पंच गुणी कृत्य तथैकेन च संयुतम् ॥ रुद्र नैत्रै र्हरेद्भागं चन्द्र वासस्त्रिधा भवेत् ॥ ११२ ॥ एक शेषे वसे त्स्वर्गे द्विके पाताल मेवच ॥ तृतीये मृत्यु लोकेच्च चन्द्र वासस्त्रिधा भवेत् ॥ ११३ ॥ स्वर्ग लोके यदा चंद्रो ह्य मृत प्रिय दर्शनिः ॥ मृत्यु लोके यदा चंद्र स्सर्व कर्म्मसु सिद्धिदः ॥ ११४ ॥ पाताले च यदा चंद्रः पंच क-

 स्थारी विवर्ज्जयेत् ॥ वास्तौ पुरुष नाशाय होमे हानिः प्रजायते ॥ ११५ ॥ कू-
 पादिषु जलं नस्यान्नि रन्ना मेदिनी भवेत् ॥ यात्रायां कार्य्य हानि स्स्यान्नाति च्छा
रुद्र भाषितम् ॥ ११६ ॥ अथ चन्द्रांग वास फलम् ॥ शिरः प्रदेशे गुण ३ पंच ५ जन्म १
षट् ६ नंद ९ पृष्ठे हृदि सप्त ७ रुद्रेऽरिष्या १२ वसु ८ वेदेच शिरः प्रदेशे करेच दिग्
१० युग्म २ विधुर्न्न देहे ॥ ११७ ॥ फलम् विधु स्त्वार्थ लाभं शिरो भाग के स्या-
च्छुभं हस्त देशे च पृष्ठे च शून्यम् ॥ पदे युद्ध कारी करे सर्व लाभं प्रकुर्य्याच्छ शी
मानवानां फलंच ॥ ११८ ॥ अथ सन्मुख चन्द्र फलम् ॥ करण भगण दोषं वार सं-
क्रांति दोषं तिथिज कुलिक दोषं योगिनी मूल दोषम् ॥ रवि सित कुज दोषं या-
म यामार्द्ध दोषं हरति सकल दोषं चन्द्र मा सन्मुखस्थः ॥ ११९ ॥ अथ द्वादश चंद्र फ-
लम् ॥ पाणि ग्रहे स्त्री सुरते ऽभिषेके निषेक यात्रा व्रत बंधने च ॥ व्रतोप वासादिषु
सर्ग पूर्वैः प्रोक्तः ऽप्यशुभो द्वादश गो हि सोमः ॥ १२० ॥ अथ चन्द्र वास फलम् ॥ मेषे सिं- 

ह धनु स्संस्थः पूर्वस्यां दिशि चन्द्रमाः ॥ दक्षिणस्यं वशे न्नित्यं कन्या वृषभ न
क्रगः ॥ १२१ ॥ तुला मिथुन कुंभ स्थः पश्चिमायां निशा करः ॥ कर्क वृश्चिक
मीनेषु गत स्तिष्ठे त्तथोत्तरे ॥ १२२ ॥ सन्मुखेऽर्थो ऽर्थलाभाय सुख संपञ्च द-
क्षिणे ॥ पृष्ठगे निधनं यातु वमि भागे वसु क्षयः ॥ १२३ ॥ अथ तत्काल चंद्रस्या-
ष्ट दिक्षु ॥ नाड्य स्सप्त दश प्राच्यां याम्यां तिथि मितास्ततः ॥ तत स्स्वर्ग मिता ऽग्र
त्यु गुत्तर स्यां तु षोडश ॥ १२४ ॥ पुन स्सप्त दश प्राच्यां दक्षिणस्यां चतुर्दश
पश्चिमे नख संख्या ता उदीच्यां पंच भूमिताः ॥ १२५ ॥ वार द्वयं भ्रमे च्चेन्दु स्स्व
वास स्थान तः क्रमात् ॥ एक राशि स्थितो ऽपी न्दु तद् दिशाजं फलं दिशेत् ॥ १२६
॥ अथ योगिनी वास स्तत्फलञ्च ॥ नवमी प्रति पत्ति थ्योः प्राच्यां तिष्ठति योगिनी ॥
अग्नि कोणे तृतीया यामे का दश्यां तथै वहि ॥ १२७ ॥ त्रयो दश्यांच पंचम्यां
दक्षिणस्यांच योगिनी ॥ द्वादश्यां नैऋते ज्ञेया चतुर्थ्या मपि सर्वदा ॥ १२८ ॥

| दि | पू | द | प | उ | पू | द | प | उ | दिशा | ० |
|---|---|---|---|---|---|---|---|---|---|---|
| २६ | २७ | १५ | २१ | २६ | १७ | २४ | ३० | १५ | २३५ | ० |

चतुर्दश्यां च पक्षांच पश्चिमायां दिशि-
भवम् ॥ वायु कोणे तु सप्तम्यां पूर्णिमा
यां तथैव हि ॥ १२९ ॥ योगिन्युत्तर दिग्भागे द्वितीया दशमी दिने ॥ अमायां-
च तथा षष्ठ्या मी ईशान्यां योगिनी भवेत् ॥ १३० ॥ योगिनी सन्मुखी पृते गमेयु
द्धे च मृत्युदा ॥ शुभा वाम भागस्था पृष्ठे दक्षे जय प्रदा ॥ १३१ ॥ अथ तात्का-
ल योगिनी ॥ प्राच्यु तराग्नि नैर्ऋत्य याम्य पश्चिम वायुषु ॥ ईशान्यां योगिनी
गच्छे त्स्वादिशः कथितः क्रमात् ॥ १३२ ॥ यामार्द्ध भोग कालोऽस्यास्तिथो
दिग्भ्रमणा त्तथा ॥ तत्काल योगिनी चैवा ज यदा पृष्ठ दक्षिणे ॥ १३३ ॥ अथ
कालपाशौ ॥ उत्तरस्यां रवे वीरे वायौ चन्द्र दिने भवेत् ॥ भौमवारे प्रतीच्यां तु नै-
र्ऋत्यां बुध वासरे ॥ १३४ ॥ यमा याम्यां गुरावेव वन्हे दिशि भृगो दिने ॥ प्रा
च्यां दिशि शने वीरे कालः प्रोक्तो महर्षिभिः ॥ १३५ ॥ कालस्याभिमुखः

पार्श्वौ वैपरीत्यं तयोर्न्निशि ॥ तावुभौ सन्मुखौ त्याज्यौ वाम दक्षिणगौ शुभौ ॥ २३६ ॥ अथयामार्द्धराहुः ॥ इंद्र वायु यम रुद्र तोयाग्नि शशी मारुते ॥ यामार्द्ध मुदितो राहु र्भ्रमत्येवं दिगष्टके ॥ २३७ ॥ सूर्योदयात्क्रमेणैवं दिने ज्ञेय मथो निशि ॥ अथमुहूर्त्तात्मकराहुः ॥ दुर्गांत कम रुच्छ क रक्ष ब्रह्मानलांभ साम् ॥ दिशि भ्रम त्यगुर्नाडी द्वय मानं दिवा निशम्॥ २३८ ॥ ज्ञेयोऽत्र योद्धभंगश्च स्तु मुहूर्त्तोऽयन्दिवा निशि ॥ २३९ ॥ अथराहोःफलम् ॥ द्विविधः पृष्ठ गो राहुः शुभदो दक्षिणोऽपि च ॥ सवे योगिनिका युक्त स्तदा युद्धे जयो भवेत् ॥ २४० ॥ वामगस्सन्मुख स्त्याज्यो यात्रा युद्धे जये शुना ॥ अथपरिघदंड ॥ कृत्तिका तश्च तदिक्षु सप्तसप्त च पूर्वतः ॥ परिघं लंघयेन्नैव वायव्यानल दिग्गतम् ॥ २४१ ॥ प्राचीमुदग्द्वारि भिरत्र याया त्सा ग्द्वारिकैश्चा हुभिरप्युदीचीम् ॥ तथैव याम्याम परश्रिते र्भैर्व्याम्या श्रयै र्व्याप्य परं प्रयायात् ॥ २४२ ॥ अथा वश्यके परिघोल्लंघनम्॥

कृत्ये ऽत्या वश्यके गच्छे द्विलं घ्यापि च पारिघम् ॥ कृत्वा वध्वंध मूल मुद्दिं दि-
ग्लम्न स्य सदा नृपः ॥ १४३ ॥ पुष्य हस्तानुराधाश्वे सर्वदिग्गमनं शुभम् ॥
१४४ ॥ पुष्याश्वि हस्त मैत्राणि पौष्ण वैष्णव सौम्य भम् ॥ वास वं सर्व दिक्ष्व
प्युधा त्रायां शोभना निहि ॥ १४५ ॥ अथ वक्र ग्रहस्य वारादित्याज्यम् ॥ ग्रहः केन्द्र
गतो वक्री लग्नं वा वक्रि वर्गगम् ॥ वक्री खेटस्य वारे वा तत्र यातु र्विनाशनम्
॥ १४६ ॥ अथायनानुकूलम् ॥ दिवा सौम्यायने सूर्य्ये यायादुत्तर पूर्वयोः ॥ चंद्रे
सौम्यायने रात्रौ प्रोक्ता यात्रा तयोर्दिशोः ॥ १४७ ॥ सूर्य्ये याम्यायने गच्छेत्प्र-
त्य ग्दक्षिणयो र्दिवा ॥ दिशयो स्त्वे तयो श्चान्द्रे रात्रौ याम्यायनं गते ॥ १४८ ॥
उभौ सौम्यायने यायात्तथा चोत्तर पूर्वयोः ॥ तौ चेद्या म्यायने प्रत्य ग्याम्य यो-
स्तु दिवा निशम् ॥ १४९ ॥ अन्यथा गमनेन्दृणां भवे द्बन्धो वधोऽपिवा ॥ अथ
त्रिविधः शुक्रः ॥ यत्रो देति भृगो र्य्यात्रा तांदिशं सम्मुखीं त्यजेत् ॥ भार्गवाधिष्ठितो

राशि र्दिशि वा यत्र लग्नतः ॥ १५० ॥ कृत्तिका दिषु दिग्द्वार भेषु यत्र स्थितो ऽपि वा ॥ त्याज्या सापि दिशा यस्मात्सम्मुखस्त्रिविधो मतः ॥ १५१ ॥ अथशुक्र दोषापवादः ॥ रेवत्यां मेष गे चंद्रे भवत्यंधो भृगोः सुतः ॥ यात्रा दो नैव दोषाय सम्मुखो दक्षगो ऽपि वा ॥ १५२ ॥ भृग्वादि गोत्र जातानां न दोषः प्रति शुक्रजः ॥ अथ गमने शुक्रस्यास्तादि दोषः ॥ विवर्णे विजिते नीचे वक्रिते वासिते ऽस्तगे ॥ भानु क्षेत्र गते वापि तदंशे तन्निरीक्षिते ॥ १५३ ॥ भौमांशे भौम संयुक्ते मंदांशे मंद संयुते ॥ यात्रा नैव प्रकर्तव्या लक्ष्म्या युर्बल हानिदा ॥ १५४ ॥ अथबुधोऽपि सन्मुख स्त्याज्यः ॥ अनुकूले बुधे यायादित्थं भूते ऽपि भार्गवे ॥ सन्मुखस्थे बुधे सर्वे वृथा खेटा शुभा अपि ॥ १५५ ॥ असामान्य यात्रायां शुक्र दोषा भावः ॥ प्रति शुक्रादि दोषो ऽयं नूतने गमने नृणाम् ॥ राज्ञां विजय यात्रायां नान्यथा दोष मर्हति ॥ १५६ ॥ अथावश्य के तीर्थयात्रायां न दोषः ॥ मर्दोदये प्रयागादौ पुण्ययोगे सु-

दुर्लभे ॥ तीर्थार्थी तु सुखं याया त्कालेष्व स्तादिकेष्वपि ॥ १५७ ॥ अथ मार्गे गु-
रु,शुक्र बुधास्ते तथैव ॥ जीव प्रश प्राङ्गे शुक्रो वा मार्ग मध्ये ऽस्तगो यदि ॥ तत्रैव निव
सेद्ग जाया वद भ्युदितो भवेत् ॥ १५८ ॥ सम्मुखः स्वं ब्रजो यत्र मार्ग मध्यो दितो
यदि ॥ यावदस्तं गत स्तस्मिं स्ताव त्तत्रैव संविशेत् ॥ १५९ ॥ अथ यात्रायां लग्न वि-
चारः ॥ तत्रादौ त्याज्य लग्नानि ॥ कुंभ कुंभांश को त्याज्यो सर्वथा यत्न तो बुधैः ॥ तत्र प
यातु र्नृपते रर्थ नाशः पदे पदे ॥ १६० ॥ मीने मीनांश केयातुः पंथा वक्रो धनक्ष
तिः ॥ निषिद्धा गमने केष्विन्मीन वृश्चिक कर्कटाः ॥ १६१ ॥ लग्नस्था वा नवां-
शस्थाः प्रोक्ता राज्ञां जयार्थिनाम् ॥ भू भुजां जन्म लग्ने वा जन्म राशौ स्व लग्नगे
॥ निधने निधनेंशे वा गमनं निधनायते ॥ १६२ ॥ वैरिणो जन्म राशौ स्तु वैरिभे
वा तदीश्वरे ॥ यात्रा कारे विलग्नस्थे सापि यात्रा विपायते ॥ १६३ ॥ अथ शु-
भलग्नानि ॥ जन्म राशौ लग्न गते तदीशे वा विलग्नगे ॥ अभीष्ट फलदा यात्रा राशी

प्राप्येच्छुभ ग्रहः ॥ १६४ ॥ लग्ने वर्गोत्तमे चंद्रे यात्रोक्ता कार्य्यसिद्धये ॥ अंभोऽप-
ष्टौ नवं प्रेवानौ कायानं प्रशस्यते ॥ १६५ ॥ जनोदय राशुभयुगा द्विवेदि संज्ञो
ऽथवा भवेत् ॥ स्वाद्यभान्निधनस्थो वा सराशिर्लग्नगः शुभः ॥ १६६ ॥ शीर्षो-
दये लग्ने यात्रा सर्वार्थदायिनी ॥ राजयोगोचिते लग्ने प्रशस्ता वसुधाभु-
जाम् ॥ १६७ ॥ अथ दिग्द्वाराणि ॥ मेषादिराशयो दिक्षु चतुर्ष्वपि च पूर्वतः ॥ त्रि-
क्रमाद्रूपकैः प्रोक्ता एते दिग्द्वारसंज्ञकाः ॥ १६८ ॥ दिग्द्वारभे लग्नगते प्रश-
स्ता यात्रार्थदात्री जयकारिणी च ॥ हानिं विनाशं रिपुतो भयं च कुर्यात्तथा-
तन्प्रति लोमलग्ने ॥ १६९ ॥ अथ दिगीशाः ॥ सूर्य्यः सितो भूमिसुतोऽथ राहुः श-
निः शशी ज्ञश्च बृहस्पतिश्च ॥ प्राच्यादितो दिक्षु विदिक्षु चापि दिशां नथी-
शाः क्रमतः प्रदिष्टाः ॥ १७० ॥ दिगीशास्त्वीय दिक्संस्थो ललाटी कथितो
ग्रहः ॥ लग्नादौ सन्मुखस्त्याज्यो गमे मृत्युकरो यतः ॥ १७१ ॥ अथ ललाटीलक्षण-

दिने घ्राधिष्ठितो राशिर्य्यदा लग्न गतस्तदा ॥ यातुर्मृत्यु प्रदः प्राच्यां दिशि सूर्य्यो ललाटगः ॥ २७२ ॥ सूर्य्यस्य राशितस्तस्माद्द्वादशे लग्नगे गृहे ॥ एकादशे वाग्नेय्यां दिशि शुक्रो ललाटगः ॥ २७३ ॥ ललाटगः कुजो याम्ये दशमे लग्नगे गृहे ॥ लग्नगे नवमे राशौ वष्टमे वापि नैर्ऋते ॥ २७४ ॥ ललाटगस्सैंहिकेयो यातुर्हानि धन प्रदः ॥ लग्नगे सप्तमे राशौ शनिः प्रत्यग ललाटगः ॥ २७५ ॥ षष्ठराशौ लग्न गते पंचमे वापि चन्द्रमाः ॥ ललाटगो वायुदिशि यातुर्मृत्युप्रदस्तदा ॥ २७६ ॥ चतुर्थराशौ लग्नस्थे बुधस्सौम्येललाटगः ॥ राशौ तृतीये लग्नस्थे द्वितीये चेन्द्र पूजितः ॥ २७७ ॥ ललाटगश्चन्द्र मौले र्दिशि यातुर्विनाशदः ॥ इत्थं ललाटगे लग्ने सम्मुखे गमनं त्यजेत् ॥ २७८ ॥ दिगीशे केन्द्रगे गच्छेन्नतु लालाटिगे क्वचित् ॥ अथोक्तसमये लग्नाद्य लाभे समय निषेधः ॥ २७९ ॥ उषः काले विना पूर्वां गो धूलिः पश्चिमां

विना ॥ विनोत्तरां निशीथ स्सन् याने याम्यां विना भिजित् ॥ १८० ॥ पूर्वा-
ह्णे तूत्तरां गच्छेन्मध्यान्हे पूर्वतो व्रजेत् ॥ अपराह्णे व्रजेद्याम्यां मर्द्ध रात्रे तु प-
श्चिमाम् ॥ १८१ ॥ अथ सजीवनिर्ज्जीवयात्रा ॥ सूर्य्य भादिन भं गण्य मष्ट भि
र्गुणितं तथा ॥ निज भादिन नक्षत्रं पञ्चघ्नं मेलये त्समं ॥ १८२ ॥ द्वाद
शैस्तु हरेद्भागं शेषं यात्रातु कथ्यते ॥ रूप १ पक्ष २ गुण ३ द्वीपै ७ दिक् १०
सूर्य्यैश्च १२ विवादिकम् ॥ १८३ ॥ वेद ४ रुद्रां ११ ग ६ मातंग ८ नन्द
९ वाणैः ५ सजीवकम् ॥ सजीवे गणयेल्लाभं यात्रा युद्ध विवादिकम् ॥
१८४ ॥ निर्ज्जीवे भंग मायाति याम्ले ख्विति भाषितम् ॥ अथ यात्रा नाम ॥ति-
थि वारं च नक्षत्रं चतुर्भि स्संयुतं तथा ॥ वसु भिश्च हरेद्भागं शेषं यात्रा च
कथ्यते ॥ १८५ ॥ जयन्ती राक्षसी चैव तारा संहारिणी तथा ॥ साधारि
णी तथा ज्ञेया ऐरावती महा वला ॥ १८६ ॥ कालाश्चैव फलं तासां क्रमा-

द् ज्ञेयं गमादिषु ॥ जयंती सिद्धिदा ज्ञेया राक्षसी व्याधि दायिनी ॥ १८७
॥ तारिणी कार्य्य कृज्ज्ञेया संहारी मृत्युदा सदा ॥ साधारिणी शुभा सम्य-
गैरावती शुभप्रदा ॥ १८८॥ महावला राज्य दात्री काला ख्या भय दा स-
दा ॥ १८९॥ अथयात्रावाहनम् फलंच ॥ जन्मभा द्दिनभं गणयं नवभि र्विभजे द्धित
म् ॥ शेष तो वाहनं प्रोक्तं गर्धभादिनरस्य वै ॥ १९०॥ गर्दभः तुरगो हस्ती मे-
षो जंवुक सिंहकौ ॥ काको मयूर हंसो च नवैते नरवाहनाः॥ १९१ ॥ रासभे
धन हानिस्या द्वल लाभ स्तुरंगमे ॥ लक्ष्मी प्राप्ति र्गजे सम्यङ् मेषे च मरणं भवेत
॥ १९२ ॥ जंवुके ह्यायुषो हानि रायु र्वृद्धि स्तथा हरौ ॥ काके तु कलहश्चैव मयूरे
सुख संपदा ॥ १९३॥ हंसे मिष्टान्न भोजी स्या द्वाहनानां फलं त्विदम् ॥ अथया-
त्रा दशा ॥ जन्मर्क्षाच्च चतुर्गुणयं तिथि वार समन्वितम् ॥ नवभिस्तु हरे द्भागं
शेषं यात्रा दशा भवेत् ॥ १९४॥ रवि श्चंद्रः कुजो राहुः जीवो मंदो वुध स्तथा

॥ केतु श्युक्तः क्रमाज्ज्ञेयं बुधैर्यात्रा दशा फलम् ॥ १९५ ॥ भास्करे शोकस-
न्तापो चंद्रे लक्ष्मी वरांगना ॥ भौमे शस्त्र भयं हानी राहौ भंगोऽथ बंधनम् ॥
१९६ ॥ जीवे लाभं शुभा प्रज्ञा मन्दे मन्द गतिर्भवेत् ॥ शुक्रे सर्व सुखं ज्ञेयं
जयं चागममेवच ॥ १९७ ॥ अथ यात्रायां श्रेष्ठ नेष्टा ग्रहाः ॥ हित्वा सप्तम गं शुक्रं के-
न्द्रे कोणे शुभाः शुभाः ॥ पापास्त्रोप चये शस्ता याने नो दशमः शशिः ॥ १९८
॥ चंन्द्रस्तु गमने नेष्टो लग्ना रिव्यय रन्ध्रगः ॥ चून षष्ठाष्टरिःफस्थो लग्ने शो-
ऽपि न शोभनः ॥ १९९ ॥ सुरेशः स्याहितो लग्ने सत्खेटोऽपि न शोभनः ॥ पा
पोऽपि चेत्सुहृत्तस्य तनौ भव्य फल प्रदः ॥ २०० ॥ जनने जन्म लग्ने शो जन्म
राशी श्वरोदये ॥ सुहृच्चेत्कर्म्मगः खेटो नेष्टो पीष्टो विलग्नगः ॥ २०१ ॥ अथ
लग्नादि भावानां संज्ञाः ॥ लग्नाद्भावाः क्रमा देह १ कोश २ धानुष्क ३ वाहनम् ४
मंत्रो ५ रि ६ मार्ग ७ आयुष्य ८ हृत् ९ व्यापार १० गम ११ व्ययाः १२ ॥ २०२ ॥

अथ द्वादश भाव फलम् ॥ राहुः क्ष्माज दिवाकरेन्दु रविजा स्संप्रस्थितो लग्नगाः शु
त्रूनाशि विवाद कांश्च कुरुते रोगांश्च नाना विधान् ॥ जीवस्सोम सुतस्तथैव
भृगुजो यात्रोदय स्थो नृणां सा यात्रा धन धान्य लाभ शुभदा पुण्यैर्द्दिसाल-
भ्यते ॥ २०३ ॥ वित्त स्थाने नृपाणा मसुर गुरु विधो सर्व कार्य्यार्थ सिद्धिं वस्त्रो
पेतश्च जीवो हृदि सुख मतुलं शत्रु पक्ष क्षयंच ॥ मन्दो मार्गेषु दीर्घं क्षिति सु-
त सहितः कोश हानिश्च भानुश्चंद्रः कुर्य्यान्नरेंद्रः प्रिय जन सहितं राहुरुग्रर्द
कारी ॥ २०४ ॥ प्रस्थाने भूमि लाभं क्षिति सुत रविजौ भानु नाशं प्रयुक्तो भुक्त
श्चंद्रात्मजो वै सुर गुरु रथ वापी तरश्मि र्य्यदाच ॥ भ्रातुःस्थान स्थितस्था नर
वर गमने सर्व कामार्थ सिद्धिं राहुः प्रयात्रो र्विनीय सुख यति सततं प्रस्थितः
पार्थिवोऽपि ॥ २०५ ॥ सौख्य स्थान गतो ददाति विपुला न्भोगान्भृगोरात्मजः
शत्रूणां क्षय मीहते सुर गुरुः सौख्यं तथा चंद्रजः ॥ हानिं वित्त गतं करोति रवि-

जः स्निग्ध हृयं चंद्रमा राहु भूमि सुत स्तथार्क सहितः कुर्वंति दुःखं महत् ॥
२०६ ॥ जीवः पुत्रार्थ लाभं जनयति भृगुजः सर्व कार्य्यार्थ सिद्धिं प्रीतिं चैवाव
शेषं सुत धन सहितं पुण्य मारोग्य कर्त्तुम् ॥ सूर्य्य श्चंद्रो महीजो दिनकर तनयः
सैंहिकेयः प्रयुक्तो सर्वे ते पंच मस्था स्सनत भय कराः पार्थिवानां प्रयाणे ॥ २०७
॥ षष्ठे भानुर्न्नराणां दिन करतनयो भूमि पुत्र स्तथैव प्रीतांशु दैत्य मंत्री रजनि
कर सुतः सैंहिकेयोऽथ जीवः ॥ कुर्वन्सर्वार्थ लाभं यदपि हृदि गतं साध्यते स
र्व कार्य्यं तत्रैको भूमि पुत्रोऽप्य रिबल मथनं सर्व सिद्धिं ददाति ॥ २०८ ॥ नि
त्यं शुक्र दिवा करार्क तनया श्चंद्र स्तथा भूमिजः क्षिप्रं शत्रु प्रणाशं नयति च चर
मे स्थाने स्थिताः सप्तमे ॥ सौम्यो मित्र समागमं सुर गुरुः कार्य्यार्थ सिद्धिं परां
राहुर्दूषितानि करोति सततं यात्रा सु यामित्र गः ॥ २०९ ॥ आरोग्यं सोमपु
त्रो जनयति भृगुजो धर्म्म कामार्थ लाभं जीवो राहुस्त्य शेषं सुत मित्र जननी-

यात्रिकं नैधनस्थः ॥ चन्द्रो वंधं विधत्ते जनयति सविता शत्रुपक्षे ऽपि सं-
स्थो राहुश्चेड्डसि पुत्रोद्दि मरि पुत नये क्षिप्रमर्थस्य नाशम् ॥ २१० ॥ शुक्रो-
ऽति सौख्यं नवमे बुधश्च जीवो विधत्ते सुखसंपदर्थम् ॥ चन्द्रश्च सौरि स्त्वह
भूमिजश्च कुर्वंति घोराः पुरुषस्य दोषम् ॥ २११ ॥ कर्म्मस्थाने गतोऽर्कः प्र-
चुरधनकरः पुष्टिदः शीतरश्मिः जातस्संग्राम काले जयति रिपुबलं सौम्य
शुक्रौ च सौख्यम् ॥ नित्यं यात्रा स्थितानां भवति भयकरः सर्व कार्येषु
भौमो राहुर्वैरं तथा गं जनयति सततं दीर्घ कालं तथार्किः ॥ २१२ ॥ भृगुसुत
बुधजीवे श्चन्द्र सूर्य्यार्कि भौमे व्रजति यदि नरेन्द्रः क्षिप्रमेकादशस्थेः ॥ सज
यति रिपुवर्गं स्वेच्छयानि र्विशंकं विचरति गजराजो यूथ मध्ये यथेष्टम् ॥ २१३
॥ क्षितिज रवि सितार्कैः सैंहि केयो नराणां जनयति कुलनाशं श्रेष्ठ भृत्यस्य भे-
दम् ॥ जनयति रिपु सौख्यं भृत्य हानिं च कष्टं यदि बुध गुरु शुक्रा द्वादशस्थाः

न गाध्य ॥ २१४ ॥ अथ यात्रायां योग प्रसंग ॥ योगात्सिद्धिर्धरणि पतीना मृक्ष गुणै
रपि भूदेवानाम् ॥ चौराणा मपि शकुनै रुक्ता भवति मुहूर्त्ता दपि मनुजानाम्
॥ २१५॥ विषायते ऽमृतं योगा द्विषम प्यमृतायते ॥ विहायतत्फलं खेटा दद्यु
स्तद्यो गजं फलम् ॥ २१६ ॥ तिथि वासर योगेषु लग्नेन्दु करणो ष्वपि ॥ दृष्टेष्वपि
शुभा यात्रा योगे रुक्ता मनीषिभिः ॥ २१७॥ अथ योगाः ॥ सहजे रविर्दशमे शशी
तथा शनि मंगलौ रिपु गृहे ॥ सितः सुते हिबुके बुधो गुरु र पीह लग्न गः सञ्ज
यत्यरीन्स चलितो ऽचि रान्नृपः ॥ २१८ ॥ भ्रातरि सौरि र्भूमि सुतो वैरिणि ल-
ग्ने देव गुरुः ॥ आयगते ऽर्के शत्रु जयश्चे दनु कूलो दैत्य गुरुः ॥ २१९ ॥
तनौ जीव इन्दु र्मृतौ वैरिगो ऽर्कः प्रयातो महीन्द्रो जयत्येव शत्रून् ॥ २२०॥
लग्ने सूर्य्ये विधौ द्यून ७ धन २ स्थे त्विज्य भार्गवे ॥ प्रयाति नृपति स्सो ऽरीन्
जयेत्ता र्क्ष्य इ वोरगान् ॥ २२१ ॥ वित्त गतः शशि पुत्रो भ्रातरि वासरनाथः

॥ लग्न गते भृगुपुत्रे स्युः प्रशालभा इव सर्वे ॥ २२२ ॥ उदये रवि र्यदि सौरि
ग श्च शशी दशमेऽपि ॥ वसुधापति र्यदि याति रिपुवाहिनी वसमेति ॥ २२३
॥ मन्दे कुजे तनौ रवेऽर्के शुक्रे च विदिलाभगे ॥ संव्रजन्भूपति शत्रून्विजि
त्य श्रियमश्नुते ॥ २२४ ॥ मन्दारौ त्रिषडायस्थौ वलिनो ह्येज्य भार्गवाः ॥
प्रयाणे भूपते र्यस्य वसुधा तस्य हस्तगा ॥ २२५ ॥ लग्ने जीवे विधौ द्यूने च
तुर्ये ज्ञे तथा भृगौ ॥ पापास्त्रिगे र्महीपालः सुस्थितो लभते श्रियम् ॥ २२६
॥ लाभेऽर्के रवे बुधे शुक्रे दुश्चिक्ये भूमिते भानौ ॥ द्यूनेऽब्जे तनुगे जीवे प्र
स्थितस्य भवे ज्जयः ॥ २२७ ॥ लग्नेऽब्जे वा गुरौ सूर्ये षष्ठे व्योम गते भा
नौ ॥ सुते ज्ञे हिबुके शुक्रे राजा हंति गमे रिपून् ॥ २२८ ॥ वलिनीन्दुसुते
लग्ने केन्द्रे जीवेऽथ निर्वले ॥ त्रिषडं त्यांकगे चन्द्रे संव्रजन् श्रियमाप्नुया
त् ॥ २२९ ॥ अशुभ खगैरनवाष्टमदस्थै हिबुक सहोदर लाभमहस्थैः ॥

कविरिह केन्द्र गगीः पति दृष्टो वसुचय लाभ करः खलु योगः ॥ २३० ॥ सि-
तु लग्न कर्म्म हिबुके प्राग्भिजे परि वीक्षिते शुभन भोग मनैः ॥ व्यय लग्न मन्म
थ गर्हेषु जयः परि वर्ज्जिते ब्व शुभ नाम धरैः ॥ २३१ ॥ लग्ने यदि जीवः पा-
पा यदि लाभे कर्म्मण्य पि चेद्रा ज्या धिग मस्यात् ॥ द्यूने बुध शुक्रौ चन्द्रो
हिबुके वा तद्वत्फल मुक्तं सर्वैर्म्मुनि वर्य्यैः ॥ २३२ ॥ षडायाद्य गते शुक्र जीवा
ज्ञैर्गमने जयः ॥ तुर्य्ये वोश न ासिद्धे च मन्दे चन्द्रे च तत्फलम् ॥ २३३ ॥ बु-
ध भार्गव योरन्त र्य्याते कुमुद बांधवे ॥ तुर्य्यस्थे ऽर्के जयन्याशु गमने ऽरीन्न
रेश्वरः ॥ २३४ ॥ लग्ना १ स्ता ७ र्य्य ६ म्बु ४ वह्नि स्थे ष्वशुक्रे ज्यार बुधा-
र्कजैः ॥ योगो ऽयं क्रमतः प्रोक्तो गमने जय दो बुधैः ॥ २३५ ॥ षट् ६ त्रि ३ खा
१० री ६ न्दु १ वेदे ४ शा ११ संस्थिते तपना दिभिः ॥ खेचरैः क्रमतो जीव वारेयो-
गो ऽय मुत्तमः ॥ २३६ ॥ जीवे ऽर्के ऽरि गते भौमे त्रिगे रंध्र गते भृगौ ॥ ज्ञेष्वू:

नेच शुभा यात्रा भू भुजां जय दायिनी ॥ २३७ ॥ शुक्रार्कीज्यास्त्रि तूर्य्यस्थे
शत्रुस्थे मन्द भूमिजे ॥ यात्रा भूमि भुजां शस्ता शत्रु हंद विदारिणी ॥२३८
॥ एको द्वोज्य सितेषु पंच म तपः केंद्रेषु योग स्तथा द्वौ चैत्ते त्वधि योग एषु स-
कला योगाधि योग स्स्मृतः ॥ योगे क्षेम मथाधि योग गमने क्षेमं रिपूणां
वधं चाप्नो क्षेम यशो ऽवनिञ्च लभते योगाधि योगे व्रजन् ॥ २३९ ॥ पंच
मेन्दौ रविः षष्ठे वर्त्तते नवमे गुरुः ॥ भाग्य योगा भिधे योगे निहन्ता वैरिणां
सदा ॥ २४० ॥ गुरुः केन्द्रे त्रिकोणे वा रवि र्लाभेच्च कर्म्मणि ॥ कल्याण योगो
भूपस्य यातुः कल्याण कृद्भवेत् ॥ २४१ ॥ दिगीशो दिग्बली चेत्स्या लग्ने श-
स्य सुहृद्यदि ॥ विजयो नाम योगोऽयं यातो राजा जयी भवेत् ॥ २४२ ॥ सह-
जे स्थान गो भौमो भाग्यस्थ श्च बृहस्पतिः ॥ चिन्ता मणि समा ख्योऽयं यातु
स्संकल्प पूरकः ॥ २४३ ॥ लग्ने शुक्र श्शशी बंधौ कर्म्म स्थाने गुरु र्यदा ॥ स्व-

गेन्द्र योगो विख्यातो यातु स्सर्वार्थ साधकः ॥ २४४ ॥ लग्ने भौमो गुरुः छि-
द्रे षष्ठ स्थाने च भास्करः ॥ मृत्युञ्जय समाख्योयं सर्व शत्रु निवर्हणः ॥
२४५ ॥ आपोक्लि मगते चन्द्रे केन्द्र स्थे सुर पूजिते ॥ योगः केंद्र इति ख्यातो या-
तु रिस्सार्थ सिद्धिदः ॥ २४६ ॥ चन्द्रो [illegible] गुरु श्चास्ते लग्ने वा सुर पूजिते ॥ योगः
पारावतो यातु: शुक्रे वा लग्न केन्द्रगे ॥ २४७ ॥ प्रवले यदि योगो ऽसौ गमने स-
र्व सिद्धिदः ॥ २४८ ॥ रविः षष्ठे सित श्छिद्रे त्तृतीये भूमि नन्दनः ॥ पिनाकि यो-
गो विख्यातो यातु विजय कारकः ॥ २४९ ॥ अन्योन्य क्षेत्र गावेक क्षेत्रे वाक
विभास्करी ॥ मृत्यु योगो ऽय माख्यातो यातु र्मृत्यु प्रदायकः ॥ २५० ॥ उच्चक्षे-
त्र गत श्चन्द्रो ह्य क्षीण श्चार्वि गुरुः ॥ संजीवन समाख्यो ऽयं मृत्यु योगा पहार-
कः ॥ २५१ ॥ एकर्क्ष गौ जीव शुक्रौ स्या त्तामन्यो न्य सप्तगौ ॥ भयं कराख्यो-
यो गो ऽयं यातु भीति प्रदः स्मृतः ॥ २५२ ॥ उच्च मूल त्रिकोणेषु वर्तते गुरुभा-

गैवौ ॥ शुभयानिधयो योगोयं भयंकरविनाशनः ॥ २५३ ॥ भार्य्येशो व्यय
गो नीचः पुत्रस्थाने धनेश्वरः ॥ विदारिक समाख्योऽयं यातुः पत्नी निह-
न्त्यसौ ॥ २५४ ॥ मार्गेशः पापि संयुक्तः सप्तमेऽस्तं गतो ग्रहः ॥ विदारिक
मिमं मन्ये यातुः पत्नी विनाशकम् ॥ २५५ ॥ सप्तमे चन्द्रमास्तस्मात्सप्तमे
नीच खेचरः ॥ कुटुंब हार को योगो यातुः प्रियतमां हरेत् ॥ २५६ ॥ दुर्बलो
यदि मार्गेशो निवसेत्स्वाय मध्यगः ॥ पापकुंजर योगोयं यातुः पत्नी निह-
न्त्यसौ ॥ २५७ ॥ मार्गेशात्सप्तमे भानुः पञ्चमे क्रूर खेचरः ॥ विदारिकाख्य
स्तदासौ भार्य्या मरिवषं नयेत् ॥ २५८ ॥ स्वोच्च मूल त्रिकोणस्थः सौम्यः पा-
प विवर्जितः ॥ आनन्दाशैव योगोयं धर्मे शैव जया वहः ॥ २५९ ॥ उद-
या रिन भस्तलगे दिन कृद्यम शीत करैः ॥ नभवन्त्यर योऽभि मुखा हरिणाद्द
वके भरिणः ॥ २६० ॥ द्योसिते न सहिते ऽस्तगे विधौ वंधुगे प्रवसता मही

भुजा ॥ संगरे रिपु गणौ र्विकीर्यते तूल राशि रिव मातरिश्वना ॥ २६१ ॥ मूर्त्ति वित्त सहजेषु संस्थिताः शुक्र चन्द्र सिततिग्म रश्मयः ॥ यस्य यान समये रणांगणे तस्य यांति भल भा द्वितारयः ॥ २६२ ॥ यो याति जीवे तनुगे भर्गवाः क्रूर स्स्थिते र्व्योम्न्य पवाय संस्थैः ॥ तस्याग्रतस्सं यांति वैरि से नां प्रीति र्नृपाणा मिवना स्थिरा स्यात् ॥ २६३ ॥ लाभारि दुश्चिक्य गतीथ मारे बलान्विता भा र्गव जीव सौम्याः ॥ यस्य प्रयाणे विलयं प्रयान्ति तस्य द्विषस्सर्व रसं यथाप्सु ॥ २६४ ॥ लाभ विक्रम सुख स्थिते कंटकस्य गुरुणा निरीक्षिते ॥ द्यून रंध्रभ व वर्ज्जितैः खलैः स्याद्गतोऽभिमत सिद्धि भाक्नृपः ॥ २६५ ॥ सौम्य ग्रहैः केन्द्र तप स्सुतस्थैः क्रूरैः स्त्रिलाभारि गतैर्गताये ॥ कोपानल प्रशान्ति सुखेन तेषां विरोधि नारी नयनां बुपातैः ॥ २६६ ॥ एकोऽपि जीवार्क कुजार्क जानां सौख्ये विलग्ने स्वगृहे यदीन्दुः ॥ यातस्य यान्त्यत्र पराः प्रणामं महाकुलानी व कुटुं

व भेदैः ॥ २६७ ॥ चन्द्रेऽस्तगे देवगुरौ विलग्ने द्युशुक्रयोः कर्म्मणि लाभगेऽर्के ॥ सौरारयो र्भ्रातृगयोश्च यातो नृपस्त्वभृत्यान्निवशास्ति शत्रून् ॥ २६८ ॥ स्वोच्चस्थे लग्नगे जीवे चन्द्रे चापगते यदि ॥ गतो राजा रिपून्हन्ति पिनाकी त्रिपुरं यथा ॥ २६९ ॥ शुक्रे त्रिकोणे केन्द्रस्थे लग्ने चन्द्रेऽथवा रवौ ॥ शत्रून्हन्ति गतो राजा ब्रह्मद्वेषः कुलं यथा ॥ २७० ॥ पापास्तृतीये हिबुके सितज्ञौ जीवो विलग्ने मृगलां छनोऽस्ते ॥ यस्योद्गतस्यापि बलं रिपूणां कृतं कृतघ्ने ष्विव याति नाशम् ॥ २७१ ॥ यस्योदयास्तारिचतुस्त्रिसंस्थाः शुक्रोऽगिरंगारकसौम्यसौराः ॥ द्विषद्दलं स्त्री बदनानि तस्य क्लां तानि कान्तान विलोकयन्ति ॥ २७२ ॥ पूर्वोक्तयोगे धनगो बुधश्चेच्छशांक सूर्य्यौ च दशाय संस्थौ ॥ स्मिन् गतस्यालिकुलोपगीता नाना वनस्था द्विरदा भवन्ति ॥ २७३ ॥ त्रिषं-

चन्द्रोऽबलः बुधो बली उभौ च त्रिषष्ठ वान्यैव भवतस्तदायोगः ॥ १ ॥

यान्न वान्येष्ववलप्रयाणे को बुधो बली यस्य गुरुश्च केन्द्रे ॥ तस्यारियो षाभ-
रणैः प्रियाणि प्रियाप्रियाणां जनयंति सैन्ये ॥ २७४ ॥ केन्द्रोप गते न वीक्षिते गु-
रुणा रवाय तुर्य्य गे सिते ॥ पापै रनवाप्त सप्तगे र्वसु किं तन्न यदा शुया न्नृपः ॥
२७५ ॥ षष्ठाष्ट गो शुक्र बुधौ प्रयाणे सुरेश पूज्यो गगने यदि स्यात् ॥ रिपुःप्रणा
शं विषयेषु सौख्यं प्राप्नोति कीर्तिं विपुलां च भोगान् ॥ २७६ ॥ दुश्चिक्यलाभारि
गतेऽर्क पुत्रे चतुर्थ गे दैत्य गुरौ प्रयाति ॥ तदा पुमान्स्त्विरदेन्द्र यानं कीर्तिं यश
स्सिद्धिं सहस्रमेति ॥ २७७ ॥ केन्द्र स्थाने सुर पति गुरौ कंटकस्थेऽसुरेज्ये छि-
द्रे सौम्ये भवसति यदा त्वष्टमे न्दुर्य्यदि स्यात् ॥ येषां क्रूरा रिपु सहजगा राहु के-
तू च मूर्त्ता वापुः कीर्त्तिन्द्र विणमतुलं तेलभन्ते यशश्च ॥ २७८ ॥ मूर्त्तौ शुक्रे
सुर पति गुरौ छिद्र गे वा त्रिकोणे केन्द्र स्थाने श निरवि कुजा लाभगा वा यदिस्युः
ये भूपा यान्ति प्राप्नुं विपुल धन मथो सैन्यनाशं रिपूणां कीर्तिं शुद्धं यशश्च प्रम थि-

त रिपवस्ते सुखादा व्रजन्ति ॥ २७९ ॥ होरासंस्थे सुरपति गुरौ भार्गवे कंटक-
स्थे षष्ठे चन्द्रे व्रजति यदि वा कार्य्ययोगा त्सितीशः ॥ प्राप्नोत्युर्व्वं कनक तुरगं
रौप्य रत्नादि कोषं मायुः कीर्त्तिं जयति च तदा मत्त मातंग यूथम् ॥ २८० ॥
लग्नारि कर्म्म हिबुकेषु शुभे स्थिते षु द्यूनान्त्य लग्न रहिते ष्व शुभ ग्रहेषु ॥ या-
तुर्भय न्न भवति प्रतरे न्त मुद्रे यद्य स्म नापि कि मुला रिस मा गमेषु ॥ २८१
॥ एकान्तरै र्दीन्भृगु जा त्कुजा द्वा सौम्ये स्थिते सूर्य्य सुता द्गुरोर्वा ॥ प्रध्वस्य-
ते ऽरि र्न चिरा न्नृतस्य वैयाधि को भृत्य इवे श्वरस्य ॥ २८२ ॥ निरन्तरं यदि भवने-
षु पंचसु ग्रहाः स्थिता दिवस करेण वर्ज्जिताः ॥ यिया सतो यदि च भवन्ति दक्ष ल-
स्त दा परान्व लभि दिवा शुकन्तति ॥ २८३ ॥ प्राकपाल स्थै र्ग्रहैः पश्चिम दिशि
पृष्ठ गतं स्तपर कपाल स्थैः ॥ प्राच्यां खम ध्य स्थै रुत्तर दिशि श्मशानस्थै र्दक्षि

मुक्ताङ्गौ मा हासौ राज्जीवा हा बुधः एकान्तरे तृतीय स्थाने यत्र कुत्र स्वान्तरा योगः

प्रजायते ॥ १८५ ॥ दीप्ते सूर्य्ये प्रतीपं स्यात् छादिते भीति रोतिनः ॥ इंद्रचापेऽनि वृष्टिस्स्या द्योम्निचराङ्गं प्रदीपिते ॥ १८६ ॥ अथपक्षिमृगादि विकृति स्तत्फलमपि ॥ ग्रामारण्या स्तथानी-रस्थल जाद्यु निशाचराः ॥ प्राणिनो व्यत्ययं जाता स्व चक्रं पीडयं त्यमी ॥ १८७ ॥ संध्या काले ऽथ दीप्ता याहिशो मार्गे पतत्रिणः ॥ क्रोशंति जंबुका दीनां संघा द्वारे च तद्विशि ॥ १८८ ॥ विहंगा वियति व्यस्त चक्राया नदन्त स्ततः ॥ कुक्कुटो ऽस्तेच गौन्नक्तं हेमन्ते रौति कोकिलः ॥ १८९ ॥ खरा श्वानो ऽथवा स्वैरं प्रक्रीडंति परस्परम् ॥ इत्यादि विकृतौ धत्ते पीडा भवति भूयसी ॥ १९० ॥ माघे वुधेतु महिषी श्रावणे वडवा दिवा ॥ सिंहे गावः प्रसूयंते स्वामिनो मृत्यु दायिकाः ॥ १९१ ॥ अथान्ये ऽप्य शुभोत्पाताः ॥ अस्थि क्षिपति गेहे श्वा सन्मुखो ऽस्ते च रोदिति ॥ यस्य तद्गेह नाशः स्यात् षण्मासा भ्यन्तरे तदा ॥ १९२ ॥ रौति सूर्य्योदये श्वा चेज्जृंभते सूर्य्य दिङ्मुखः ॥ भूप नाशस्तदा चास्ते कृपीशानाश मानुयुः ॥ १९३ ॥ स्तंभ द्वार निपात श्चेद्भूमो त्पति विनाग्निना ॥ युद्ध्यन्ते वालका स्स्वैरं काष्ठलो-

द्वै: परस्परम् ॥१९४॥ तदा भूप भयं घोरं विज्ञेयं दीर्घदर्शिभि: ॥ अंगना बालका मन्त्रा-
न्नूयंते यत्स्वभावतः ॥१९५॥ सत्यं तज्जायते तस्माद्गूढा चेयं सरस्वती ॥ अथोत्पात दोषापवा
दः ॥ स्वस्व शान्त्या महोत्पाता विनश्यंति च सर्वशः ॥ सप्ताहाभ्यन्तरे वृष्ट्या शुभाये
वन दुःखदाः ॥१९६॥ अथोत्पातानामुपहारः शान्तिश्च ॥ धूम्रकेतुर्म्महीकंपो दिग्दाहो धूलि
वर्षणम् ॥ भुवो गर्त्तश्च निर्घाता उल्कापातादयोऽपरे ॥१९७॥ यस्मिन्देशे प्रजायंते म
होत्पाता महाभयाः ॥ प्रजापीडा भवेत्तत्र विनाशः पृथिवीपते ॥१९८॥ तदा शान्ति
र्विधातव्या देशे ग्रामे पुरेऽखिलैः ॥ शान्त्या दोषा विनश्यंति त्वन्यथा दोषमद्भुतम् ॥
इत्युत्पाताः अथ महर्घकाण्डम् तत्रादौ वर्ष राजादि विचारः ॥ चैत्र मासि शिते पक्षेऽर्कोदये प्र
तिपत्तिथौ ॥ यो वासरस्स राजा स्यात् तस्मिन्वर्षे ततः फलम् ॥१९९॥ मेषेऽर्कस्य प्र
वेशो यो वारो मंत्री स कथ्यते ॥ चापे धान्यपतिर्ज्ञेय- आर्द्रायां जलदाधिपः ॥ २०० ॥
रसाधिपस्तुलायां स्यात्कर्कशस्य पतिस्तथा ॥ मकरे स्वर्णरत्नादिनीरसेशो बुधैः स्मृतः

॥ २०१ ॥ अथ विशोपकापनयनम् ॥ शाके त्रिघ्ने हृते शैले लब्धं स्थाप्यं पृथक् क्वचित् ॥ शे-
षं द्विघ्नं शरै र्युक्तं वर्षास्याच्च ततः पुनः ॥ २०२॥ लब्धां शाके प्रकल्प्यैवं कर्त्तव्या प्रोक्त वत्क्रि-
या ॥ तृष्णा निद्रा तथालस्य मुद्यमः शांतिरेवच ॥ २०३॥ क्रोधो दंभो ऽथ मित्रत्व मुत्सवः
पापपुण्यकैः ॥ अथ प्रकारान्तरेणास्तुधाद्यानयनम् ॥ शाके वेदै र्हृते शैलै र्भक्ते लब्धं च पूर्वव-
त् ॥ शेषे च द्विगुणे सैकं क्षुधा तृष्णा सुषुप्तिका ॥ २०४॥ आलस्य मुद्यमः शांतिः क्रोधो
लोभो ऽथ वेदकः ॥ दंभो ऽथ मैथुनं चौर्य्यं रसनिः पत्तिरेवच ॥ २०५॥ फलनिःपत्तिरुत्सा-
हः पुण्यं पापं तथैवच ॥ सर्वनिःपत्तिरित्येवं संपत्तिश्च यथा क्रमात् ॥ २०६॥ अथोग्रत्वानय-
नम् ॥ पूगाक श्चाष्टगुणः स्वैदै र्भक्तो लब्धं च पूर्ववत् ॥ द्विघ्न शेषं त्रिभि र्युक्तं मुग्रत्वं च र-
सोद्भवः ॥ २०७॥ फलोत्पत्ति स्तथा व्याधि रोग नाश स्तथैवच ॥ आचार श्चाप्य नाचारस्तु
नि र्ज्जन्म ततः परम् ॥ २०८॥ चौरो पशमनं वन्हे र्भीति रग्नि र्ग्रामक्रमात् ॥ अथ शालभाद्यानय-
नम ॥ शाके त्रिघ्ने हृते नंदै र्लब्धं स्थाप्यं तदुक्तवत् ॥ द्विघ्ने शेषं त्रिभि र्युक्ते शलभो मूषक

स्तथा ॥ दैविकं पीत ताम्रं च स्वचक्रं परचक्रकम् ॥ २०७ ॥ अथ स्वकारांतरेण शाल भाद्यानयनम् ॥
शेल शोनव हृच्छा कः शेष द्विघ्नं युतं त्रिभिः ॥ शाल भो मूष को दैवं पीतं ताम्रं स्वचक्रक-
म् ॥ २०८ ॥ परचक्रागम श्चैवं क्रमा देवं च पूर्ववत् ॥ अथोद्भिज्जादिप्राण्यानयनम् ॥ शाके वारी
नगैरंशै रीशैर्न्निघ्ने पृथक् पृथक् ॥ सप्त भक्ता व शेषं यत् द्विघ्नं पंचयुतं क्रमात् ॥ उद्भि-
जः स्वेदजश्चैव जरायु प्रभवोंडजः ॥ २१० ॥ अथ युगानां प्रमाणम् ॥ द्वात्रिंशति सहस्रैश्च
युक्तं लक्ष चतुष्टयं ॥ प्रमाणं कलि वर्षाणां प्रोक्तं पूर्वैर्म्महर्षिभिः ॥ २११ ॥ युगानां कृत
मुख्यानां क्रमान्मानं प्रजायते ॥ कलेर्म्मानं क्रमान्निघ्नं चतुस्त्रिद्वि मितैस्तदा ॥ २१२
कृतमानं १७२८००० त्रेतायाः १२९६००० द्वापरमानं ८६४००० कलिमानं ४३२००० ॥
अथ गत कलिमानम् ॥ खग शैलेन्दु रामाढ्ये शाके ऽब्दास्ते कलेर्गताः ॥ तैर्विहीनं क-
लेर्म्मानं शेषे शेष कलेर्म्मितिः ॥ २१३ ॥ अथ धर्म्मानयनम् ॥ स्वाभ्राभ्रां कैश्च वेदैश्च-
कलि शेषस्समायुतः ॥ कलिमानेन संभक्तारा ह्लब्धं धर्म्म एव सः ॥ २१४ ॥ शाकाई च

युतं जीव राशिभिस्तद्धृते ऽर्काके ॥ लब्धं पुरपंतु तन्यूनाविंशतिः पाप मुच्यते ॥ २१५ ॥



अथ व्ययानयनार्थं ध्रुवांकाः ॥ रस ६ इस्तिथ्यो १५ गजा ८ श्शैलेन्द्र चंद्रा १७ नंदेंदव १९ स्तथा ॥
स्वर्गा २१ दिशः १० क्रमात् ज्ञेया रव्यादीनां ध्रुवा इमे ॥ २१६ ॥ निज राशि युते वर्ष स्वामिनो-
ऽब्दयोग के ॥ त्रिघ्ने वाण युते भक्ते तिथिभिः शेष संमिते ॥ २१७ ॥ आया स्युस्त्रिगुणे लब्धे
ऽप्य राढ्ये तिथिभिर्हृते ॥ शेषे व्ययाः क्रमात्त्वस्य राशीनां कथिता बुधैः ॥ २१८ ॥ अथ शाकात्सु-
भिक्षज्ञानम् ॥ शाके त्रि ८ हते वाणैः शैले भक्ते ऽथ शेषके ॥ क्रमान्मध्यं सुभिक्षं च दुर्भि-
क्षं च सुभिक्षकम् ॥ २१९ ॥ महर्घं समता ज्ञेया चैक तो रौरवं तु खे ॥ अथ संवत्सरात्सुभिक्षादि
ज्ञानम् ॥ त्रिघ्ने संवत्सरे युक्ते शरे भक्ते ऽथ सप्तभिः ॥ चतुर्द्वित्रि मिते शेषे सुभिक्षं विपुलं
भवेत् ॥ २२० ॥ [illegible]त्रके च दुर्भिक्षं षट्भू संख्ये च मध्यमम् ॥ शून्ये तु रौरवं ज्ञेयं फलं
वर्षे बुधैः सदा ॥ २२१ ॥ अथापरः प्रकारः ॥ द्विघ्न संवत्सरे रामैर्हृते भक्ते नगैस्तथा ॥ शेषे
वाण मिते युग्मे सुभिक्षं हायनं भवेत् ॥ २२२ ॥ वेद चंद्र मिते ज्ञेयं दुर्भिक्षं खे तु रौरवम् ॥ र-

सा नत्त्रमिते मध्यमेतदर्घं फलं बुधैः ॥ २२४॥ अथ राजादीनां वर्षे संक्षेपात्फलम् ॥ राजा मात्य-
नृपादीनां वक्ष्ये संक्षेपतः फलम् ॥ गुरुशुक्रादयो धीमन्तः संति चेज्जन सौख्यदाः ॥ २२५॥
सुभिक्षं शोभना वृष्टिर्ई शस्वास्थ्यं प्रकुर्वते ॥ शनि भौमौ प्रकुर्वाते दुर्भिक्षं विग्रहं भयम् ॥
२२६॥ अल्प सौख्य प्रदः सौम्य स्त्वल्प दुःख प्रदो रविः ॥ फलं सविस्तरं चैषां विज्ञेयं संहि-
तादिषु ॥ २२७॥ अथ दीपमालायां नक्षत्रयोगफलम् ॥ यदि भवति कदाचित्कार्त्तिके नष्ट चंद्रे शनि-
रवि कुज वारे स्वाति चायुष्म योगे ॥ गगन चर पशूनां जंगमस्थावराणां नृपति जनवि-
नाशो राज्य भंगस्तु चोक्तः ॥ २२८॥ अथापरोपि ॥ दर्शे चायुष्मतो स्वातौ पापाहे मासि का-
र्त्तिके ॥ प्रदोषे चेत्प्रजा पीडा राज युद्धाद्युपद्रवाः ॥ २२९॥ अथ ज्येष्ठप्रतिपदादियोगः ॥ ज्ये-
ष्ठे शुक्ल तिथावाद्ये चन्द्रे ज्ये भृगु वासरे ॥ सुभिक्षं शोभना वृष्टि र्दुर्भिक्षं पाप वासरे ॥
२३०॥ अथाषाढद्वितीया नवमीयोगः ॥ आषाढे शुक्ल पक्षे च द्वितीयां नवमी दिने ॥ चन्द्रे
ज्य भृगु वारे स्यात्सु वृष्टिश्च समर्घना ॥ २३१ ॥ बुधे साम्यं रवौ तापः कुजे वृष्टिर्न जायते ॥

शनिवारे प्रजा पीडा दुर्भिक्षं रौरवं तदा॥ २३२॥ अथ शनिचारफलम् ॥ गुर्जरे १ जे शनौ
पीडा प्रभासा वुंदयो र्वृषे ॥ मरुस्थले च युग्मे स्यैं कर्के काश्मीर मंडले॥ २३३॥ रांक प्र-
स्थे च सिंहे स्यैं कन्यायां मालवे तथा ॥ तुलादि त्रि पृथिव्यां च दुर्भिक्षं जन पीडनम् ॥
॥ २३४ ॥ सुभिक्षं च मृगे कुंभे मीने सर्व प्रजा क्षयः ॥ अथ कूर्मचक्रम् ॥ कूर्मचक्रे शनिर्म-
ध्ये ततः प्राच्यादिषु क्रमात्॥ २३५॥ नाशयेत्क्रमतो देशान् कृत्तिकाद्यैस्त्रिभिस्त्रिभिः॥
निजाधिष्ठित भैर्ध्यानं नंदैर्दि मुखाः स्ततः॥ २३६ मागधाद्यान् कलिंगा दीनावंतिक मु-
खांस्तथा ॥ ततो कौंकन पौंड्रा दीन् सिंधु सौराष्ट्रकादि कान्॥ २३७॥ पौलिंद चीनका-
द्यांश्च कुरु काश्मीर मत्स्यकान् ॥ खल वाल्हीक पादांश्च नव खंडानि मांस्तथा॥ २३८॥
दृष्ट्वा स्वाधिष्ठिता हे शार्दीशा न्यां यमदि गा तान् ॥ अथ ग्रहचार वशान्महर्घादिः ॥ मेषे गुरौ
सुभिक्षं च सुवृष्टिश्च सुखी नरः ॥ वृषे गुरौ स्वल्प वृष्टिः प्रजा पीडा च विग्रहः॥ २३९॥ अना-
वृष्टिः प्रजा नाशो रौरवं मिथुने गुरौ ॥ कर्के गुरौ महा वृष्टि प्रछत्र भंगो महर्घता॥ २४०॥

सिंहे गुरौ सुभिक्षं च सुवृष्टिश्च प्रजासुखं ॥ कन्या गुरौ रोग पीडा दुर्भिक्षं स्वल्प जन्म च ॥ २४१ ॥ तुले गुरौ स्वल्प धान्यं बहु क्षीरं प्रजायते अलौ जीवे च दुर्भिक्षं राज चौर रणोद्भयम् ॥ २४२ ॥ चापे गुरौ सुधा वृष्टिः शुभं धान्यं सुखीजनः ॥ दुर्भिक्षं मकरे जीवे राजयुद्धं पशुक्षयम् ॥ २४३ ॥ कुंभे गुरौ सुभिक्षं च धातु मूल्य महर्घता ॥ दुर्भिक्षं दक्षिणे देशे नान्य देशे झषे गुरौ ॥ २४४ ॥ अथाषाढी पूर्णा विचारः ॥ आषाढी पूर्णिमायां च वायव्ये यदि मारुतः ॥ मशका मूषका कीटा जायंते शलभा स्तथा ॥ २४५ ॥ आषाढी पूर्णिमायां चेद निलो वाति नैरृते ॥ अनावृष्टि र्धान्य नाशो जलं कूपेन दृश्यते ॥ २४६ ॥ आषाढी पूर्णिमायां स्यादुत्तरे यदि मारुतः ॥ धर्म्म शीलास्तथा लोका धन धान्यं गृहे गृहे ॥ २४७ ॥ आषाढी पूर्णिमायां चेदीशाने यदि मारुतः ॥ सुखिनो हि नरा लोका गीत वाद्य महोत्सवैः ॥ २४८ ॥ वन्हि कोणे वन्हि भीतिः पश्चिमे च जलाद्भयम् ॥ अन्यत्र यदि वायुस्स्यात्सुभिक्षं जायते सदा ॥ २४९ ॥ आषाढ्यां भास्करास्ते सुर पति ककुभो वाति वाते सुवृष्टिः

शस्य ध्वंसं प्रकुर्य्याद्यदि दह्न नदिशो मन्दवृष्टिर्यमेन ॥ नैऋर्त्या मन्दनाशो वरुणाद्ब-
हुजलं वायुना वायुकोपः कौवेर्य्यां च भवति वसुमती तद्दीशान कोणे ॥ २५० ॥ सर्वमा-
से पूर्णिमायां भूमिकंपो यदा भवेत् ॥ उल्कातारा वज्रपातः परिधिः शशिसूर्य्ययोः ॥
२५१ ॥ धूम्रकेतुः शक्रचापं ग्रहणं बहुधा तथा ॥ तदा सकल वस्तूनां ज्ञायते च महर्घ-
ता ॥ २५२ ॥ अथ प्रतिमासे दर्श फलम् ॥ शुभवारान्विते दर्शे सुभिक्षं च प्रजासुखम् ॥ पापवा-
रान्विते दुःखं तदा धान्य महर्घता ॥ २५३ ॥ रविवारेण संयुक्ता यदा स्यात्सौम्य ज्येष्ठयोः ॥
अमावास्या तदा पृथ्वी रुंड मुंडा च जायते ॥ २५४ ॥ चैत्रस्य शुक्लपंचम्यां पूर्ववायुईनागमः ॥
भाद्रे गुणत्रयं मौल्यं शस्यानां ज्ञायते तदा ॥ २५६ ॥ ज्येष्ठस्य शुक्ल पंचम्यां वृष्टिः पश्चिम मारु-
तः ॥ तदा चतुर्गुणं मौल्यं धान्यानां कार्त्तिके भवेत् ॥ २५७ ॥ श्रावणे शुक्लपंचम्यां वृष्टिर्वा-
तो दिन द्वयम् ॥ दक्षिणे पश्चिमे ज्ञेयं दुर्भिक्षं धान्यसंक्षयः २५८ अथ ग्रहचारवशात्सर्व वस्तूनां म-
हर्घता ज्ञानम् ॥ यदि तिष्ठति भौमस्य क्षेत्रे कोऽपि ग्रहस्तदा ॥ षण्मासं तु च धान्यानां

जायते च महर्घता ॥२५९॥ शुक्रक्षेत्रे कुजे मासं द्वयं सर्वमहर्घता ॥ चंद्रे च दिननाथे च स-
र्वरोगो ऽशुभं तदा ॥२६०॥ शनौ राहौ सर्वधान्यमहर्घं राजविग्रहः ॥ शुक्रक्षेत्रे च चंद्रे च
चंद्रक्षेत्रे भृगोः सुते ॥२६१॥ पाषंडानां भवेद्वृद्धिर्धान्यानां च महर्घता ॥ रविक्षेत्रे भृगोः पुत्रे प-
शूनां च महर्घता ॥२६३॥ बुधक्षेत्रे शनौ चन्द्रे सर्वधान्यमहर्घता ॥ शुक्रक्षेत्रे गुरौ भौमे कर्पा-
सादिमहर्घता ॥२६४॥ भौमक्षेत्रे शनौ राहौ ताम्रादीनां महर्घता ॥ शनिक्षेत्रे शनौ रा-
हौ सुभिक्षं चंद्रभास्करे ॥२६५॥ पशुनाशो धान्यवृद्धिर्गुडादीनां महर्घता ॥ गुरुक्षेत्रे शनौ
राहौ पशुनाशस्तृणक्षयात् ॥२६६॥ भौमे राजविरोधश्च बुधे वृष्टिश्च भूयसी ॥ भौमक्षे-
त्रे यदा संति राहुभौमार्कभार्गवाः ॥२६७॥ षण्मासं गुडकर्पास घृतक्षीरमहर्घता ॥ मंद-
क्षेत्रे यदा संति मन्दराहुबुधास्तथा ॥२६८॥ चतुःपदानां नाशश्च द्विपदानां च जायते ॥
भौमक्षेत्रे यदा संति शुक्रभौमनिशाकराः ॥२६९॥ तदा मुक्ता पशूनां च शंखस्य च महर्घ-
ता ॥ शुक्रभौमौ गुरुक्षेत्रे प्रजापीडा च जायते ॥२७०॥ ग्रहराशिसमायोगे फलमेतत्प्र-

कीर्त्तितम् ॥ अथ राशि परत्वेन ग्रहोदय फलम् चंद्रोदये कुज क्षेत्रे तु धान्यस्य क्षयः
चंद्रोदयो भृगु क्षेत्रे स्वल्प वृद्धिः क्रियादिके ॥ २७१ ॥ प्रजा पीडा बुध क्षेत्रे सोम शुक्रोदये
भवेत् ॥ रवि क्षेत्रे तुला वृद्धिः शनि सोम भृगूदये ॥ २७२ ॥ चंद्र क्षेत्रे राहु चंद्र बुधा-
नामुदयो यदि ॥ षण्मासं स्याच्च दुर्भिक्षमति वृष्टिश्च जायते ॥ २७३ ॥ उदितो बुध क्षे-
त्रे च यदि राहु शनैश्चरौ ॥ पशु क्षयः प्रजा पीडा धान्यानां च महर्घता ॥ २७४ ॥ शु-
क्र क्षेत्रे सोम सूर्य्य सूर्य्य पुत्रोदयो भवेत् ॥ उदयास्तमनं पीडा जायते च महर्घता ॥
यदोदयः शनि क्षेत्रे भौम भास्करयो भवेत् ॥ घृतानां च तदा वृद्धि गुडानां रक्त वा-
ससाम् ॥ २७६ ॥ यदा समुदयं याति शनि क्षेत्रे शनैश्चरः ॥ तदा तृणानां काष्ठानां लो-
हानां च महर्घता ॥ २७७ ॥ अथ नक्षत्र स्थित ग्रह वसान्महर्घता ज्ञानं ॥ गुरुर्यदा विशाखा
यां तदा धान्य महर्घता ॥ मंगलस्य च कालस्य शनौ सर्वत्र मंगलम् ॥ २७८ ॥ आश्वि
वर्ण्यां यदार्द्रायां शनि स्थे तदा भयम् ॥ बुधे भाद्रे च दुर्भिक्षं सुभिक्षं भृगु नंदने ॥

सं.शि. ॥ २७९ ॥ सुभिक्षं चानुराधायां यदि श्रेय ग्रहाः स्थिताः ॥ कल्याणं चैव सौभिक्ष्यमस्ते
३५७ षा संस्थिते गुरौ ॥ २८० ॥ कर्प्पासा बहवो मंदे भौमे कटकपीडनम् ॥ बुधे तिलाश्चमा
षाश्च महर्घं वर्षकालतः ॥ २८१ ॥ सूर्य्ये सर्वाणि धान्यानि महर्घाणि भवंति च ॥ शु-
क्रे च महती वर्षा शस्यानि सकलानि च ॥ २८२ ॥ मूले गुरौ कुलत्थानां मुद्गानां व-
द्धा भवेत् ॥ भौमे मूलस्य चापस्य बुधे च सर्वसंपदः ॥ २८३ ॥ पूर्वाषाढागते भौ-
मे पीडा स्यात्पशुपक्षिणाम् ॥ केतौ महर्घता धान्ये पूर्वाषाढगते भवेत् ॥ २८४ ॥
उत्तराषाढके जीवे गुडानां च महर्घता ॥ भौमे च पुष्पजातीनां जायते च महर्घता
॥ २८५ ॥ अभिजिन्नाम्नि नक्षत्रे यदा छायासुतो भवेत् ॥ सर्वशस्यानि जायंते सुभि-
क्षं च कुजे तथा ॥ २८६ ॥ श्रवणे च यदा जीवस्तदा स्युः सर्वसंपदः ॥ बुधे नाशश्च भू-
पानां शनौ भूरिजसीरकः ॥ २८७ ॥ कृत्तिकायां च रोहिण्यां यदा जीवो हि तिष्ठति ॥
मध्यमानि च शस्यानि तदा दृष्टिश्च मध्यमा ॥ २८८ ॥ आर्द्रायां मृगशीर्षे च यदा वाच- ३५७

स्पतेः स्थितिः ॥ सुभिक्षंच सुवृष्टिश्च प्रजानांच सदा शिवम् ॥ २८९ ॥ पूर्वफाल्गुणी
द्वये हस्ते मघायां च यदा गुरुः ॥ सुभिक्षंचसुवृष्टिश्च प्रजानां स्यादरोगता॥ २९०
चित्रा स्वात्यो र्यदा जीव स्तदा चित्राः पयोधराः ॥ विचित्राणि भवन्त्येव शस्या निच
क्वचित् क्वचित्॥ २९१॥ विशाखा मैत्रयो र्जीवे धान्यं वर्षाच मध्यमं ॥ ज्येष्ठा मूले मास
युग्मं विष्टि र्मास द्वये नच॥ २९२॥ पूर्वाषाढोत्तराषाढे स्थितो यदि बृहस्पतिः॥ तदा रोगं
सुभिक्षंच सुवृष्टिश्च प्रजायते॥ २९३॥ अनावृष्टिश्च दुर्भिक्षं रेवत्यां संस्थिते गुरौ॥
धनिष्ठायांच शुक्रेच पीडा भवति हस्तिनाम्॥ २९४ ॥ क्रूरा वक्र गताः खेटा स्तै र्म्याः स्य-
द्यति चारगाः ॥ तदा भूप क्षयो युद्धं जगद्घोर भयार्द्दितम् ॥ २९५॥ अथैकमासे पंच वार फल
म् ॥ शुक्लाद्ये मास के पंच पाप खेटस्य वासराः ॥ प्रजा पीडा भवेत्तत्र धान्यस्यापि म-
हर्घता॥ २९६॥ मासे पंच शुभा वारा यद्येकस्मिन्प्रजायते॥ सुभिक्षं सर्व शस्यानां तदा
च सुखिनो जनाः॥ २९७॥ पौषे पंच शनि श्चैव माघे पंच रवि स्तथा ॥ फाल्गुने पंच भोम-

स्य महीनाशाय केवलम् ॥ २९८ ॥ अथ चंद्रस्य शृंगोन्नतिस्तत्फलम् ॥ चंद्रो याम्योन्नतो मीनमेषगोऽभ्युदितो मतः ॥ समशृंगो वृषे कुंभे शेषभेषूत्तरोन्नतः ॥ २९९ ॥ याम्योन्नते च दुर्भिक्षं विरुद्धं स्यात्समे विधौ ॥ सुभिक्षं सौम्यदिग्भागे चोन्नते मृगलांछने ॥ ३०० ॥ मूलाकारे विधौ भीतिः प्रोदिता महती रुजः ॥ अथ प्रतिमाससंक्रांतिवशात्समर्घमहर्घज्ञानम् ॥ सुभिक्षं संक्रमे सौम्ये वारेऽधिकमुहूर्तके महर्घं पापवारे वा मुहूर्ते चाक्षभूमिते ॥ ३०१ ॥ पूर्वसंक्रमभाद्दिग्नि मिते च संक्रमे रवेः ॥ सुभिक्षं स्यात्त्वतुः पंचमिते भेतु महर्घता ॥ ३०२ ॥ षष्ठे भे संक्रमे चापि दुर्भिक्षं रौरवं भवेत् ॥ अथ ग्रैष्म शारद धान्यनिःपतिज्ञानम् ॥ वृषे संक्रमगो भानोः केन्द्रस्थांत्यगते स्युभैः शारदी धान्यनिष्पत्तिस्तु माहायने मता ॥ ३०३ ॥ पापैरेवं स्थितैः स्वल्पा मिश्रैर्मिश्रा प्रकीर्तिता ॥ पापाद्यून गते न स्येत्सुपन्न मपि शस्यकम् ॥ द्यून शत्रु गते पापे निष्पत्ति स्वल्पिका भवेत् ॥ इत्थं वृश्चिक संक्रांतौ विज्ञेयं ग्रीष्मधान्यकम् ॥ ३०५ ॥ चापादि त्रितये सूर्ये सौम्यैर्युक्ते स्थिते ग्रहैः ॥ सरद्धान्यं

समर्घं स्यात् गार्घं तद्धान्य जीविभिः॥ ३०६ ॥ पापैर्युक्ते क्षिते धान्यं महर्घं जायते ऽखिलम् ॥ एवं मेषादिगे गेऽष्मे धान्यं ज्ञेयं विचक्षणैः ॥ ३०७ ॥ अथ संक्रांतिवशाद्दर्शपौर्णमास्योरुत्पात दिवसात् धान्यादीनां समर्घ महर्घ ज्ञानम् ॥ गेऽष्मे घस्यं १ ततो मूलं २ रसधान्यं ३ घृतादिकं ४ हेमाद्यं ५ तुरगो ६ वस्त्र ७ मणि ८ काचां ९ बु १० धान्यके ११ ॥ ३०८ ॥ मूलंच १२ क्रमतो ज्ञेयं मेषाद्यर्कैः स्थले क्षिते ॥ दर्शेवा पौर्णिमायां चेद्दुपरागोऽति वर्षरागम् ॥ ३०९ ॥ परिवेषस्तथा दंड उल्का पाताद्युपद्रवाः ॥ जायंते ऽत्र तदा तेषां वस्तूनां च महर्घता ॥ ३१० ॥ रवौ सौम्ये क्षिते ज्ञेया उत्पाते ऽत्र महर्घता ॥ अथ वृक्षादौ पत्र पुष्प फलाद्यै र्धान्यादिनि ष्पत्ति ज्ञानम् ॥ वृक्षा दौ बहुभिः पुष्पै र्महा वृष्टिः प्रजायते ॥ पत्रै स्स्वल्पतरा वृष्टिः दूर्वा भिश्च त्वसयोऽधिका॥ ३११ ॥ मधुकै र्बहु गोधूमा जवाऽस्युर्घटजैः फलैः ॥ सुभिक्षं नागनिंबैः स्याच्छाल वृक्षैश्च शालयः॥ ३१२ ॥ अश्व स्याऽधिकं धान्य मर्जुनाऽधिकं जलम् ॥ क्षेम मा ग्रेश्च पालाशैः कोद्र वाजंबुतस्तिलाः॥ ३१३॥ दुर्भि ३६०

संशी॰ ह्वं रवादि रै रोगः कुटजैः परिकीर्तितः ॥ इतिसमर्घकांडःसमाप्तः ॥ अथ वृष्टि ज्ञानार्थं मेघ गर्भज्ञानम्
१६१ मार्गे शुक्लादितो ज्ञेयो मेघगर्भसमुद्भवः ॥ फाल्गुणे ताम्रवर्णा कांतिस्निग्धाश्चाभ्रख-
रानिलात् ॥ ३२४ ॥ चैत्रेतु परिघे दृष्ट्वा वायु नाना भ्रैरेखया ॥ अथकेषांचिन्मतांतरे
केचिन्मार्गादि मासेषु प्रोचुर्गर्भस्य लक्षणम् ॥ गर्ज्जनात्पवनात्तोय वर्षणादि घु-
तोऽथवा ॥ ३२५ ॥ अथ शुभ गर्भलक्षणानि ॥ श्वेतनीलांडजाश्चाच न चाति विगल
ज्जलाः ॥ प्रास्त गर्भाश्चिते मेघा उद गीशान पूर्वजाः ॥ ३२६ ॥ पुष्टिं प्रयांति ते ग-
र्भाः विद्युद्वाताभिवर्जितैः ॥ भाद्रापाद द्वयोर्यन्नाविशाखोत्था वह्नूदकाः ॥
३२७ ॥ अथ गर्भधारणादिना दृष्टि ज्ञानम् ॥ वृष्टि गर्भाद्भमारभ्य पक्षैर्विश्व १३ मितै-
र्भवेत् ॥ रात्रि गर्भे दिवा दृष्टि र्दिवा गर्भे निशि स्मृता ॥ ३२८ ॥ अथ प्रकारांतरेण गर्भाद्वृ-
ष्टिज्ञानम् ॥ आरभ्यैकादशीं कृष्णां कृष्णादौ माघमासके ॥ द्वादश स्वपि घस्रेषु विद्युद्वाता
भ्रगर्जितैः ॥ ३२० ॥ रोहिण्यादिषु सूर्य्यस्य भे षु वृष्टि र्भवेत्क्रमात् ॥ अथ पुनरन्य प्र- १६१

कारेण मेघगर्भज्ञानं वृष्टिज्ञानं च ॥ मूलर्क्षे भास्करे याते तदा रभ्य दशाह्नकम् ॥ ३२० ॥
विद्युद आदिना गर्भो यत्र तत्र दिने भवेत् ॥ क्रमादार्द्रादिनक्षत्रे भानो वृष्टिः प्रजा-
यते ॥ ३२१ ॥ अथ प्रकारांतरेण ॥ मूलभाद्रराशी यावद्भेषु चैकादशस्वपि ॥ पौषमास
दिनर्क्षेषु गर्भस्त्व आदिना भवेत् ॥ ३२२ ॥ तत आर्द्रादिके सूर्ये क्रमा वृष्टिः प्रजायते ॥
पुनः प्रकारांतरम् ॥ अश्विन्यादिषु धिष्ण्येषु चैत्रे दश सु चेद्भवेत् ॥ अभ्रादिकं तथा गर्भः
आर्द्रादौ वृष्टिदः क्रमात् ॥ ३२३ ॥ मेषाऽर्क दिनमारभ्य ज्ञेयमेव मथापि वा ॥ अथ सामा-
न्यतो वृष्टिज्ञानम् ॥ यदि साभ्रं नभो मध्यं सुभिक्षं चाग्रिमेऽब्दके ॥ यद्यभ्रं दृश्यते व्यो-
म्नि चैकादश्यां तु कार्त्तिके ॥ ३२४ ॥ आषाढे मासि वृष्टिश्च तदा भवति भूयसी ॥ मा-
र्गाष्टम्यां यदा विद्यु द्दर्शनं श्रावणे तदा ॥ ३२५ ॥ पौषे कृष्णे दशम्यां चेद्वृष्टिर्भाद्रपदे
तथा ॥ सप्तम्यां माघ शुक्लस्य भवेदभ्रादिकं यदा ॥ ३२६ ॥ ज्येष्ठे मूले न चेद्वृष्टिः सुवृ-
ष्टि र्वहुला मता ॥ अथ ज्येष्ठ शुक्लाष्टम्यादि दिन चतुष्टये वायुफलम् ॥ ज्येष्ठेऽष्टम्यान्तु वृष्टि-

शुक्लायाश्च तुर्यदिवसे शुच ॥ श्रावणादौ क्रमाद्वृष्टिर्मैन्द्रे प्रास्तैः समीरणैः ॥ ३२७ ॥
अथ स्वात्यादिषु वृष्टौ श्रावणादावनावृष्टिः ॥ ज्येष्ठे चतुर्षु धिष्ण्येषु स्वातीमारभ्य वर्षणे ॥ क्रमा-
च्छ्रावणके वृष्टिर्न भवेत्तत्र तत्र च ॥ ३२८ ॥ अथाषाढशुक्लद्वितीयादिदिनचतुष्टयं फलम् ॥
आषाढे मासि शुक्लायां द्वितीयायां प्रवर्षणम् ॥ तृतीयायां पुरोवायुर्मेघः पूर्वस्य दिग्गतः
॥ ३२९ ॥ चतुर्थ्यां जलदः प्राच्यां दक्षिणे यदि मारुतः ॥ पंचम्यां पूर्वदिङ्मेघस्तदा श्रा-
वणमासतः ॥ ३३० ॥ ध्रुवं वृष्टिः शुभा ज्ञेया क्रमान्मासचतुष्टये ॥ चतुर्ष्वेषु दिनेष्वेव
यदि वृष्टिर्निरंतरम् ॥ ३३१ ॥ तदा स्यादीतिवृष्टिश्च धान्यनाशः प्रजायते ॥ साम्य-
मन्यं भवेत्तायौ द्वा हे दुर्भिक्षमीरितम् ॥ ३३२ ॥ तृतीया पंचमी घस्रे यद्युदक्पूर्वजो भवे-
त् ॥ तदा स्याद्धान्यनिष्पत्तिर्बहुला वृष्टिरुत्तमा ॥ ३३३ ॥ अथ श्रावणशुक्लपंचमीफल-
म् ॥ पञ्चम्यां श्रावणे शुक्ले द्वादृ वृष्टिर्भवेद्यदि ॥ साम्यमत्यमभावे तु स्याद्दुर्भिक्षं जायते
तदा ॥ ३३४ ॥ अथ सूर्यस्य रेवत्यादिभेषु वृष्टिफलम् ॥ रेवत्यां वर्षणे लोकं न भक्ष्येद्धान्यम

चाश्विने ॥ भरण्यां तद्वयं वृष्टिः कृत्तिकायां न चेद्भवेत् ॥ ३३५ ॥ रोहिण्यां गर्ज्जने वृष्टि
र्द्वयं मास द्वयोत्तरम् ॥ मृगशीर्षे यदा न स्याद्वृष्टिर्भूयो बहूदका ॥ ३३६ ॥ अथ संक्रांति दिने
वृष्टिफलम् ॥ संक्रांति दिवसे वृष्टौ मार्ग कार्तिकयोर्द्वयोः ॥ वर्षन्त्यन्मध्यमं चेयं पौषे
माघेऽति चोत्तमम् ॥ ३३७ ॥ सुभिक्षं च शुभा वृष्टिः फाल्गुनादि चतुष्टये ॥ रोगस्त्वाषा
ढमासे स्याच्छ्रावणे वृष्टिरुत्तमा ॥ ३३८ ॥ भाद्रे रोगस्तदा सौख्यमाश्विने वर्षणे भवे
त् ॥ ३३९ ॥ अथ काक नीड फलम् ॥ सद्वृक्षे काक नीडे स्यात्प्रतीच्यां वृष्टिरुत्तमा ॥ उद
ग्याम्ये भवेन्मध्ये नैरृता वांति मास्तुता ॥ ३४० ॥ अल्पवृष्टिरधो ज्ञेया सदन्यं स्या
च्छिवेऽनिले ॥ मध्ये मध्याऽथ वृक्षाग्रे बहुला वृष्टिरीरिता ॥ ३४१ ॥ ईति भीतिर्महा
घोरा नीडे सर्व दिशां गते ॥ नीडे संकटके भीतिरसानां जायते ध्रुवम् ॥ ३४२ ॥ प्रागुद
क्पश्चिमाद्रिस्थे सुवृष्टिः केश्चिदीरिता ॥ अथ टिट्टिभांड फलम् ॥ स्थिते मूच्च प्रदेशे घुटि
ट्टिभांडेषु चोत्तमा ॥ वृष्टिः संजायते मासैरधो वक्रांडसंख्यकैः ॥ ३४३ ॥ निम्नप्रदेशसंस्थे

टी.वि. स्तु स्वल्पा वृष्टिः प्रजायते ॥ वृष्टि र्नैव भवेन्मासे श्वार्द्ध वक्रांड संख्यकैः ॥ ३४४ ॥

र.टी. अथ रोहिणी चक्रम् ॥ द्वादशारं लिखेच्चक्रं मेष संक्रांति भादितः ॥ चतुर्दिक्षु समुद्राश्च-

चतुःकोणे सु पर्वताः ॥ ३४५ ॥ समुद्र पार्श्व-

यो र्द्वौ तट स्तच्छै लयो स्तया ॥ मध्येऽष्टौ

संध्ययोः स्तत्र साभिजिद्भ गणं न्यसेत् ॥

३४६ ॥ द्वयं द्वयं समुद्रेषु तथैकैकं तटादिषु ॥ रो-

हिणी संस्थिता यत्र ज्ञेयं वृष्टि फलं तथा

॥ ३४७ ॥ तटेषु शोभना वृष्टि र्महा वृष्टि

स्तु सागरे ॥ अल्पा वृष्टि र्गिरौ देशे खंडे वृष्टि

स्तु संधिषु ॥ ३४८ ॥ अथ सप्त नाडी चक्रम्

| पर्वत | तट | संधि | समुद्र | संधि | तट | तट | पर्वत | प |
|---|---|---|---|---|---|---|---|---|
| प | ५ | ४ | ३ | २।१ | २८ | २७ | २६ | प |
| त | ६ | | | | | | २५ | त |
| सं | ७ | | | | | | २४ | सं |
| सं | ८।९ | | | | | | २२।२३ | सं |
| सं | १० | | | | | | २१ | सं |
| त | ११ | | | | | | २० | त |
| प | १२ | १३ | १४ | १५।१६ | १७ | १८ | १९ | प |

कृत्तिकादि लिखेच्चक्रं साभिजित्सप्त नाडिकम् ॥ चंडा वायु स्तथा वन्हिः सौम्यानी राज-

ता स्मृता ॥ ३४९ ॥ नाडीनां सप्त नामानि ज्ञेयान्येतानि पंडितैः ॥ क्रमान्मंदार्कभौमे
ज्य शुक्र ज्ञाब्जास्तदीश्वराः ॥ ३५० ॥ अथैतदेव स्पष्टयति ॥ चंडाख्या भरणी हूहू
विशाखा द्वितयं शनेः ॥ ज्येष्ठाश्वि रोहिणी स्वाती वायु
नाडी रवेः स्मृता ॥ ३५१ ॥ चित्रा मूलं मृगांत्यं च दहना-
ख्या कुजस्य च ॥ पूर्वाषाढा करो भार्द्रा सौम्या नाडी बृह-
स्पतेः ॥ ३५२ ॥ पूभोषाच पुनर्धिष्ण्यं उफानीरा भृगोः स्मृ-
ता ॥ पूफा शताभिजित्पुष्यं जलानाडी बुधस्य सा ॥
॥ ३५३ ॥ श्रवद्वयं मघाश्लेषा इंदोरमृतनाडिका ॥ अ-
थैतासु ग्रहसंस्थितेः फलम् ॥ ग्रहा यद्येकनाडीस्थाः सौम्याः

| अथ सप्तनाडीचक्रम् | | | | | | |
|---|---|---|---|---|---|---|
| चंडा | वाता | वन्हि | सौ· | नीरा | जलं | अमृता |
| कृ | रो | मृ | आ | पु | पु | श्ले |
| वि | स्वा | चि | ह | उ | पू | म |
| अ | ज्ये | मू | पू | उ | अभि | श्र |
| भ | अ | रे | उ | पू | श | ध |
| श | सू | मं | बृ | शु | बु | चं |

पापा यथा तथा ॥ तेभ्यो नाडीफलं वाच्यं सदसद्धा विचक्षणैः ॥ ३५४ ॥ चंडानाड्यां महा-
वातान् वातनाड्यां तु वानिलम् ॥ वन्हिनाड्यां स्थितापं सौम्यनाड्यां महाभ्रकं ॥ ३९६

॥ ३५५ ॥ नीरनाड्यां पयोवृष्टिं जलनाड्यां च वर्षणम् ॥ कुर्वन्त्यमृतनाड्यां च महा-
वृष्टिं नभश्चराः ॥ ३५६ ॥ एकोऽपि निजनाडीस्थो दत्ते तत्फलं ग्रहः ॥ कुजस्तु सर्वना-
डीषु स्थितो नाडीसमुद्भवम् ॥ ३५७ ॥ आर्द्राघर्क्षे गते सूर्ये नाडीवेधफलमुच्यते ॥ य-
द्यनेके च नाडीस्थाः पापाः सौम्याश्च खेचराः ॥ ३५८ ॥ मिश्राश्चंद्रसमायुक्तास्तद्दिने
वृष्टिरुत्तमा ॥ तोयराशिगता मिश्रास्तावद्वृष्टिं प्रकुर्वते ॥ ३५९ ॥ यावत्तोयांशगश्चंद्रः
केवलः स्वल्पवृष्टिदः ॥ अमिश्रैः खेचरैः सौम्यपापैर्विद्धो यदा शशी ॥ ३६० ॥ पानी
यं च तदा तुच्छं धान्यादीनां च नाशनम् ॥ यस्य खेटस्य नाडीस्थो विधुस्तेन ग्रहेण च
॥ ३६१ ॥ युक्तश्चेद्वृष्टिदो ज्ञेयो यदि क्षीणतरो न हि ॥ चंद्रः पीयूषनाडीस्थः मिश्रैः
खेटैश्च संयुतः ॥ ३६२ ॥ त्रिचतुःपंचसप्ताहं शुभवृष्टिप्रदो मतः ॥ जलनाडीस्थिते
चंद्रे मिश्रखेचरसंयुते ॥ दिनार्द्धमल्पवृष्टिः पश्चाज्जायते शुभा ॥ नीरना-
ड्यां गते चंद्रे मिश्रैः खेटैश्च संयुते ॥ ३६३ ॥ पादोनं तद्दिने वृष्टिर्बहुतोया भवेद्ध्रुवम् ॥

नीरराव्ये जलपीयूषेनाडीस्थाः खेचराः क्रमात्॥ ३६४॥ धृत्य १९ के १२ रस ६ संख्या
कानुवासरान्वक्तु वृष्टिदाः ॥ सौम्या नाडी स्थिताः सर्वेत्र्यहं वृष्टि प्रदाः खगाः ॥
॥ ३६५ ॥ चंद्र वाद्धग्नि नाडीस्थाः महावाता तप प्रदाः ॥ योगे शुभाधिके नाडी नि
र्ज्जला सजल प्रदाः॥ ३६६॥ योगे क्रूराधिके ज्ञेया सजलानिर्ज्जला बुधैः ॥ सौम्य नाड्यां
स्थिता पापा स्तना वृष्टि करा मताः॥ ३६७ ॥ शुभा स्तोयांशकाश्चेत्स्यु स्तत्ल्प वृष्टि प्र-
दास्तदा ॥ एक नाडी स्थिता भौमजीव चंद्र मसौ यदा॥ ३६८॥ वारिपूर्णा भवेत्पृथ्वी ब-
हु वृष्ट्या तदाखिला ॥ भृगु सौम्यौ यदैकत्र स्यातां जीवान्वितौ तदा॥ ३६९॥ वृष्टि-
स्याद्बहुला कस्माच्चंद्र योगे विशेषतः ॥ भृगु चंद्र मसौ पापैः खेचरैर्य्यदि संयुतौ ॥
॥ ३७० ॥ तदा स्वल्पोदका वृष्टिः जलयोगे महत्यपि ॥ इतिसप्तनाडीफलम् ॥ अथ
शुक्र स्थिति वशाद्गुरु योग वशाच्च वृष्टि ज्ञानम्॥ मघादि पंच धिष्ण्यस्थः शुक्रः प्रागुदितोऽनि-
शम् ॥ वृष्टि कृत्पश्चिमा शास्थः स्वात्यादि त्रितये स्थितः॥ ३७१॥ वैपरीत्य मितो-

जातो भृगुः कुर्य्याद्दवर्षणम् ॥ कुर्य्यातां बहुलां वृष्टिं बुध शुक्रौ च संयुतौ॥ ३७२॥
समुद्रं शोषितुं प्रक्त स्तयोरंतर्गतो रविः ॥ शुक्रात्सप्तम गश्चंद्रो वृष्टि दस्स्याच्छु भेक्षितः
॥ ३७३ ॥ मंदाद्वि घून कोणस्थ श्चंद्र मा वृष्टि कृत्तदा ॥ ग्रहाणा मुदये चास्ते राश्य
न्तर्गते ऽयने॥३७४ ॥ संयोगे वापि पक्षांते प्रायो वृष्टिः प्रजायते ॥ उदयास्तमनं शु-
क्रो बुधस्य वृष्टि कारकः॥३७५॥ चलत्यंगारके वृष्टि स्त्रिधा वृष्टिः शनैश्चरे ॥ वारि
पूर्णां महीं कृत्वा पश्चात्संचलते गुरुः॥ ३७६ ॥ शुक्रे चास्त मिते मंदे त्रिविधेः विप्रजा-
यते ॥ भौमार्क्कौ एक राशौ चेदन्योन्यं सम सप्तगौ॥३७७ ॥ अथार्द्रादि रवि नक्षत्र प्रवेशे
स्त्री पुं योगादौ वृष्टि ज्ञानम् ॥ स्त्री संज्ञानि दशार्द्रा तो भानि प्रोक्तानि कोविदैः ॥ विशा-
खादि त्रयं क्लीवं पुंसं ज्ञानीत राणि च॥ ३७८ ॥ रवेर्धिष्ण्य प्रवे शस्य काले चंद्रार्कयोः
भे ॥ धिष्ण्ये च या दृष्टो स्यातां विज्ञेयं तद्वशात्फलम्॥ ३७९॥ स्त्री पुंसोस्तु महा वृष्टि
रल्पा स्त्री क्ली वयोः क्वचित् ॥ अभ्र छाया स्त्रियोः पुंसोः क्लीवयोर्वा न किंचन ॥

सं.शि ॥ ३८० ॥ तोयवार विलग्ने च वृष्टियोगे यदा रवेः ॥ नक्षत्रं च प्रवेशः स्यात्तदा वृ-
३७० ष्टिस्तु शोभना ॥ ३८१ ॥ निशायामर्द्धरात्रे वा रवेर्ऋक्ष प्रवेशने ॥ बहुतोया सुवृ-
ष्टिः स्यादन्यथा नैव जायते ॥ ३८२ ॥ अथ सूर्य्यर्क्षे चंद्रर्क्षतो वृष्टिज्ञानम् ॥ आर्द्रादि पंचभं
पूभारेवत्यादि चतुष्टयम् ॥ पूर्वाषाढा चतुःकं च चंद्रर्क्षाणि चतुर्दश ॥ ३८३ ॥ शेषा-
णि रविधिष्ण्यानि विज्ञेयानि मनीषिभिः ॥ सूर्य्ये चंद्रर्क्षगे वृष्टिश्चंद्रे सूर्य्यर्क्षगे स-
ति ॥ ३८४ ॥ पूफादि पंचके सूर्य्ये चंद्रे चंद्रर्क्षगेऽपि च ॥ उभौ चंद्रर्क्षगौ स्यातां स्वल्पा
वृष्टिस्तदा भवेत् ॥ ३८५ ॥ तावेव यदि सूर्य्यर्क्षे तदा वृष्टिर्न जायते ॥ अथाढकप्रमाणम्
युग्मा ३ ज १ गो २ मत्स्य १२ गतेषु शांके भानुर्य्यदा कर्क्कटके प्रयाति तदा शताढं
१०० हरि ५ कार्म्मुके ९ ऽर्द्धं ५० तुले ७ च कन्या ६ मृग १० योरशीतिः ८० ॥ ॥
कुलीर ४ कुंभालि ११।८ गते यदा स्यात्षड्विंशकाढं २६ भुवि वारिपातः ॥ ३८६ ॥ अर्द्धं
पर्वत भागेषु तदर्द्धं मारुते गतम् ॥ तदर्द्धं याति मेदिन्यां वाराहेण च भाषितम् ॥ ३७०

शत योजन मुत्तुंगं सहस्रं विस्तृतं ततः ॥ आढकस्य प्रमाणोऽयं वाराहेण च भाषितम्
॥ ३८८॥ अथ रविनक्षत्र वाहनम् ॥ दिनेशभात्सूर्यभं वहि घस्रं विगण्य सप्तोद्धृतमर्क
वाहनम् ॥ भवेत्तुरंगः शशकश्च मूकः श्वा चान को गोर्म्महिषश्च दर्दुरः ॥ ३८९ ॥
अथ वर्षाकाले सद्योवृष्टि लक्षणानि ॥ नभः काकांड भंगोद्दकू निभं तित्तिरसन्निभम् ॥ सां-
ध्यो जला नामेघा स्युर्गिरि कज्जल सन्निभाः ॥ ३९०॥ जलजंतु समाकारा मूलाभ्राः
सव्यगा अपि ॥ गिरयोऽञ्जन संकाशा सवाष्पाश्चिरविनर्त्तनम् ॥ ३९१॥ शुभ्रनेत्र
निभः क्षौद्रसन्निभः सलिलप्लुतः ॥ सन्निधौ परिवेषाढ्यश्चंद्रमाशीघ्रवृष्टिकृत् ॥
॥ ३९२॥ विकृतिर्ज्ञर्वरीवाला सेतुबंधोघमाऽप्यथि ॥ जले मीनोत्प्लवो रावो भेकानां
नीरसं जलम् ॥ ३९३॥ व्यालानां मैथुनं वृक्षारोहः पशवस्तथा ॥ मक्षिकानल्पतां
याति सांडास्या स्तुपि पीलिकाः ॥ ३९४॥ उत्सृष्टाश्च गृहाद्वा वो नेच्छंति गमनं बहिः ॥
खनंति भूतलं श्वानो मार्ज्जाराः पशवः खुरैः ॥ ३९५॥ सैराघ्नन्त्यं कुरश्चोर्द्ध्व पार टारो

हणां नरी ॥ त्वणाग्रे वृश्चिका रोहो गवा मूर्द्ध निरीक्षणम् ॥ ३९६ ॥ पक्षिणां धूलिभिः
स्नानं प्रदोषे मेघ गर्ज्जनम् ॥ अग्नि दण्डा कृति र्मेघः शीतः प्राची भवो मरुत् ॥ ३९७ ॥
मत्य शिंद्र धनुः संध्या रागोऽधो मेघ गर्ज्जनम् ॥ प्रागुदक् सैव दिक्पालार्क्का सौ
दामिनी तथा ॥ ३९८ ॥ मध्ये नीरात पश्चान्हि नरा निद्रालवो भ्रमाम् ॥ विज्ञेया ल-
क्षणै रेभि स्सद्यो वृष्टि र्घना गमे ॥ ३९९ ॥ नो माघे हिम वर्षणं न मरुत श्चंडा स्तथा फा-
ल्गुने चैत्रे वृष्टि विवर्ज्जितं तु गगनं मेघेन पूर्णो रविः ॥ वैशाखे न घनो पलस्य पत-
नं ज्येष्ठे न चण्डो रवि र्वृष्टि स्स्वल्प तरा सदैव कथिता वर्षासु नित्यं बुधैः ॥ ४०० ॥
इति वृष्टि काण्डः ॥ अथो पश्रुति शकुनाः ॥ गणाधीशं प्रपूज्यादौ कार्य्यं तस्मै निवेद्य च ॥
साक्षतं स फलं तोयं पात्र मादाय संव्रजेत् ॥ ४०१ ॥ उपश्रुते श्श्रवा याय चाण्डालादि
गृहे बहिः ॥ निशि सुप्त जने तत्र स्थित्वा श्रुत्वा क्षतान् क्षिपेत् ॥ ४०२ ॥ अथोपश्रुति
मंत्रः ॥ ॐ उपश्रुति र्महालक्ष्मी श्चाण्डाल गृह वासिनी ॥ यन्मया चिंतितं कार्य्यं सत्यं

वद सुरेश्वरि ॥ ४०३॥ ब्राह्मणानां शतं दत्वा कपिलानां शतत्रयम् ॥ तेन पापेन लिप्ता-
सि यदि सत्यं न भाषसे॥ ४०४ ॥ पंचानां पांडुपु[illegible]णां ज्येष्ठो भ्राता युधिष्ठिरः ॥ ते-
न सत्येन धर्मेन सत्यं ब्रूहि नमोऽस्तुते॥ ४०५॥ भवत्या विदितं सर्वं सर्व कार्यं वि-
शेषतः ॥ इत्युक्ता शृणुयाद्वाणीं श्रद्धा वाक्य त्रया न्विताम्॥ ४०६॥ प्रक्षिप्य चज
लं तत्र समागच्छेत्स्वमालयम् ॥ तद्वाक्यस्यानुसारेण फलं ज्ञेयं यथार्थतः॥४०७
॥ वार विशेषे नेप श्रुति निवासः ॥ चांडाली भवने सूर्ये चन्द्रे नापित मन्दिरे ॥ रजक्या
मन्दिरे भौमे बौधने वैश्य मन्दिरे॥ ४०८॥ ब्राह्मणी मन्दिरे जीवे भार्गवे पण्य यो-
षितः ॥ शन्या द्वारिशा नौ याया श्रोतुं चोप श्रुतिं शुभाम्॥ ४०९॥ अथ रघुवंश
दि शकुनाः ॥ रघुवंशस्य दुर्गायाः पाठस्य निगमस्य च ॥ पूजितं पुस्तकं पुष्पै रक्षि-
तैश्च फलादिभिः ॥ ४१०॥ शनौ संस्थाप्य संपूज्य प्रातरेवं विलोकयेत् ॥ कुमा-
र्युक्त प्रमाणेन निःकास्य श्लोक मुत्तमम् ॥ ४११॥ विज्ञेया शकुना स्तस्मा द्यथार्थ

वचनाद्धिते ॥ अबिसर्गान्त पूर्वार्द्ध स्तवर्गे तत्पंचमः॥ स्तुति लिंडुर्ज्जित श्लोक


प्रशाकुने च शुभावहः॥४१२॥ अथांगविद्या प्रश्नः॥ शिरो मुखं कर्ण नेत्रं स्पृष्ट्वा पृच्छ
ति चेज्जनः॥ सुवर्ण धन धान्यानां लाभ स्तस्य न संशयः॥ ४१३॥ स्कंधग्रीवा कण्ठ
हस्त स्पर्शे लाभो हि दुःखतः॥ कुक्षिनाभि समालंभे भक्ष्य पानादि सिध्यति ॥
॥४१४॥ जंघा लिंग कटि स्पर्शे कन्या लाभ स्सुतोद्भवः॥ जानु गुल्फ पद स्पर्शे महान्
क्लेशः प्रजायते॥४१५॥ केश स्पर्शे भवेन्मृत्युः फलादि स्पर्शने शुभम्॥ तृणांगार
क संस्पर्शे कार्य्य सिद्धिर्न्न जायते॥४१६॥ काष्ठपंकपट स्पर्शे गृह पीडा मनोभयम्
॥ भृगारामान्न भांडादि स्पर्शे सिद्धिः प्रजायते॥ ४१७॥ शून्यालये स्मशाने वा शु
ष्क काष्ठे क्षते नरो॥ गुल्म वल्काधम स्थाने प्रश्ने क्लेशः प्रजायते॥४१८॥ देवगेहे-
नदी तीरे दिव्य स्थाने शुभं वदेत्॥ शुभदिक्षु स्थिते सिद्धि विदिक्षु न प्रजायते॥ ४१९॥
दत्तंगविद्या॥ अथ सर्व प्रश्न निर्णयः॥ प्रश्नाह काले फल नाम वर्णा न्नक्षत्र निघ्नान्तिथि वार

ऋक्षैः ॥ योगैश्च युक्ता नवनीश २६ भक्तानुरूपे फलं प्राह पृथा तनूजः ॥ ४२६॥ एकावशे-
षे द्रविणस्य धान्यराशेस्तथा स्यात्सदनस्य लाभः ॥ नेत्रावशेषे सुजनस्य संगो भ्रातु-
स्सुतस्यैव विनाशनंच ॥ ४२७॥ त्रिशेषके नेत्रशिरोदरेषु रोगोद्भवो वस्त्रविनाशनंच
॥ वेदावशेषे नृपदर्शनं स्यादश्वस्य लाभो नृपतेः सकाशात् ॥ ४२८ ॥ शरावशेषे
निजवस्तुहानिः प्रियावियोगस्सुतबंधुनाशः॥ रसावशेषे रथवाजिलाभो रिपोर्भयं
चौरभयं तथा स्यात् ॥ ४२९ ॥ स्वरावशेषे रिपुभिश्च युद्धे जयो भवेद्दासजनस्य ला-
भः ॥ वस्त्रस्य लाभः क्रयतश्च लाभो मातंगशेषे च कलत्रलाभः ॥ ४३०॥ नवावशेषे-
मठसद्म लाभः स्वसद्म हानिः पुरराजपूजा ॥ दशावशेषे नृपतेः सकाशाद्दण्डश्च वा-
च्यः स्वसुतस्य नाशः ॥ ४३१॥ भवावशेषे कृषितोऽन्नलाभो लाभः प्रियायाः पृथिवीशलाभः
॥ सूर्यावशेषे गजरोहणं स्याद्भृत्यस्य लाभस्तु विदेशगस्य ॥ ४३२ ॥ विश्वावशेषे बहु-
दूरदेशे यानं तथा क्लेशयुतं च शास्वत ॥ इंद्रावशेषे बहुराज्यपूज्यस्तथा धनाप्तिः स्वजनेन

सं०वि

१७६

संगः॥४३३॥ पंचेन्दु शेषे त्वन्नस्य लाभो धनस्य लाभश्च गृहस्य लाभः॥ भूपा-
वशेषे वपनेन मैत्रं लाभस्तु तस्मात्स्वजने प्रतिष्ठा॥४३४॥ पृथ्वा तनूजस्य मतं विशेषा
त्स्व पद्य के स्सम्य गदः प्रतिष्ठम्॥ विचार्य्यवाच्यं गणकेन साधुना साधु नूनं सुतरां च श-
स्तम्॥४३५॥ अथ नक्षत्र प्रश्नः॥ मघादि स्वार्य्यमांतं च समीपे वस्तु दृश्यते॥ हस्तादि-
वसु पर्य्यंत मन्य हस्ते च दृश्यते॥४३६॥ शततारादि मांतं तु स्वगृहे वस्तु दृश्यते॥ अश्व्या
दि ब्राह्म्य पर्य्यन्त मदृष्टं दूरगं तथा॥४३७॥ तिथि वारं च नक्षत्रं प्रहरेण समन्वितम्॥ दिक्
संख्यया हृतं चैव सप्तभिर्विभजेत्युनः॥४३८॥ एकेन भूतले द्रव्यं द्वयं चेद्भांड संस्थितम्॥
तृतीये जल मध्यस्थ मन्तरिक्षे चतुर्थके॥४३९॥ तुषस्थं पंचमे तत्स्यात् षष्ठे गोमय
मध्यगम्॥ सप्तमे भस्म मध्यस्थ मित्येतन्नष्टलक्षणम्॥४४०॥ अथ गुणप्रश्नः॥ ति-
थिप्रहर सयुक्तं तारका वार मिश्रितम्॥ अग्निभिस्तु हरेद्भागं शेषं सत्त्वं रजस्तमः॥४४१॥
फलं॥ सिद्धिस्तात्कालिकी सत्वे रजसा तु विलंबतः॥ तमसा निःफलं कार्य्यं ज्ञातव्यं प्रश्न

को विदैः ॥ ४४२ ॥ अथागतुकप्रश्नः। तिथि प्रहर संयुक्ता तारका वार मिश्रिता ॥ सप्तभि
स्तु हरेद्भागं शेषं तु फलमादिशेत् ॥ ४४३ ॥ फलं ॥ एक शेषे तथा स्थाने द्वितीये प-
थि वर्तते ॥ तृतीये ऽर्द्ध मार्गे तु चतुर्थे ग्राम मादिशेत् ॥ ४४४ ॥ पंचमे पुनरावृत्तिः
षष्ठे व्याधि युतं वदेत् ॥ शून्यं ज्ञेयं सप्तमे वै चैतत्प्रश्नस्य लक्षणम् ॥ ४४५ ॥ अथ
गर्भिणी प्रश्नमः॥ तिथि भयामवधू शुभ साक्षरं मुनियुतं त्रिगुणं मुनि भाजितम् ॥ स-
कल शास्त्र विचार विचक्षणैर्विषम पुत्र समे खलु कन्यका ॥ ४४६ ॥ अथ नष्ट वस्तु ला
भप्रश्नः॥ धुमरिगा भाल्व भेषु वने स्थितं तदनु षट् सु चकर्ण पथे स्थितम् ॥ अचल-
७ भेषु गतं गृहमागतं द्वय गतं गत मेव मृतं त्रिषु ॥ ४४७ ॥ अथ सामुद्रिक परीक्षा ॥ वि-
शाल भाल वक्त्राक्षि वक्षो बाहु करांघ्रिकम् ॥ सुवृत्त मस्तकं नाभि गंभीरा नासिको-
न्नता ॥ ४४८ ॥ स्निग्धदंतत्वचः केशाः श्यामाः स्निग्धाश्च कुंचिताः ॥ नेत्र प्रांते ऽरुणं
स्निग्धं विशालं कृष्ण तारकम् ॥ ४४९ ॥ ह्रस्वा वर्ताधि पूर्णा वा स्निग्ध गंभीर निःस्वनः ॥

सफेश सूत्रकी धन्यो नरो नीलपल पार्ष्णिकः ॥ ४५० ॥ नरो मातृ सुखो धन्यो नारी पितृ सुखोन्नं
या ॥ रक्त मोष्ठ मुखं पाणी पाद युग्म तलं तथा ॥ ४५१ ॥ औदार्य्य धैर्य्य गांभीर्य्य महारंभ
यशः प्रिय: ॥ प्रसन्न वदनो वंश्या भिमानी प्रिय सत्यवाक् ॥ ४५२ ॥ नीतिमान् गुरु दाक्ष
स्यः शुचि र्हीनो ऽथ पाप भीः ॥ इत्यादि गुण सपन्नो नरो भवति भाग्यवान् ॥ ४५३ ॥ रेखा
मातर्ज्जनी याता तिर्य्यका पुण्य संज्ञका ॥ तर्ज्जन्यं गुष्ठयो र्मध्ये तिर्य्यक्ते श्वर्य्य संज्ञका
॥ ४५४ ॥ मणिबंधात ऐश्वर्य्य रेखा मूलं द्विधाति या ॥ सा रेखा पितृवंशाख्या बुद्धिर्ना गेह
सौख्यदा ॥ ४५५ ॥ समायोग वती चैया पितृ वंशादि वर्द्धिनी ॥ आयुः कनिष्ठयो र्मध्ये रेखा
क्रांत कला क्रिया ॥ ४५६ ॥ करभांत्ये गता रेखा सानु मातुल वर्णिका ॥ सूक्ष्मा माब्ध्यसुः स्थू
ला मातुल स्यैव मन्यतः ॥ अंगुष्ठ मूल रेखाभि र्विज्ञेया सन्तति र्बुधैः ॥ सूक्ष्माभिः कन्यका पु
त्र स्थूला भिश्च तथाविधा ॥ ४५७ ॥ अछिन्नाभि र्न रेखाभि स्सन्तति र्दीर्घजीविनी ॥ रेखाया
नामिका मूलं यशः पुण्याभि धातु सा ॥ ४५८ ॥ धन रेखातु सा याता मणि बंधात्तु मध्य-

ना ॥ स्यात्स्वेद रेखांकिता पूर्णा सोर्द्ध रेखा नु राज्यदा ॥ ४५९ ॥ गंभीरा स्तु दृढाः स्निग्धाः मृ-
भद्रा मनु पिंगलाः ॥ दक्षिणे तु करे पुंसां वामा स्त्रीणां तु वामके ॥ ४६० ॥ अगुष्ठ स्तज
वो यस्य स भवेद्राज्य भाग्नरः ॥ श्री वत्साम्बर या दर्शो ध्वज स्तंभ गिरि स्रजः ॥ ४६१ ॥
हस्ति च्छत्रां बुजः कुंभः श्रीवत्सः कुलि शांकुशम् ॥ भृंगारो व्यजनं वीणा जवो मत्स्या
दिकं तथा ॥ ४६२ ॥ कर पाद तले यस्य स भवेद्धरणी पतिः ॥ खल्वाटस्तु धनी विद्वान् वृ-
तुरस्रं हृतां गुलिः ॥ ४६३ ॥ धनाढ्यो व्ययवः प्रोक्त उदारो विरलां गुलिः ॥ तिलः पाद
तले हस्ते नाशगायां दृष्टि गोचरः ॥ ४६४ ॥ हृदि प्रजनने भाले धन भाग्य प्रदो नृणाम् ॥
रेखाः कर तले चेन्न्यु रुक्ताभ्यस्त्वधिकास्तथा ॥ ४६५ ॥ रुक्षा सूक्ष्माः सिताः छिन्नास्तदा स्या-
च्च दरिद्रता ॥ स्थूलं प्रजननं दीर्घ केशं वानेकधारकम् ॥ ४६६ ॥ यस्य चेत्स दरिद्रः स्या-
त् शुभ लक्षणवानपि ॥ दरिद्रः कर युग्मेन कंडूयति शिरस्तु यः ॥ ४६७ ॥ अथ स्त्रीणां
विशेषः ॥ शुभानि यानि चिन्हानि पुंसां प्रोक्तानि सूरिभिः ॥ तान्येव योषितां योन्या विशेषः प्रो-

च्यते तुसः ॥ ४६८ ॥ नदद्भ्रूविकटं भालं विशालं प्रोन्नतं तथा ॥ पादांगुलि द्वयं चांत्यं ग-
मने न स्पृशेद्भुवम् ॥ ४६९ ॥ यस्यास्सा विधवा नारी वद्धा हारयितद्द्विधा ॥ दीर्घस्फिक्
हंति भर्त्तारं दीर्घभाला तु देवरम् ॥ ४७० ॥ तुष्टा दीर्घो दरी नारी श्वसुरं हंति निश्चितम्
स्वल्प गुह्या तथा मुष्का नितं वा पति घातिनी ॥ ४७१ ॥ कुलं दीर्घ गला हंति निःस्वा निह्न-
स्व नाशिका ॥ पृथुनाशा भवेच्चंडी दुःखिता कमठोदरी ॥ ४७२ ॥ हसिते गर्त्त गंडा या-
दुःशीला सा प्रकीर्त्तिता ॥ मिलद्भ्रूयुग लावर्त्तकेशा भालाल्प नाशिका ॥ ४७३ ॥ दीर्घ
रोमान्वितांगा वालं वोष्ठी विकरालिका ॥ इत्यादैर् श्शुभैश्चिन्हैर्युक्तां नारीं परित्यजेत् ॥
॥ ४७४ ॥ अथ स्त्रीणां शुभचिन्हानि ॥ विशाल लोचना तन्वी श्यामा मधुर भाषिणी ॥ स्थूल
लंब कुचा गौरी श्लक्ष्णा गात्रा मनो हरा ॥ ४७५ ॥ हंसे भग मना म्हीचंद्र वक्त्रा नितंविनी ॥
सुचरित्राल्प हारा च गूढगुल्फा कृशोदरी ॥ ४७६ ॥ लघु हस्तांघ्रिकाकं वुग्रीवा वृत्तोन्नत
स्तनी ॥ इत्यादि लक्षणोपेता सुभगा पुत्रिणी तुसा ॥ ४७७ ॥ अथ सामान्यत श्शुभलक्षणानि

अर्जितं वचनं चैत स्योन्नतं सुभगं वपुः ॥ पापभीरुमति श्चेत्किं चिन्है रन्यैश्च योषिताम् ॥ ४७८ ॥ अथापरचिन्हानिस्त्री पुंसोर सुभानि ॥ हस्त छेदी शिराणां भुविन खलिखनं पादयो रल्प पूजा ॥ दंता नामल्पशौच्यंच सन मलिनता रुक्षता मूर्द्धजानाम्गृहे सन्ध्ये चापि निद्रा विवसन शयनं ग्रास हासावलोकं स्वांगे पीठे च वाद्यं वित रति हरते के शव स्यापि लक्ष्मीम् ॥ ४७९ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरोमणौ समाप्तेयं त्रयोविंशाति का प्रभा ॥ ४८० ॥ इति श्री संग्रह शिरोमणौ मिश्र कथनं नाम त्रयोविंशातिःप्रभा २३ अथ तिथयो विशुद्ध कर्म्मानुष्ठानफल सिद्ध्यर्थं तदंगत्वा निर्णीयंते ॥ अत्यंताप्राप्त प्रापणं विधिः ॥ तदुक्तं मीमांसायां ॥ विधि रत्यं तम प्राप्तौ नियमं पाक्षि के सति ॥ तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ १ ॥ सच विधिर्वेद वाक्यं स्मृति पुराणादि वाक्यं च ॥ वेद वाक्य प्रामाण्यं सिद्धमेव ॥ तन्मूलत्वात्स्मृति पुराणादीना मपि प्रामाण्यम् ॥ २ ॥ तत्र गर्गः ॥ सविधि र्द्विविधः प्रवर्त को निवर्त कश्च ॥ प्रवर्तकस्तु ॥ दर्शे स्नात्वा पितृ

भ्यो यो दद्यात्कृसतिलोदकं ॥ अन्नंच विधिवद्दद्यात्संततिस्तेन वर्द्धते ॥ ३ ॥ निवर्त्तकस्तु ॥ आलायांच न गच्छेत श्राद्ध कालमपि क्रियम् ॥ अमावास्यामां नाधीयीतनाध्यापयेदिति ॥ ४ ॥ तिथिनक्षत्रवारादि साधनं पुण्यपापयोः ॥ प्रधानगुणभावेन नस्वातंत्र्येण ते स्वमाः ॥ ५ ॥ अतश्च तिथयो विध्यं गत्वेन निर्णेतव्याः ॥ तत्र कातिथयः ॥ प्रतिपदाद्याः षोडश एव तत्रा होरात्रेण सूर्य्य मंडलाच्चंद्रस्य प्रथम कलानिर्गमे शुक्ल प्रतिपद्भवति ॥ एवं द्वितीया हो रात्रेण द्वितीया कला निर्गमे द्वितीया भवति ॥ एवं तृतीयादयो द्रष्टव्याः ॥ एवं पंचदशेना होरात्रेण पंचदश्याः कलायाः निर्गमे सूर्य्याच्चन्द्रमसो रत्यंत दूरात्पूर्णिमा ॥ एवं अस्यां पूर्णिमायां संपूर्णमंडलस्येन्दोः षोडशेना होरात्रेण एक कलाया रवि मंडल प्रवेशे कृष्ण प्रतिपत् भवति ॥ एवं क्रमेण द्वितीयाद्याः ॥ एवंत्रिंशत्तमे ना हो रात्रेण पंचदश्याः कलायाः प्रवेश सूर्य्याचंद्रमसोरत्यंत सन्निकर्षादमावास्या भवति ॥ नन्वेवंति थीनां विध्यं गत्वे-

न विधि नैव सिद्धत्वात् तन्निर्णयस्याप्रयोजनम् ॥ सत्यं ॥ वृद्धि घटिकात्मक कालावधि-
न्नानां तिथीनां संपूर्णत्वेनानिर्णयत्वेऽपि यत्र तिथे र्वृद्धि ह्रासौ भवत स्तन्नैक स्यास्तिथे-
र्दिनद्वय व्यापित्वेन तत्तिथौ विहितं कर्म्म कुत्र कर्त्तव्य मिति संशये ॥ अवश्यं निर्णयः
कर्त्तव्यः ॥ सा तिथिस्त्रिधा ॥ खर्वो दर्पः हिंसा चेति खर्वः समातिथिः दर्पः वृद्धिः हिंसा-
क्षयः ॥ यदाह बौधायनः ॥ खर्वो दर्प स्तथा हिंसा त्रिविधं तिथि लक्षणं ॥ खर्वदर्पौ परौ
पूज्यौ हिंसा स्यात्पूर्व कालिकी ॥ तत्र तिथीनां वेधनिर्णयमाह ॥ सर्वास्तिथयः पक्ष द्वयेऽ-
पि सामान्येन पूर्वया परया च तिथ्या त्रिभिर्म्मुहूर्तैर्विद्धास्स्युः ॥ यदाह पैठीनसिः ॥ पक्ष-
द्वयेऽपि तिथयस्तिथिं पूर्वां मथोत्तराम् ॥ त्रिभिर्म्मुहूर्तैर्विध्यंति सामान्योऽयं वि-
धिः स्मृतः ॥ न त्वयं वेधतिथिस्सामान्य विषये न भवति ॥ तथा चस्कांदे ॥ नागो द्वाद-
श नाडीभिर्दिक् पंच दशभिस्तथा ॥ भूतोऽष्टादश नाडीभिर्दूषयत्युत्तरां तिथिम् ॥
सत्यम् ॥ अयं विशेष वेधजनर तिथि विषयः ॥ सामान्य वेधस्तु त्रिमुहूर्त एव पूर्वेति-

र्षिविषय: ॥ तदुक्तं कौर्म्मे ॥ चतुर्द्दशी पंचमी च तथा च दशमी तिथिः पूर्वान्तिथिं प्रू-
जयंति त्रिभिरेव मुहूर्त्तकैः ॥ अयंच त्रिमुहूर्त्तादि वेधः उदया दूर्द्ध पूर्वतिथ्या ग्रस्त
मस्तात्वाक परतिथ्या चेत्यव गम्यते ॥ कुतः वचन वलादेव ॥ देवलः ॥ उदयन्नेव स-
विताया तिथिं प्रति पद्यते ॥ सा तिथि स्सकला ज्ञेया दानाध्ययन कर्म्मसु ॥ साति
थि स्तद होरात्रं यत्रास्तं याति भास्करः ॥ उदिते दैवतं भानौ पैत्र्यं चास्तं गते रवौ ॥
त्रिमुहूर्त्तं महो यासा तिथि र्हव्य कव्ययो: ॥ अतः उदयात्त्रिमुहूर्त्त व्यापिन्यां दैवतं
कर्म्म ॥ अस्तमया त्त्रिमुहूर्त्त व्यापिन्यां पित्र कर्म्मकार्य्यम् एकभक्त व्रतादिषु भिन्नो वेध
स्य विचारः ॥ एकादशी व्रतादिषु च तिथयो: वृध्यं ह्रास्य दृष्ट्यापि निर्णयाः ॥ अथ तिथी
नां घटिकात्मक त्वात घटी निर्णीयते ॥ सूर्य्यसिद्धांते ॥ षड्भिः प्राणै र्विनाडी स्यात् तत्षष्ट्या भाग
उच्यते ॥ अस्यार्थः ॥ दश गुर्वक्षरोच्चारण कालः प्राणः ॥ कं कं कं कं कं कं कं कं कं कं
इति ॥ विनाडी कला तस्याः साधकः ॥ श्लोको यथा ॥ लोक क्षेमाया सीन्म त्स्य: कू-

मर्ः कोलः पुंसिं ह्रो ङ्सा कारो रामो रामः  कृष्णो बौद्धः कल्कीचेत ॥ एवं नानाकारं
नाना रूपं नानानामानं योगि ध्येयं देवानां देवं वंदेतं गोविंदम् ॥ षष्टि कलाभि
र्भागो घटी  अन्योःपिप्रकारः ग्रंथांतरे ॥ ताम्रस्य षड्भिःपलै र्भाजनम् ॥ त्रिंशद्गुल
विस्तार मुच्छ्रितं चतुरंगुलम् ॥ स्वर्ण माषेन कृत्वाच चतुरंगुल कंदिकां ॥ मध्यभागे
तथाविद्धं घटिकातु प्रजायते ॥ तद्रंध्रेणांभसा पात्रं यावत्कालेन पूर्य्यते ॥ सकालोध
टिकायास्तु पूर्वाचार्यैं रुदाहृतः ॥ एकभक्तादि व्रतं गत्वा देक भक्तादि व्रतानां स्व
रूपं कालश्च निरूप्यते ॥ तत्रतानि ॥ व्रतान्येक भक्तनक्ता याचितो पवास भेदेन चतु
र्द्धा भवंति ॥ तत्रैक भक्तं नाम दिनार्द्ध रूपं मध्यान्हा दुपरि नियमे न भोजनम् ॥ दि
नार्द्ध समये ऽ तीते भुज्य ते नियमे न यत् ॥ एक भक्त मिति प्रोक्तं मतस्तस्मा द्दिवै व
हि ॥ तत्रैक भक्तस्तु मध्यान्ह व्यापिन्या मेव ॥ तदाह बौधायनः ॥ उदयेतु यदा सम्य
ङ् नतस्या स्तमये तिथिः ॥ मध्यान्ह व्यापिनी ग्राह्या एक भक्त व्रतेतिथिरिति ॥

कालोऽत्रपंचविधः ॥ प्रातःसंगवमध्यान्हापरान्हसायान्हभेदात् ॥ यदाहव्यासः ॥ मुहू-



र्त्तत्रितयं प्रातस्तावानेवतु संगवः ॥ मध्यान्हस्त्रिमुहूर्त्तस्यादपरान्हस्ततः परः ॥
सायान्हस्त्रिमुहूर्त्तश्च सर्वकर्म्मसु गर्हितः ॥ एवं त्रयोदशी घटिकामारभ्याष्टाद-
शी घटिका यावत्तु षट्घटिकाधिको मध्यान्हः ॥ तत्राप्युत्तरस्मिन् घटिकात्रये
एकभक्तं कर्त्तव्यं ततः सूर्य्यास्तपर्य्यन्तं गौणः ॥ तत्रपूर्वेद्युर्व्याप्तिरपरेद्युर्व्याप्तिस्तद्भावोंऽशोव्या-
प्तिस्तत्रापि साम्यं वैषम्यमिति षट्पक्षाः ॥ तत्राद्ययोरसंदेह एव ॥ तृतीये तु पूर्वेन्हि
गौणमुख्यव्याप्तेः सत्वात्पूर्वेति ॥ माधवः ॥ युग्मवाक्यान्निर्णयः ॥ इतिहेमाद्रिः ॥ च-
तुर्थपक्षे परे वसंकल्पकाले सत्वादिति केचित् ॥ गौणकालव्याप्तेश्च तुर्थपक्षे स-
त्वात् ॥ वैषम्येणांशव्याप्तौ याधिका साग्राह्या साम्ये पूर्वा ॥ अयंचस्वतंत्रैकभक्तनिर्णयः
॥ अन्यांगे उपवासप्रतिनिधौ तदनुसारेण निर्णयः ॥ तथाचोक्तं ॥ कर्म्मणोयस्ययः
कालः तत्कालव्यापिनी तिथिः ॥ तयाकर्म्माणि कुर्वीत ह्रासवृद्धीन कारणम् ॥ अथ-

स्त ॥ योयस्य विहितः कालः कर्म्मणस्तदुपक्रमे ॥ विद्यमानो भवेदंगो नोज्झितः प्रक्रमसोतु इत्येकभक्तनिर्णयः ॥ अथ नक्तं तिथिनिर्णयः ॥ नक्तं नाम दिवाशनं वर्ज्जयित्वा रात्रौ भोक्तव्यमिति ॥ दिवा रात्रिव्यापिन्यामेव तिथौ कार्य्ये कोऽर्थः प्रदोषव्यापिन्यामेव ॥ तथाच स्कांदे ॥ दिवारात्रिव्रतं यच्च एकमेव तिथौ स्मृतम् ॥ ताभ्यामुभयव्यापिन्यां कुर्य्याद्देवं व्रतं व्रती ॥ अत्रोभयव्यापिन्यामेव ॥ तथाच कौर्म्मे ॥ प्रदोषव्यापिनी यत्र त्रिमुहूर्त्ता यदा भवेत् ॥ तदा नक्तं व्रतं कुर्य्यात्स्वाध्यायस्य निषेधवत् ॥ वत्सोक्ति रपि ॥ प्रदोषव्यापिनी ग्राह्या तिथिर्न्नक्तव्रते सदा ॥ प्रदोषस्तु ॥ उदयात्प्राकृतनी संध्या घटिकात्रयमिष्यते ॥ सायं संध्या त्रिघटिका अस्तादुपरि भास्वतः ॥ त्रिमुहूर्त्तं प्रदोषस्याद्भानावस्तं गते सति ॥ नक्तं तत्र तु कर्त्तव्यमिति शास्त्रस्य निश्चयः ॥ इति मदनरत्ने व्यासोक्तिः ॥ ननु षड्घटिकात्मके प्रदोषे आद्यं घटीत्रयं संध्याकालः ॥ तदितरस्य उत्तरस्मिन् घटिकात्रये नक्तं व्रतनिमित्तं भोजनं प्राप्तमिति ॥ तस्मिन्का-

ले भोजनाभावा इति निषिद्धम् ॥ तथाच स्मृतावपि ॥ चत्वारि मानि कर्म्माणि संध्यायां
परि वर्जयेत् ॥ आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥ संध्याकाले भोजन
निषेधे नैव निषादिकाल्म क संध्या श्रवणे संध्या नाम दिनरात्र्योः संधौ उपास्नादि
क्रियैव ज्ञेया ॥ संक्षिप्त खंड मार्त्तण्डो पलक्षितः कालस्तस्याल्पत्वात्क्रिया या
श्च वितत्वेन स्वल्पकाले कर्त्तुमशक्यत्वात् ॥ मुख्यार्थ वाधे सति संध्या शब्देन सं
धि प्रान्त्यः ॥ पूर्वापरौ वा क्रिया पर्य्याप्तिः कालो लक्ष्यते ॥ यतःस्मृतौ ॥ प्रातस्संध्याम
नक्षत्रा मध्याह्ने मध्यभास्करा ॥ ससूर्य्या पश्चिमा संध्या संध्यात्रय मितीरिता ॥ अ
तो मुख्यकाले संध्यावंदनं दैवाल्लकृतं तत्र गौण काले घटी त्रयात्मके कर्त्तव्यता
मभ्यनुज्ञापनार्थं संध्या गर्जिता दिना विहिता नध्ययनादि परस्य नक्त व्रत विहि
त भोजनं नक्षत्र दर्शने एव कर्त्तव्यम् ॥ तथाच भविष्ये ॥ मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति
मनीषिणः ॥ नक्षत्र दर्शनान्नक्त महं मन्ये गणाधिप ॥ नक्षत्र दर्शनादिति ल्यप्

लोपे पंचमी ॥ अतश्च नक्षत्र दर्शनं प्राप्य नक्तं विहित भोजनं विधेय मित्यर्थः ॥ सूर्य्ये-

तीर्णं दिनं तु यति परम् ॥ यदाह देवलः ॥ नक्षत्र दर्शनान्नक्तं गृह स्थानां स्मृतं बुधैः ॥
यते र्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते ॥ सौर नक्त विषयेतु ॥ आत्मनो द्विगुणां छा-
यां यदा संतिष्ठते रविः ॥ सौर नक्तं विजानीयान्नन नक्तं निशि भोजनम् ॥ इतिन्हसिं-
ह पुराणे अत स्सुमंतुक्तिरपि ॥ त्रि मुहूर्त्तं स्पृशे वान्हि निशि चैता वतीतिथिः ॥ तस्यां सौ-
रं भवेन्नक्तमहन्ये वतु भोजनम् ॥ तथाच स्कांदे ॥ नक्तं निशायां कुर्वीत गृहस्थो वि-
धि संयुतः ॥ यतिश्च विधवा चैव कुर्य्यात तत्स दिवा कर मिति ॥ पुत्रवांस्तु रात्रा वे-
व ॥ हरिनक्ते विशेषः ॥ कालादर्शे स्कांदे ॥ उदयस्था सदा पूज्या हरि नक्त व्रते तिथिः ॥ अ-
न्य नक्ते तु संक्रांत्या दौ रात्रा वेव ॥ निषेधस्य राम प्राप्त भोजन गोचरत्वेन बाध कत्वा-
त ॥ दिन द्वय व्याप्तौ परा ॥ उभयो र्व्या दिवा तिथ्योः प्रदोष व्यापिनी तिथिः ॥ तत्रोत्तरं तु
नक्तं स्यादुभयत्रापि सायतः ॥ इति कालादर्शे जावालि वाक्यम् ॥ अन्य पक्षे तु एक भक्त वन्निर्णय-

क ॥ अन्न विशेषो मदनरत्ने गारुडे ॥ हविष्य भोजनं स्नानं सत्यमाहार लाघवम् ॥ अग्नि का-
र्य्यं मधः शय्यानक्त भोजी सदा चरेत् ॥ अग्निकार्य्यं व्याहृति होमः ॥ इति नक्त तिथि
निर्णयः ॥ प्रसंगान्नक्षत्र व्रत कालः ॥ तत्र सूर्य्यास्तमय व्यापिनि नक्षत्रे नक्षत्र व्रतं कार्य्यम
थवा त्यंत क्षय गामि नक्षत्रं दिन द्वये प्य स्तकाल व्यापिन भवति ॥ तदाई रात्राद-
र्वाक् चन्द्र युक्तेन क्षत्रे कार्य्यम् ॥ तदुक्तं विष्णु धर्मे ॥ उपोषितव्यं नक्षत्रं यस्मिन्नस्त-
मियाद्रविः ॥ युज्यते यत्र तारा निशीथे शशिना सह ॥ माधवीये स्कंदेच ॥ तत्रै वोप-
वसे दृक्षे यन्निशीथा दधो भवेत् ॥ उपवासे य दृक्षं स्यात्तद्धि नक्तैक भक्तयोः ॥ इति न-
क्षत्र व्रत निर्णयः अथायाचित व्रत निर्णयः ॥ न विद्यते याचितं यस्मिन्नभ्य वहरणे तद-
याचितम् ॥ अभ्यवहारश्च ॥ भक्ष्य भोज्य लेह्य पेय चोष्य भेदेन पंच विधः ॥ तत्र ॥ दं-
तैरेव खंडयित्वा यन्निगीर्य्यंते तद्भक्ष्यम् ॥ यदंत खंड व्यति रेकेण मुख व्यापारेण नि-
गीर्य्यंते तद्भोज्यम् ॥ लेह्यन्नाम जिह्वया गृहीत्वा यदंतर्गिल्यते ततः पेयं प्रसिद्धं नीरा

सं.सिं दि ॥ चौर्य्यं नाम द्रव्यांतर्गत सारं ॥ दंतेन मुख व्यापारेण वा गृहीत्वा यद्विल्यते असा-
३१८ रमन्यत्त्यज्यते ॥ यथा आम्रफले क्षुदंडादिः ॥ अस्य च सामान्यत एकभक्त रूपत्वात् ॥
एकभक्तवदेव मध्याह्न व्यापिन्यामेव तिथौ सति संभवे विधेयं ॥ परप्रार्थनया दिने-
भोजनासंभवे सति ॥ रात्रौ वा परप्रार्थनया भोक्तव्यम् ॥ अन्यथा ॥ भोक्ष्येह मेवेत्तिसं-
कल्पभंगः स्यात् ॥ एतेषामेकभक्तादि व्रतानां खंडतिथिं विहाया खंडतिथावेवोप-
क्रम समाप्ती कुर्य्यात् ॥ या तिथी रुद्यारभ्य दिनार्द्ध व्यापिनी भवेत् ॥ साखंडतिथिः ॥
तस्यां व्रतानां प्रारंभ समाप्तिं च न कुर्य्यात् ॥ यदाह सत्यव्रतः ॥ उदय स्थर तिथ्या-
हि न भवेद्दिनमध्यगा ॥ सा खंडा न व्रतानां सा तत्प्रारंभे समापने मिते ॥ अथ व्रतपरिभा-
षा ॥ व्रताधिकारिणो मदनरत्ने भविष्ये ॥ अनपायस्तुये वि प्रास्ते यां श्रेयो विधीयते ॥ व्रतोप-
वास नियमैर्न्नानादानै स्तथा नृप ॥ उपवासं तु जनस्ति आप्नुयात्परम् ॥ अत एव देवलः ॥
आहिताग्निरनड्वांश्च ब्रह्मचारी तु ते त्रयः ॥ अश्नंत एव सिध्यन्ति नैषां सिद्धिरनश्न- ३१८

संशि॰ तान् ॥ एका दश्याश्वपितुर्माद्धाच्छूद्रस्याप्यधिकारः ॥ यथा ॥ शूद्रो वर्णश्चतुर्थः पि-
वर्णस्त्वाद्धर्म्ममर्हति ॥ वेदमंत्र स्वधा स्वाहा वषट्काराद्भिर्विनेति ॥ व्यासः ॥ प्राच्यास्तु ॥
वैश्य शूद्रयोर्हि रात्र्यधिको पवास निषेधः ॥ यत्तु ॥ वैश्याः शूद्राश्च ये मोहादुपवासं
प्रकुर्वते ॥ त्रिरात्रं पंचरात्रं वा तेषां शुद्धिर्न्न विद्यते ॥ इति हेमाद्रिः एवं स्त्रीणामपि तु स्कांदे
नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ॥ भर्त्तृशुश्रूषयैवैता लोकानिष्टान्
व्रजंति हि ॥ अन्यत्रापि ॥ यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्य्याद्भर्त्ताभ्यर्च्चनं सत्क्रियां
च ॥ तस्य ह्यर्द्धं साफलं नान्यचित्ता नारी भुंक्ते भर्त्तृशुश्रूषयैव ॥ आदित्यपुराणे ॥ नारी
खल्वननुज्ञाता भर्त्त्रा वापि सुतेन वा ॥ विफलं तद्भवेत्तस्याय त्करोत्यौर्द्ध्वदैहिकम् ॥
और्द्ध्वदैहिकं पारलौकिकं तद्भर्त्तुरनुज्ञा विषयं ॥ अत्र विशेषो हरिवंशे ॥ स्नानं च काय्यं शि-
रसस्ततः फलमवाप्नुयात् ॥ स्नाता स्त्री प्रातरुत्थाय पतिं विज्ञापयेत्सती ॥ तथा च ॥
गृहीत्वौदुंबरं पात्रं सकुंभं साक्षतं तथा ॥ गोशृंगं दक्षिणं सिंच्य प्रगृह्णीयाच्च तज्जलम् ॥ पु॰ ३

औदुंबरं ताम्रमयं ॥ ततो भर्तुः स्वतो गृहीत्वा तस्य प्रयतस्य च ॥ आत्मनश्चाभिषेकं कु-
र्व्वतत्शिरसि तज्जलम् ॥ उपवासेषु कर्त्तव्यमेतद्धि व्रतकेषु च ॥ सर्वव्रतेषु संकल्प
विधिश्च ॥ मात्स्ये ॥ गृहीत्वौदुंबरं पात्रं वारिपूर्णमुदङ्मुखः ॥ उपवासं तु गृह्णीयाद्यद्वा सं-
ल्पयेद्बुधः ॥ हस्तेनैवेत्यर्थः  सर्वं यथाविहितकाले व्रतारंभः ॥ व्रतारंभश्च विरेलो मस्त-
स्ते ॥ सत्यव्रतदेवलौ ॥ अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः ॥ सूर्य्यादिदेवताभ्यश्च
निवेद्य व्रतमाचरेत् ॥ भविष्ये व्रतकर्तुर्नियमाः ॥ क्षमा सत्यं दया दानं शौचमिंद्रियनिग्रहः ॥
देवपूजाग्निहवनं संतोषस्तेयवर्ज्जनम् ॥ सर्वव्रतेष्वयं धर्म्मः सामान्यो दशधा स्मृतः
॥ अग्निहोमस्तु दैवत्यो व्याहृतिहोमो वा ॥ विष्णुधर्म्मेऽपि ॥ तज्जप्यजपनध्यानं तत्क-
था श्रवणादिकम् ॥ तदर्च्चनं च तन्नामकीर्त्तनश्रवणादयः ॥ उपवासकृतामेते
गुणाः प्रोक्ता मनीषिभिः ॥ कौर्म्मे ॥ वहिर्ग्रामान्त्यजान् सूतिं पतितं च रजस्वलाम् ॥
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥ पृथ्वीचंद्रोदयेऽग्निपुराणे ॥ स्नात्वा व्रतवता-

सर्वव्रतेषु व्रतमूर्तयः ॥ पूज्याः सुवर्णमय्याद्याः शक्त्या वै भूमिशायिना ॥ जपो होम-
श्च सामान्यं व्रतानां दानमेव च ॥ चतुर्विंशद्द्वादश वा पंच वा एक एव वा ॥ विप्राः पू-
ज्या यथाशक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥ अत्र विप्रा इति पुल्लिंगनिर्देशात्पुंस ए-
व भोज्या न तु स्त्रियः ॥ व्रतमूर्तयो व्रतदेवताप्रतिमाः ॥ प्रतिमा स्वरूपं मदनरत्ने ॥ अनुक्त-
द्रव्यतत्संख्या देवताप्रतिमा नृप ॥ सौवर्णी राजती ताम्री वृक्षजा मार्त्तिकी तथा ॥ चि-
त्रजा पिष्टलेखोत्था निजवित्तानुरूपतः ॥ आमाषाल्पपर्यंतं कर्त्तव्या शाठ्यवर्जि-
तैः ॥ तत्रैव ब्राह्मे ॥ आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ॥ मंत्रस्य देवतायाश्च प्रजा-
पतिरिति स्थितिः ॥ मंत्रानुक्तौ समस्तव्याहृतिरूपो मंत्रः ॥ प्रजापतिश्च देवतेति ॥ कल्प-
तरुः ॥ अनुक्तसंख्या यत्र स्याच्छतमष्टोत्तरं भवेत् ॥ उपवासे द्विजः कृत्वा ब्राह्मणानां
च भोजनम् ॥ कुर्यात्तेनास्य सगुण उपवासो विधीयते ॥ व्रतोद्यापनानुक्तौ पृथ्वीचंद्रोदये नंदि-
पुराणे ॥ कुर्यादुद्यापनं यस्य समाप्तौ यदुदीरितम् ॥ उद्यापनं विना यत्तु तद्व्रतं निःफलं-

भवेत् ॥ यदि चोद्यापनं नोक्तं व्रतानु गुणतश्चरेत् ॥ वित्तानुसारतो दद्याद्यतुको द्या-
पने व्रते ॥ गाश्चैव कांचनं दद्याद्व्रतस्य परिपूर्तये ॥ अमकौ नारदीये ॥ सर्वेषामप्युद्या-
भेतु यथोक्तकरणं विना ॥ विप्रवाक्यं स्मृतं शुद्धं व्रतस्य परिपूर्तये ॥ वृथा विप्रवचो
यस्तु गृह्णाति मनुजः शुभम् ॥ अदत्वा दक्षिणां पापः स याति नरकं ध्रुवम् ॥ मात्ते वेद-
नंदे देवीपुराणे ॥ व्रते च तीर्थेऽध्ययने श्राद्धेऽपि च विशेषतः ॥ परान्नभोजनाद्देवि यस्या-
न्नं तस्य तत्फलम् ॥ मात्स्ये ॥ नित्यस्नायी मिताहारो गुरुदेवद्विजार्चकः ॥ क्षारं-
क्षौद्रं च लवणं मधुमांसानि वर्जयेत् ॥ क्षारास्तु तत्रैवोक्ताः ॥ तिलमुद्गादृते शिम्ब्यं धा-
स्ये गोधूमकोद्रवौ ॥ धान्यं कदेवधान्यं च शमीधान्यं तथैव च ॥ सिन्नधान्यं तथा
पण्यं मूलं क्षारगणाः स्मृताः ॥ गोधूमानांस्तु तत्रैव प्रशस्तम् ॥ व्रीहिषष्टिक-
मुद्गाश्च कलायाः सतिलं पयः ॥ श्यामाकाः शालिनीवाराः गोधूमाद्या व्रते हिताः ॥
कूष्मांडालाबुवृंताकपालंकीज्योत्स्निकास्त्यजेत् ॥ चरुभैक्ष्यं शक्तुकणाः शाकं दधि-

घृतं मधु ॥ श्यामा का: शालिनी वारा: पावकं मूल तंदुलम् ॥ हविष्यं व्रत नक्ता दावग्नि कार्य्यादि के हितम् ॥ मधु मांसं विहायान्य द्दूते च हित मीरितम् ॥ श्यामी धान्यं मापादि: पालं की मध्य देशे पो ई इति प्रसिद्धा ॥ ज्योत्स्निका को शाल की ॥ मिताक्षरायां गो तम: चरुभै क्ष्य शक्तु कण यावक शाक पयो दधि ॥ धृत मूल फलोद कानि हवी ष्युत्तरोत्तर प्रशस्तानि ॥ पयो दधि घृतं च गव्य मिति ॥ गृहीत व्रत त्यागे तु मदन रत्ने तु छाग लेप: ॥ पूर्वं व्रतं गृहीत्वा यो ना चरे त्काम मोहित: ॥ जीवन् भवति चांडा लो मृत: श्वा चाभि जायते ॥ प्रायश्चित्तं तु पृथ्वी चंद्रोदये आग्नेये गारुडे ऽपि ॥ क्रोधात्प्रमादा ल्लोभा द्वा व्रत भंगो भवे द्यदि ॥ दिन त्रयं न भुंजी त मुंडनं शिर सो ऽथवा ॥ यत्तु ॥ प्राय श्चित्तं तत: कृत्वा पुनरे व व्रती भवे दिति वचनं ॥ ज्ञाति क्रांतमपि व्रतं कार्य्य मेवेति ॥ शूल पाणि: ॥ तन्मध्ये तु व्रत शेष सत्वे ज्ञेयम् ॥ एतच्च शक्त विषयं ॥ अशक्तौ तु कालहेमाद्रौ पुराणां तरे ॥ उपवासा समर्थ श्चेदे कं विप्रं तु भोजयेत् ॥ ताबद्धना दि याद्वा द्भुक्त श्चे द्विगुणं तथा ॥

भुक्तः कृत भोजनः ब्राह्मण भोजनं विनेति शेषः ॥ सहस्र सम्मितां देवीं जपेद्वा प्राण
संयमान् ॥ कुर्याद्वादश संख्याकान् यथा शक्त्यानु यो नरः ॥ इति शुद्धितत्वे मात्स्ये ॥ उप-
वासेष्व शक्तानां नक्त भोजन मिष्यते ॥ मदनरत्ने वायवीये ॥ द्रव्य हतो पवासस्य फलं-
प्राप्नोत्य संशयम् ॥ अपरार्के देवलः ॥ ब्रह्म चर्य्यं तथा शौचं सत्य मामिष वर्ज्जनं ॥ व्रते-
ष्वेतानि चत्वारि स्थानीति विनिश्चयः ॥ मात्स्ये ॥ तस्मात्कृतो पवासेन स्नान मभ्यंग पू
र्वकम् ॥ वर्ज्जनीयं प्रयत्नेन व्रत मंतत्परं नृप ॥ नियमास्तु तत्रचान्ये स्मरणीयाः ॥ अथ
स्त्रीव्रतेषु विशेषा उच्यंते ॥ तत्र हेमाद्रौ व्रतकांडे गारुडे ॥ गंधालंकार तांबूल पुष्प मालानु
लेपनम् ॥ उपवासेन दुष्यंति दंत धावन मज्जनमिति ॥ इदं च सभर्तृको पवास विषयम् ॥
अंजनं च सतांबूलं कुंकुमं रक्त वाससी ॥ धारये त्सोपवासापि अवैधव्य करं यतः ॥ वि-
धवा यति मार्गेण कुमारी वाय रक्षयेति ॥ विष्णुधर्मेऽपि ॥ सर्वेष्वू पवासेषु मान्याश्च-
सुवासिनी ॥ धारये द्रक्त वस्त्राणि कुसुमानि सितानि च ॥ विधवा शुक्ल वसन मेक मे-

वहि धारयेत् ॥ मनुरपि ॥ पुष्पालंकारवस्त्राणि गंधधूपानुलेपनम् ॥ उपवासेन दुष्यंती
त्यादि ॥ मदनरत्नेप्यासौ ऽपि ॥ दंतधावनपुष्पादि व्रते व्यस्नानदुष्यति ॥ यद्यपीदं सर्वोप-
वासविषयं प्रतीयते ॥ तथापि शिष्टाचारानुमतात् ॥ सौभाग्यार्थं क्रियमाण नवरात्र
त्रिरात्राद्युपवासविषय मेव ॥ मदेकादश्यादि विषयम् ॥ असकृज्जलपानाच्च तांबूल
वूलभक्षणात् ॥ उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ॥ इत्यपरार्के देवलेन ॥ तन्नि-
षेधात् ॥ न चास्य पुंविषये सावकाशत्वात् ॥ स्त्रीणां तां बूलादि रागप्राप्तत्वात् ॥ तां बूला
दि प्रापकस्यैव कादंबरीतरविषयत्वेन वै परीत्यस्यापि सुवचत्वात् ॥ हरिवंशे ॥ अंजनं
रोचनां चैव गंधाः सुमनसस्तथा ॥ व्रते चैवोपवासे च नित्यमेव विसर्जयेत् ॥ शिरसो
भ्यंजनं सौम्य नैव मेतत्प्रशस्यते ॥ न पादयोर्न गात्रस्य स्नेहे नेति स्थिति स्मृता ॥ तत्रैव ॥
अश्रुप्रपातो रोषश्च कलहस्य कृतिस्तथा ॥ उपवासाहता चापि सद्यो भ्रंशयति स्त्रियम् ॥
स्त्रियमित्युपलक्षणम् ॥ शिवधर्मे ॥ दानं व्रतानि नियमं स्नानं ध्यानं हुतं जपः ॥ मले-

नापि कृतं सर्वं क्रोधितस्य वृथा भवेत् ॥ अथ सूतकादौ निर्णयः ॥ तत्र ग्रस्तवस्तुत्वा शौच-
योः सर्वं स्मार्तं कर्म्म निवृत्ति निर्बंधेषु स्थ स्थैव ॥ गौडास्तु सूता शौचाद पिता मातुः ॥
जानूर्ध्वं सुतजे जाते नित्य कर्म्म न चाचरेत् ॥ नैमित्तिकं तत धर्म्म वद्धौन चाच-
रेत् ॥ सूतके च समुत्पन्ने ज्वर कर्म्माणि मैथुने ॥ धूमो द्गारे तथा वान्तौ नित्य कर्म्माणि सं-
त्यजेत् ॥ छर्द्ये भुक्ते त्वजीर्णे च नैव भुक्तापि किंचन ॥ कर्म्म कुर्य्यान्नरो नित्यं सूतके सूत-
के न चेति ॥ कालिका पुराणात् वस्तुतस्तु ॥ पूर्वं देवी पूज्योपक्रमात्तन्मात्र विषयत्व मस्येति
युक्तं मतीमः ॥ तथा हेमाद्रौ पाद्मे ॥ गर्भिणी सूतिका दिश्च कुमारी वाथ रोगिणी ॥ यदा शु-
द्धा तदान्येन कारयेत्प्रयता स्वयमिति ॥ तेन यस्मिन्नेतत्पूजायुक्तं तदन्येन कारये-
त् ॥ शरीर नियमान्स्वयं कुर्य्यात् ॥ शुद्धि तत्वे विष्णुः ॥ बहु कालिक संकल्पो गृहीत श्च पुरा य-
दि ॥ सूतके मृतके चैव व्रतं तं नैव दुष्यति ॥ एतत्काम्य परम् ॥ नित्यं त्वनारब्धमिति
कार्य्यमिति ॥ गौडाः ॥ मल्लरत्ने ॥ पूर्वं संकल्पितं यच्च व्रतं सुनियतव्रतैः ॥ तत्कर्तव्यं नरैः

सं.शि. ४००

शुद्धं दानार्च्चनविवर्ज्जितम् ॥ माधवीये कौर्म्मेऽपि ॥ काम्योपवासे प्रक्रांते त्वंतरामृतसूतके ॥ तत्र काम्यव्रतं कुर्य्याद्दानार्च्चनविवर्ज्जितमिति ॥ एतेन सांगेऽधिकारान्नुक्तं प्रागेव पूजादि कार्य्यमिति नद्भानोक्तिः परास्ता ॥ प्रारब्ध पूजादि कार्य्यमेव तत्रैव विशेषस्य आमः ॥ एवं रजस्वलापि ॥ यत्तु सत्यव्रतः ॥ प्रारब्ध दीर्घतः पुंसां नारीणां यद्रजो भवेत् ॥ न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ॥ सत्कृति विधिना कारयेत् ॥ तदुक्तं मदनरत्ने मात्स्ये ॥ अंतरातु रजोयोगे पूजामन्येन कारयेत् ॥ प्रतिनिधयश्च निर्णयामृते ॥ पैठीनसिः ॥ भार्य्या पत्युर्व्रतं कुर्य्यात् भार्य्यायाश्च पतिर्व्रतम् ॥ असामर्थ्ये परस्ताभ्यां व्रतभंगो न जायते ॥ स्कांदेऽपि ॥ पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ॥ एषामभाव एवान्यं ब्राह्मणं वा नियोजयेत् ॥ कात्यायनः ॥ पितृमातृभ्रातृपतिगुर्व्वर्थेषु विशेषतः ॥ उपवासं प्रकुर्व्वाणः पुण्यं शतगुणं लभेत् ॥ मदनरत्ने प्रभासखंडे ॥ भर्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखापि च ॥ यात्रायां धर्म्मकार्य्येषु जायते प्रतिहस्तकाः ॥ एभिः कृतं महादेव स्वयमेव कृतं भ- ४००

देत् ॥ तत्रैव ॥ स्वयं कर्त्तुमशक्तश्चेत् कारयेत पुरोधसा ॥ इदं च सर्ववर्णसाधारणमविशेषा
त् ॥ जपस्तपस्तीर्थसेवा प्रव्रज्याजपसाधनम् ॥ विप्रैस्संपादितं यस्य सम्पन्नं तस्य तत्फ
लम् ॥ अत्र विशेषमाह त्रिकांडमंडनः ॥ काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः ॥ का
म्येऽप्युपक्रमादूर्द्ध्वं केचित्प्रतिनिधिं विदुः ॥ न स्यात्प्रतिनिधिर्मन्त्रस्वामिदेवाग्नि-
कर्म्मसु ॥ स एव काल्ये योऽन्योऽस्ति नारभेद्रभिरेव सः ॥ नापि प्रतिनिधातव्यं निषिद्धं व
स्तु कुत्रचित् ॥ द्विराय केऽपि सूत्रेऽपि ॥ न स्वामित्वस्य भार्य्यायाः देशस्य कालस्याग्नेर्दे
वतायाः कर्म्मणः शब्दस्य च प्रतिनिधिर्विद्यत इति ॥ अथ व्रतादिसन्निपातनिर्णयः ॥ तत्र
तिथिद्वयसन्निपाते ॥ तन्त्रोक्तं दानहोमादि क्रमेणानुष्ठेयमविरोधात् ॥ इदं पूर्वारब्धे
ष्वेव ॥ एकमध्येऽन्यकामः कर्म्मारंभस्तु न भवत्येव गुणफलादते ॥ यत्तु व्रतादिक-
र्म्ममात्रमनंगेन व्यवधानदोषस्सर्वत्र साम्यतः ॥ शिष्टास्तु ॥ कार्त्तिकस्नानादिम
ध्ये लक्षहोमतुलाभारव्रतणादिकमाचरंति तन्नित्यमध्ये काम्यमध्येतु चिंत्यम्...पतनैक

भक्तादौ विरोधस्तत्र प्राथम्यादेकभक्तं कार्य्यं ॥ नक्तं तु परेद्युस्तन्निथौ गौणकाले कार्य्यम् ॥
समकाली न विरुद्धव्रतादौ त्वेकम् स्वयंकृत्वान्यद्भार्य्यादिना कारयेदिति माधवः ॥ यत्र तु-
शिवरात्र्यादौ तिथिमध्ये पारणाया न्हि भोजनं प्राप्तं ॥ भूताष्टम्योर्द्दिवा भुक्त्वा रात्रौ भुक्त्वा च
पर्वणि ॥ एकादश्यां दिवारात्रौ भुक्त्वा चांद्रायणं चरेत् ॥ इति तन्निषेधस्य तत्र पर्य्यावेध-
त्वाद्दिवैव भोजनम् ॥ निषेधस्तु रागप्राप्तभोजनविषयः ॥ एवमष्टम्यादिनक्तव्रते संक्रां
त्यादौ रवौ संकष्टचतुर्थ्यां च रात्रौ भोजनम् ॥ यत्र त्वष्टम्यादौ तु दिवा भुजि निषेधः ॥ सं
क्रमे च रात्र्यामिति निषेधद्वयम् ॥ तत्रोपवास एव कार्य्यः ॥ यद्यपि पुत्रिणोऽपवासो ऽ
पि निद्धः ॥ तथाप्युपवासनिषेधेऽपि किंचिद्भक्ष्यं प्रकल्पयेत् ॥ इति वचनात् ॥ किंचि-
द्भक्षयित्वोपवासः कार्य्यः ॥ चांद्रायणमध्ये एकादश्यादौ तु भोजनमेव कार्य्यम् ॥ चां
द्रायणस्य काम्यत्वेन नित्यबाधकत्वात् ॥ अबाधेन गत्यंतरासंभवाच्च एकादश्यामेका-
न्तरोपवासादि पारणायां जलपारणं कृत्वोपवसेत् ॥ अपो वा ऽसितमनसितं चेति श्रुतेः

एवं द्वादश्यां मासोपवासश्राद्धप्रदोषादिषु ज्ञेयम् ॥ एवं काम्यनैमित्तिकनित्यत्वादि कृतं
बलाबलं स्वयमूह्यमिति दिक् ॥ इति व्रतपरिभाषा ॥ अथ व्रतोपवासादिषु तिथीनां साधारणनि-
र्णयः ॥ अथ शुक्लपक्षे द्वितीया तृतीया युक्ता तृतीया द्वितीयायुक्ता ॥ चतुर्थी पंचम्या पंचमी च-
तुर्थ्यां षष्ठ्या सप्तमी सप्तम्या षष्ठी अष्टमी नवम्या नवम्यष्टम्या ॥ एकादशी द्वादश्या द्वा-
दश्येकादश्या ॥ चतुर्दश्या पौर्णमासी पौर्णमास्या चतुर्दशी ॥ अमावास्या प्रतिपदा प्रतिप-
दमावास्ययेति ॥ तदुक्तं निगमे ॥ युग्माग्नियुगभूतानि षण्मुन्योर्वसुरंध्रयोः ॥ रुद्रेण द्वादशी
युक्ता चतुर्दश्या तु पूर्णिमा ॥ प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम् ॥ व्यस्तमेतन्न
महादोषं प्रवदंति मनीषिणः ॥ इति ॥ युग्मं द्वितीया अग्निस्तृतीया युगं चतुर्थी भूतं पंचमी
षट् षष्ठी मुनिः सप्तमी वसुरष्टमी रंध्रं नवमी रुद्रैकादशी नन्वत्र वाक्ये शुक्लपक्ष एव कथं
गृह्यते तदुच्यते ॥ चतुर्दश्या च पूर्णिमेति प्रतिपदमावास्ययेति ॥ उभयोः साहचर्याच्च
एतयोः कृष्णपक्षे असंभवात् ॥ दशम्येकादशी युता नवमी युता वा कार्या ॥ संपूर्णा दश-

मी कार्य्या पूर्वया परया युता ॥ युक्ता न दूषिता यस्मात्तत स्सा सर्वतो मुखीति ॥ पुराण स-
मुच्चये ॥ संपूर्णा दशमी कार्य्या मिलिता पूर्वया युतेति ॥ तिथि क्षय वृद्ध्यो र्पूज्यतामाह ॥ त्रिमु-
हूर्त्तापि कर्त्तव्या यातिथि र्वृद्धि गामिनी ॥ घस्नमुहूर्त्तापि कर्त्तव्या याधातिथिः क्षय गामिनी
॥ वृद्धि गामिनी स्वल्पा क्षय गामिनी महत्ती पूज्यतेति ॥ अतएवैतदपि ॥ तिथि ह्रासादिषु
मानां वृद्धि ह्रास विधी तथा ॥ व्रत श्राद्ध विभागेन विद्धान्तको व्यवस्थितौ ऽपि ॥ अत-
श्च तिथि क्षय वृद्ध्यो र्पूज्य तथा व्रतादिके कर्त्तव्यमिति दिक् ॥ अथ प्रति पदादि विशेष
तिथि निर्णयः ॥ विप्रति पन्नानां वाक्यानां परस्पर विरोध परिहारो निर्णयः ॥ यदुक्तं ॥ तत्वे-
विप्रति पन्नानां वाक्यानामितरेतरम् ॥ विरोध परिहारो ऽत्र तन्निर्णय दर्शनम् ॥ अथा-
दौ प्रति पन्निर्णीयते ॥ सा च यदि सूर्य्योदय मारभ्य पुनरुदय पर्य्यन्तं भवति तदा सासं पू-
र्णात्वान्नि स्संदेहं कार्य्या हि ॥ तदुक्तं स्कान्दे ॥ प्रति पत्प्रभृतयः सर्वा उदया दोदयाद्रवेः ॥
संपूर्णा इति विख्याता हरिवासर वर्जिताः ॥ हरि वासरः एकादशी खंडतिथौ तु विधिनि-

षेध व्यवस्था माह ॥ गर्गः ॥ विधिः पूज्य तिथौ तत्र निषेधः काल के इति ॥ पूज्य त्वं चक
र्म्मा नुष्ठान योग्य त्वम् ॥ एवं च खंड तिथौ पूज्यत्वं निर्णीयं यदातु अमावास्यादितीथ -
याश्च प्रति पदो र्योगस्तदा मा युक्तैव ग्राह्या ॥ तदुक्तं निगमे ॥ युग्मा ग्नि युग भूतानां षण्मु
न्यो र्वसु रंध्रयोः ॥ रुद्रेण द्वादशी युक्ता चतुर्दश्यात्तु पूर्णिमा ॥ प्रति पद्यप्य मावास्या
तिथ्यो र्युग्मं महाफलम् ॥ अत्र पूर्व तिथिस्तु उत्तर विद्धैव उत्तरा तु पूर्व विद्धैव ॥ चैत्र
कृष्ण प्रति पदि वसं तारंभः ॥ तत्र चैत्र कृष्ण प्रति पदि पूर्व विद्धायां विभूति वंदनादि कर्म्म
कर्त्तव्यं ॥ होलिकानंतरत्वेनैव ॥ होलिका समीपं गत्वा तद्भस्म गृहीत्वा ॥ पठनीयोयं मं-
त्र ॥ ॐ वंदितासि सुरेंद्रेण ब्रह्मणा शंकरेण च ॥ अत स्त्वं पाहि नो देवि भूते भूति प्र-
भव ॥ सचंदन माम्रमुकुलं च प्राश्नीयात् ॥ गोमयो पलिप्ते शुचौ देशे कृतस्व स्त्य-
यनः ॥ प्राशनमंत्रः ॥ आम्र मग्र्यं वसं तस्य चाकंद कुसुमं तव ॥ सचंदनं पिवाम्यद्य सर्व
कामार्थ सिद्धये ॥ चैत्र शुक्ल प्रति पदि वत्सरारंभः ॥ सा चोदय व्यापिनी ॥ यथा चैत्रे मासि जग

सं॰सि॰ ब्रह्मा ससर्ज्ज प्रथमे हनि ॥ शुक्ल पक्षे समग्रं तु तदा सूर्य्योदये सति ॥ दिन द्वये व्याप्ताव्या-
 प्तौ पूर्व्वैव ॥ चण्डिकार्च्चने तु क्षमा युक्तैव ॥ तदुक्तं कालिकापुराणे ॥ क्षमायुक्ते वसंशाखाग्र-
ति पञ्चण्डिकार्च्चने ॥ ज्येष्ठ शुक्ल प्रतिपदि दशहरारंभः   भाद्र शुक्ल प्रतिपदि शिवव्रतं तद्देव मौनव्रत-
म् ॥ यदुक्तं व्रतराजे वर्त्ते ॥ रुद्र व्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिः ॥ आश्विन शुक्ल प्रतिपदि नव-
रात्रारंभः ॥ सा च पूर्वाह्णे पूजयेच्छिवाम् ॥ अत्र कर्म्मकाल व्यापिन्येव तिथिर्गृह्यते ॥ क-
र्म्मणो यस्य यः कालस्तत्काल व्यापिनी तिथिरित्युक्तेः ॥ अत्र शुक्ल प्रतिपत्पूर्व्वैवोपो-
ष्या ॥ त्रिमुहूर्त्तान्न्यूनत्वेऽपि पूर्वेद्युरेव युग्म वाक्यात् ॥ प्रातरावाह्य देवीं प्रातरेव विस-
र्ज्जयेत् ॥ अत्र सति संभवे प्रतिपत् आदि नाडी षोडशकं त्यक्त्वा कलशः स्थाप्यः ॥
आद्याः षोडश नाड्यस्तु लब्ध्वा यः पूजयेच्छिवाम् ॥ कलश स्थापनं तत्र ह्यरिष्टं जायते ध्रु-
वम् ॥ देवीपुराणोक्तेः ॥ रात्रौ तु तन्निषेधो ॥ मात्स्ये ॥ न रात्रौ स्थापनं कार्य्यं न च कुंभाभि-
षेचनमिति ॥ अथ कार्त्तिक शुक्ल प्रतिपत् ॥ सा च तिथि वृद्धौ सूर्य्योदय व्यापिनी गोक्रीडादौ स- 

येच पूर्वयुतैव कार्य्या ॥ तत्र देवलः ॥ पूर्वविद्धैव कर्त्तव्या शिवरात्रि र्बलेर्दिनम् ॥ इति हृद्गवचो
क्तेः ॥ देवलोऽपि ॥ प्रतिपद्दर्श संयोगे क्रीडनं तु गवां मतम् ॥ परविद्धेषु यः कुर्य्यात्पुत्र दार
धनक्षय मिति ॥ पुराण समुच्चयेऽपि ॥ गवां क्रीडा दिने यत्र रात्रौ दृश्येत चंद्रमाः ॥ सोमो रा
जा पशून्हंति सुरभी पूजकांस्तथा ॥ तत्रैव वार्षिक जय पराजय हेतुत्वेन द्यूतं कार्य्यम्
॥ स्कांदे यथा ॥ प्रातर्गोवर्द्धनः पूज्यो द्यूतं चापि समाचरेत् ॥ ब्राह्मे ॥ प्रतिपद्दि जयो यस्य
तस्य संवत्सरे जयः ॥ अतो वर्ष परीक्षार्थं द्यूतं चैव समाचरेत् ॥ गोपूजा मंत्रास्तु ॥ ॐ गोव
र्द्धन धराधार गोकुल त्राण कारक ॥ बहुबाहु कृतच्छाय गवां कोटि प्रदो भव ॥ लक्ष्मी
र्या लोक पालानां धेनुरूपेण संस्थिता ॥ घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ॥
अग्रतस्सन्तु मे गावो गावो मे सन्तु पृष्ठतः ॥ गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्
॥ अत्रैव पराह्णे ॥ कुश काष्ठ निर्म्मित मार्ग पाली पूर्वस्यां ग्राम नक्षत्र वृक्षादिषु निब
ध्य सर्वे वर्णा स्तस्या स्तले स्थेपुः ॥ तदुक्तं स्कांदे ॥ ततोऽपराह्ण समये पूर्वस्यां दिशि

भारत ॥ मार्गपालीं निबद्धी यात् तुंगे स्तंभेऽथपादपे ॥ कुशकाशमयीं दिव्यां लव-
कै र्वह्निभिर्मुने ॥ कृते होमे द्विजेन्द्रस्तु बध्नीयान्मार्गपालिकाम् ॥ नमस्कारं ततः कु-
र्यान्मंत्रेणानेन सुव्रतः ॥ ॐ मार्गपालि नमस्तेऽस्तु सर्वलोकसुखप्रदे ॥ विधेयैः पु-
त्रदाराद्यैः पुनरेहि व्रतस्य मे ॥ इति पूज्यनीराजनमपि कृत्वा ॥ चतुर्वर्णास्तांस्तमुल्लं-
घेयुः ॥ स्कांदे ॥ मार्गपालीसमुल्लंघ्य नीरुजः स्युः सुखान्विताः ॥ अथ तत्रैव यष्टिकाकर्ष-
णमपि कार्यम् ॥ तदुक्तमादित्यपुराणे ॥ कुशकाशमयीं कुर्यात्कुशकाशमयीं दृढाम् ॥
नवां तामेकतो राजा हीनवर्णास्तथान्यतः ॥ गृहीत्वा कर्षयेयुस्तां यथासारं मुहुर्मु-
हुः ॥ जयोऽत्र हीनजातीनां ज्ञेयो राज्ञस्तु वत्सरात् ॥ जयचिन्हमिदं राजा वि-
दधीत प्रयत्नतः ॥ अत्रैव राजा स्वसहस्थानैः ॥ वक्ष्यमाणलक्षणां बलिं पंचरंगकैः
रालिख्य सपरिवारः ॥ षोडशोपचारैर्बलिं पूजयित्वा तत्प्रीत्यर्थं यथाशक्तिदा-
नं कार्यम् ॥ तदानमक्षयफलं भवति ॥ अन्येऽपि स्वस्वगृहे तंडुलैः शय्यायां

बलिमालिकस्य पूजयेयुः ॥ तथाच स्कान्दे ॥ यदस्यां दीयते दानं स्वल्पं वा यदि वा बहु ॥ तदक्षयं भवेत्सर्वं विष्णोः प्रीतिकरं परम् ॥ अन्यमासि प्रतिपत्सु व्रतादि विशेषो न प्रसिद्धः ॥ यदि कश्चित्स्यात् तदा पूर्वविद्धायामेव कार्य्यमेवेति सिद्धान्तः इति प्रतिपन्निर्णयः ॥ अथ द्वितीयानिर्णीयते ॥ द्वितीया तिथिरुपवासादिषु तृतीयायुतैव संग्राह्या ॥ युग्मवाक्यात् ॥ तत्र चैत्रशुक्लद्वितीयायां ॥ उमापूजा शिवपूजा वह्निपूजा च कार्य्या ॥ तदुक्तं भविष्योत्तरे ॥ चैत्रशुक्लद्वितीयायामुमा पूज्या फलार्थिभिः ॥ शिवपूजाग्निपूजा च कर्तव्या मुनिसत्तम ॥ इति चैत्रद्वितीया अथ श्रावणादि कृष्णद्वितीया सु चतुर्षु ॥ अशून्यव्रतम् सा पूर्वा कृष्णाष्टमी वृहत्तल्या सावित्री वटपैतृकी ॥ कामत्रयोदशी रंभा उपोष्या पर्वसंयुता ॥ वृहत्तल्या अशून्यशयना द्वितीया ॥ इति संवर्त्तोक्तिः कार्तिकशुक्लद्वितीया यमद्वितीया ॥ सा ऽपराह्णव्यापिनी ॥ अस्यां यमुनास्नानं कृत्वा यमं पूजयेत्तर्प्पयेच्च ॥ भगिनीभिर्भ्रातरो भोजनीयाः ॥ भगिन्यश्च वस्त्रालंकारादिभिः

सत्कार्य्याः ॥ तथाचस्कांदे ॥ ऊर्ज्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम् ॥ स्नानं कृत्वाभानुजायांयमलोकं न पश्यति ॥ तर्पणंच ॥ यज्ञोपवीतिनाकार्य्यं प्राचीनावीतिनाथवा ॥ देवत्वं च पितृत्वं च यमस्यैव द्विरूपता ॥ कार्तिके शुक्लपक्षस्य द्वितीयायां तु नारद ॥ यमो यमुनया पूर्वं पूजितः स्वगृहेऽर्चितः ॥ अस्यां निजगृहे विप्रनभोक्तव्यं ततो बुधैः ॥ स्नेहेन भगिनी हस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ॥ दानानि च प्रदेयानि भगिनीभ्यो विधानवित् ॥ सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः ॥ प्रतिपन्नकाः कृत्रिमाः ॥ अस्यां च भगिनीभिर्भ्रातुरायुर्वृद्धये चिरजीविनः पूजाः कार्य्याः ॥ तेच ॥ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ॥ कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ इमान्पूज्य भ्रातुराशिषं प्रार्थयेत् ॥ इति यमद्वितीया ॥ पक्षद्वयगता सुचतुर्विंशति संख्यास्व पिद्वितायास्तु सर्वोपचारैर्वस्मा पूज्यः ॥ इति द्वितीयानिर्णयः

अथ तृतीया निर्णीयते

सर्वास्तृतीया रंभाव्यतिरिक्ताश्चतुर्थी युतैव ग्राह्याः ॥ स्कांदे ॥ द्वितीययातु संयुक्तानद्र

तीयाकदाचन ॥ कर्त्तव्या व्रतिभिस्तात धर्म्मकामार्थतत्परैः ॥ ब्रह्मवैवर्त्ते ॥ रंभाख्यां वर्ज्ज-
यित्वा च तृतीयां मुनिसत्तम ॥ अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते ॥ अथ चैत्र शुक्ल
तृतीया ॥ आंदोलनाख्या ॥ तत्र शंकरो मांसं पूज्य रात्रौ जागरणं दक्षिणा दानमपि का-
र्य्यं ॥ तदुक्तं देवीपुराणे ॥ तृतीयायां यजेद्देवीं शंकरेण समन्विताम् ॥ सौवर्णीं च तथा गौ-
री राजतश्च शंकरस्तथा ॥ चतुर्भुजश्च देवोऽसौ द्विभुजा पार्वती भवेत् ॥ कुंकुमागरु
कर्प्पूरस्रग्गंधधूपदीपकैः ॥ संपूज्यांदोलये द्वत्स शिवो मातुष्टये सदा ॥ रात्रौ जागरणं
कार्य्यं प्रातर्द्देयाच्च दक्षिणा ॥ इयं मन्वादिरपि ॥ इति चैत्र शुक्ल तृतीया ॥ अथ वैशाख शुक्लतृ-
तीयाक्षयतृतीया ॥ सा पूर्वान्हव्यापिनी ॥ नारदीये ॥ द्वे शुक्ले द्वे तथा कृष्णे युगादी कव-
यो विदुः ॥ शुक्ले पूर्वान्हिकी ग्राह्या कृष्णे चैवापरान्हिकी ॥ देवीपुराणे ॥ तृतीयायां तु
वैशाखे रोहिण्यृक्षे प्रपूज्य च जलकुंभप्रदानेन शिवलोके महीयते ॥ मंत्रस्तु ॥ एष ध-
र्म्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ॥ अस्य प्रदानात्तृप्यंतु पितरोऽपि पितामहाः ॥ गं

ओदकं तिलैर्मिश्रं सान्नं कुंभं सदक्षिणम् ॥ पितृभ्यः संप्रदास्यामि पितृभ्योनुपति-
ष्ठतु ॥ साचेयं पूर्वान्ह व्यापिनी ॥ विष्णुपुराणेऽपि ॥ यानी समप्यन्नतिलैर्विमिश्रं दद्या-
त्पितृभ्यः प्रयतो मनुष्यः ॥ श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतन्मुनयो वदंति
मात्स्ये ॥ कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु ॥ हायनानि द्विसहस्रं पितॄणा-
न्तृप्तिदं भवेत् ॥ गोभिलः ॥ वैशाखस्य तृतीयां यः पूर्वविद्धां करोति वै ॥ हव्यं देवान
हरंति कव्यंच पितरस्तथा ॥ पूर्वान्हे तु सदा कार्य्या शुक्ला मनु युगादयः ॥ परेतु-
अपरान्हः पितृणामित्यादि वचनाच्छ्राद्ध विधाव परान्ह व्यापिन्येव ग्राह्या ॥ हे-
मुक्ते हत्यादि वाक्यतः ॥ पर्वान्ह शब्दस्तु कुतप पूर्वार्द्ध परः ॥ गोभिल वचनं तु पि-
त्रुद्देशेन क्रियमाणा तर्प्पणादि परतया व्याख्येय मित्याहुः ॥ सा चेयं कल्पनान्न
सतीव भाति ॥ अपरान्हः पितृणामित्यादि वचनस्याक्षयतृतीयातिरिक्त विषय-
त्वेनापि व्याख्यान संभवात् ॥ मलमास याते तूभयत्र श्राद्धं श्राद्धचंद्रिकायाम् ॥ यो-

गादिकं मासिकंच श्राद्धं चापरपाक्षिकं ॥ मन्वादिकं तैर्थिकंच कुर्य्यान्मासद्वयेऽपि
च ॥ अपरपक्षोऽत्र कृष्णपक्षो गृह्यते ॥ महालयस्य मले निषेधात् ॥ नारदीये विशेषोऽ
पि ॥ वैशाखे शुक्लपक्षे तु तृतीया रोहिणीयुता ॥ दुर्लभा बुधवारेण सोमेनैव युता-
थवा ॥ रोहिणी बुधयुक्तापि पूर्वविद्धा विवर्जिता ॥ भक्त्या कृतापि मांधातः हंति पु
ण्यं पुराकृतम् ॥ इत्यक्षयतृतीया ॥ ज्येष्ठशुक्लतृतीया रंभा सा ॥ पूर्वा प्रागुदाहृतस्कंद
वाक्यात् ॥ तथाच भविष्ये ॥ ज्येष्ठशुक्लतृतीयायां पतिपुत्रफलार्थिनी ॥ नारी सूर्यो
दये स्नात्वा सती व्रतपरायणा ॥ तत्र व्रतनियमं गृहीत्वा ॥ चतसृषु कुंडेषु स्थंडिले
षु वाग्नीन्संस्थाप्य पंचमो भास्करः इति पंचाग्निमध्ये वेदिकायां रंभास्तंभोपशोभि-
तां पुष्पमंडपिकां कृत्वा तत्र सर्वशक्तिमयीं देवीं आवाह्य सर्वोपचारैर्न्नमोऽस्त्वीशमं
त्रैर्देवीं संपूज्य सूर्य्यास्तमयपर्य्यन्तं तिष्ठेत् ॥ ब्राह्मणांश्च प्रणवादिनमोऽन्तैर्मंत्रैः
सौभाग्य इत्यादिना जुहुयात् ॥ ततो द्विजदंपत्यंच तुर्ष्यं भोजयित्वा यथाशक्त्या चा

र्थाय दक्षिणां दत्वा गृहमाव्रजेत् ॥ इति   भाद्र शुक्ला तृतीया हरितालिका ॥ सा मुहूर्तमा-
त्रापि पूर्वैव ॥ मुहूर्तमात्रसत्वेऽपि दिने गौरी व्रतं परेति ॥ माधवः ॥ द्वितीयां शेषसंयु-
क्तां या करोति विमोहिता ॥ सा वैधव्यमवाप्नोति प्रवदंति मनीषिणः ॥ आपस्तंबः ॥
आषाढी मधुश्रावणिका कज्जली हरितालिका ॥ चतुर्थीमिश्रिता स्त्रीभिर्दिवा नक्तं वि-
धीयते ॥ तृतीया नभसः शुक्ला मधुश्रावणिका स्मृता ॥ भाद्रस्य कज्जली कृष्णा शु-
क्ला तु हरितालिका ॥ इति दिवोदासीये ॥ तस्यां गौरीमूर्तिं विधाय संपूज्य गुडापूपनैवेद्यं
दद्यात् ॥ भविष्येऽपि ॥ गुडापूपास्तु दातव्या मासि भाद्रपदे तथा ॥ तृतीया शुक्लपक्षस्य
सर्वपापहरा स्मृता ॥ माघशुक्लतृतीयायां गुडस्य लवणस्य च ॥ दानं श्रेयस्करं राजन्
स्त्रीणां च पुरुषस्य च ॥ गुडेन तुष्यते देवी लवणेन स्वयं शिवः ॥ अत्र तृतीया चतुर्थी
युतैवेति सिद्धांतः ॥ इति तृतीयानिर्णयः ॥ अथ चतुर्थी निर्णीयते ॥ साचोपवासादिषु गणेश-
चतुर्थी कुंड चतुर्थी बहुला चतुर्थी व्रतव्यतिरिक्तेषु पंचमी युतैव युग्मवाक्यात् ॥ अथ-

चैत्र शुक्ल चतुर्थ्यां ॥ गणेशं लड्डुकादिभिरभ्यर्च्य सर्वान्कामानवाप्नोति ॥ देवीपुराणे ॥ मा-
घेशुक्ले कारयेत्पूजां लड्डुकादिभिरादरात् ॥ चतुर्थ्यां विघ्ननाशाय सर्वकामसमृद्धये ॥
स्त्रीभिर्ज्येष्ठ शुक्ल चतुर्थ्यामुमा पूज्या ॥ ब्रह्मपुराणे ॥ ज्येष्ठ शुक्ल चतुर्थ्यां तु जाता पूर्वं मु-
मासती ॥ तस्मात्सां तत्र संपूज्या स्त्रीभिः सौभाग्य वृद्धये ॥ जप होमैश्च विविधैर्गीत नृ-
त्योत्सवादिभिः ॥ होमैः पयोभिर्वस्त्रैश्च पत्र पुष्पैः सुगंधिभिरिति ॥ श्रावण कृष्ण चतुर्थी
संकष्ट चतुर्थी सा चंद्रोदय व्यापिनी ॥ स्कांदे ॥ श्रावणे बहुले पक्षे चतुर्थ्यां च विधूदये
॥ तस्मिन्दिने व्रतं कार्य्यं संकष्टाख्यं सुरेश्वरि ॥ इति दिन द्वयेतद्व्याप्तावव्याप्तौ पूर्वैव
मातृविद्धा गणेश्वर इति वाक्यात् ॥ अथ भाद्र शुक्ल पक्ष चतुर्थी शिवाख्या ॥ तत्र स्नान दाना-
दिकं गणेश पूजनं च ॥ भविष्यत् पुराणे सान्निधा भविष्ये ॥ शिवा शांता सुखा राजन् चतु-
र्थी त्रिविधा स्मृतेति ॥ भाद्रे शुक्ले शिवा माघे शांता शुक्ल चतुर्थिका ॥ भौमवार यु-
ता सा चेत्सुखा नाम प्रकीर्तिता ॥ रविवार युता सा हि प्रोक्ता महाचतुर्थिका ॥ गणे॰

दा व्रतेतु ॥ पूर्वैव चतुर्थी तु तृतीयायां महा पुण्य फल प्रदा ॥ कर्तव्या व्रतिभिर्वत्स गण-
नाथ सुतोषिणीति ॥ गोविंदार्णवे ॥ नाग व्रतेतु मध्यान्ह व्यापिन्येव ॥ युगं मध्य दिने यत्र
तत्रोपोष्य फणी श्वरान् ॥ क्षीरेण स्नाप्य पञ्चम्यां पूजयेत्प्रयतो नर इति ॥ देव लोके ॥ भाद्र
कृष्ण चतुर्थी बहुला सा पूर्वैव ॥ भाद्र शुक्ल चतुर्थी मध्यान्ह व्यापिनी ॥ पूर्वोत्तर दिने मध्या-
न्ह व्याप्तौ पूर्वैव ॥ माधवीये बृहस्पतिः ॥ चतुर्थी गण नाथस्य मातृ विद्धा प्रशस्यते ॥
मध्यान्ह व्यापिनी चेत्स्यात् परा चेत्पर ऽह नि ॥ भाद्र शुक्ल चतुर्थ्यां चन्द्र दर्शनं नि-
षिध्यते ॥ तदाह मार्कण्डेयः ॥ भाद्रे मासि सिते पक्षे चतुर्थी स्यात्तु योगिनी ॥ मिथ्याभि
शापं कुरुते तस्मात् पश्येन्न तं सदा ॥ प्रमादाद्दृष्टान दोष शांतये विष्णु पुराणोक्तं मंत्रं-
जपेत् ॥ सिंहः प्रसेन मवधीत्सिंहो जाम्बवता हतः ॥ सुकुमारक मारोदीस्तवह्येष स्य-
मन्तकः ॥ माघ शुक्ल चतुर्थी तिल चतुर्थी ॥ सा प्रदोष व्यापिनी ॥ काशी खंडे ॥ माघ शुक्ल
चतुर्थ्यां तु नक्त व्रत परायणाः ॥ ये त्वां ढुंढे ऽर्चयिष्यंति ते ऽर्च्याः स्युर सुर सुराम् ॥

विधाय वार्षिकीं यात्रां चतुर्थी प्राप्य तापसी ॥ शुक्लान् तिलान् गुडे बध्वा ब्राह्मणीभ्यो ल
डुकान्ददौ ॥ तापसी माघीम् ॥ अत्रैव सदाशिवं कुंद पुष्पैरभ्यर्च्य लक्ष्मीं प्राप्नोति ॥
कौमुद्यथा ॥ कुंभे शुक्ल चतुर्थ्यां तु कुंद पुष्पैः सदाशिवम् ॥ संपूज्य व्रतोहि नक्ताशी संप्रा
प्नोति श्रियं नरः ॥ इयमेव कुंड चतुर्थी ॥ माघ मासे तु संप्राप्ते चतुर्थी कुंड संज्ञका ॥ सा तु
पोष्या सुरश्रेष्ठ ततो राज्यं भविष्यति ॥ इति चतुर्थी निर्णयः ॥ अथ पंचमी निर्णयः ॥ सा तु पं
चमी चतुर्थी युतैव ग्राह्या पवासादिषु ॥ यदाह जावालिः ॥ प्रतिपत्पंचमी चैव उपोष्या
पूर्वसंयुता ॥ चैत्र शुक्ल पंचम्यां नागान्पूज्य क्षीरादि नैवेद्यं देयम् ॥ देवी पुराणेऽपि ॥ पं
चम्यां पूजयेन्नागाननंताद्यान्महोरगान् ॥ क्षीरं सर्पिस्तु नैवेद्यं देयं सर्वसुखावह
म् ॥ नागस्वरूपं मात्स्ये ॥ नागाश्चैव तु कर्तव्याः खड्ग खेटक धारिणः ॥ अधस्सर्पाकृति
स्तेषां नाभेरूर्ध्वं तु पौरुषी ॥ फणाश्च मूर्ध्नि कर्तव्या द्विजिह्वा बहवः समाः ॥ विषमे दि
या व्रत ॥ श्रावण शुक्ल पंचमी नाग पंचमी ॥ नाग पंचमी सा पर विद्धा ॥ चमत्कार चिंतामणौ ॥

पंचमी नाग पूजायां कार्य्या षष्ठी समन्विता ॥ इति ॥ तस्या मपि नाग पूजा श्रावणशु-
क्ल पंचम्यां गोमयेन द्वारस्यो भयोः पार्श्वयोः ॥ नागान् विलिख्य ॥ दधि दूर्वांकुर पु-
ष्पैः संपूज्य नाग प्रीतये ब्राह्मणान् भोजयेत् ॥ तस्य सर्प भयं न भवति ॥ भविष्ये ॥ वि-
शेष फल मन्वेषणीयम् ॥ भाद्र शुक्ल पंचमी ऋषि पंचमी ॥ सा च मध्यान्ह व्यापिनी ॥ हा-
रीतः ॥ पूजा व्रतेषु सर्वेषु मध्यान्ह व्यापिनी तिथिः ॥ वेदीं सम्यक्प्र कुर्वीत गोमये नो-
पलेपिताम् ॥ रंगा वलि समा युक्तां नाना पुष्प समन्विताम् ॥ तत्र सप्त ऋषीन् दिव्या
न्भक्ति युक्तः प्रपूजयेत् ॥ अर्घं च दद्यात् ॥ तत्र मंत्रः कश्यपो ऽत्रि भरद्वाजो विश्वा मि-
त्रो ऽथ गौतमः ॥ यम दग्नि र्वशिष्ठ श्च सप्तै ते ऋषयः स्मृताः ॥ सप्त ऋषी न्पूज्या कृष्ट
भू म्युत्पन्न शाका हारेणो पोष्य सप्त वर्षाणि व्रत माचरेत् ॥ सर्व पाप विनिर्मुक्तः ॥
सर्वा न्का मान वाप्नोति ॥ अथाश्विन शुक्ल पंचमी ॥ तत्र नागां कुश मय मिंद्राणी सहितं घृ-
तादि भिः स्नापयित्वा संपूज्य नैवेद्यं दद्यात् ॥ तथा च भविष्ये ॥ तथा चाश्व युजे मा सि-

पंचम्यां कुरुनंदन कृत्वा कुशमयं नागं मिंद्राण्या सह पूजयेत् ॥ घृतोदकेन पयसा स्ना-
पयित्वा विशांपते ॥ गोधूमैः पयसा सिक्तैः भक्ष्यैश्च विविधैस्तथा ॥ पूजयेत्कुरुशार्दूल त-
स्यां शेषाद्यैर्नृप ॥ नागाः प्रीता भवंतीह शांति माप्नोति वै प्रभो ॥ इति ॥ माघ शुक्ल पंचमी
श्रीपंचमीत्युच्यते ॥ तत्र च मदन पूजा ॥ वसंतोत्सवश्च ॥ तदेव पुराणसमुच्चये ॥ माघमासे नृप
श्रेष्ठ शुक्लायां पंचमी तिथौ ॥ रति कामौ तु संपूज्य कर्त्तव्यस्तु महोत्सवः ॥ दानानि च प्र-
देयानि तेन तुष्यति माधवः ॥ इति वसंतपंचमी ॥ एवमुक्तासु सर्वासु पंचमीषु ति-
थि पतित्वेन नागा एव पूज्याः ॥ इति पंचमी निर्णयः ॥ अथ षष्ठी निर्णीयते ॥ सा तु स्कंद व्र-
तादन्यत्र परैव युग्म वाक्यात् ॥ अतः सप्तमी विद्धैव ॥ तथाच बृहस्पतिः ॥ नाग विद्धां
तु यां षष्ठीमुपोष्यंति हि मानवाः ॥ इह लोकेऽपि संतानं तेषां नश्यंति पूर्वजैः ॥ अतः
नाग विद्धा न कर्त्तव्या षष्ठी चैव कदाचन ॥ अत्र परमुहूर्त्तोत्तमो वेधः ॥ नागो द्वादश
नाडीभिर्दूषयत्युत्तरां तिथिम् ॥ तेन परमुहूर्त्तन्यून पंचमी योगो पूर्वैव ॥ आषाढ शुक्ल-

षष्ठी सा पूर्वा ॥ स्कांदे ॥ कृष्णा षष्ठी स्कंद षष्ठी शिव रात्रिश्चतुर्दशी ॥ एताः पूर्वयु-
ताः कार्यास्तिथ्यन्ते पारणं भवेदिति ॥ अत्र पंचम्यामुपोष्य कुमारः पूज्यः ॥ तथावाराहे
॥ आषाढे शुक्ल षष्ठी तु तिथिः कौमारिका स्मृता ॥ कुमार मर्चयेत्तत्रो पोष्य पूर्वंतु पं-
चमीम् ॥ सूर्य मेव सूर्य षष्ठी ॥ अत्र स्नात्वा भास्करं पूज्य गव्यं प्राश्य महाफलं प्राप्यते ॥
शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्कर पूजनम् ॥ प्राशनं पंचगव्यस्य अश्वमेध फल प्रद मिति
॥ भाद्रपद षष्ठी कृष्ण कपिला ॥ भौमे रोहिणी व्यतीपात योग युक्ता ॥ तत्र भास्कर पूज यि-
त्वा विप्राय कपिलां दद्यात् ॥ पुराण समुच्चये ॥ भाद्रे मासि सिते पक्षे भानौ चैव करे स्थिते
॥ पातेषु चैव रोहिण्यां सा षष्ठी कपिला भवेदिति ॥ भाद्र कृष्ण षष्ठी चांद्रमासेनेत्यर्थः
॥ भाद्र कृष्ण षष्ठी चंद्र षष्ठी ॥ सा चंद्रोदय व्यापिनी ग्राह्या ॥ उभयत्र चंद्रोदय व्यापि-
न्यां पूर्व विद्धैव ॥ यदुक्तं ॥ नष्टाद्भाद्र पदे मासि षष्ठ्यां पक्षे शिते नरे ॥ चंद्र षष्ठी व्रतं कुर्या-
त पूर्व वेधः प्रशस्यते ॥ चंद्रोदये यदा षष्ठी पूर्वान्हे चापरे हनि ॥ चंद्र षष्ठ्या शिते पक्षे

सैवो पोष्या प्रयत्नेन इति ॥ सैव हल षष्ठी ॥ सा सप्तमी युतेति दिवो दासः ॥ अथाश्विन शु-
क्ल पंचम्यां देव्याः स्नापितायाः ॥ सप्तम्यां पूजार्थं षष्ठ्यां । ज्येष्ठा नक्षत्र युक्तायाम सं-
भवे केवलायां वृक्षनि मंत्रण कार्य्यम् ॥ तत्रायं मंत्रः ॥ ॐ रावणस्य वधार्थाय रामस्या-
नुग्रहाय च ॥ अकाले ब्रह्मणा वेधो देव्यास्त्वयि ततः पुरा ॥ श्री शैल शिखरे जातः
श्रीफल श्रीनिकेतन ॥ नेतव्योम सुआगच्छ पूज्यो दुर्गा स्वरूपतः ॥ इति ॥ अथ कार्त्ति-
क शुक्ल षष्ठी ॥ तत्र भौम युतायां वन्हिं संपूज्य वन्हि महोत्सवं कार्य्यम् ॥ तदेव मात्स्ये
वृश्चिकार्के शुक्ल षष्ठी भौम वारेण संयुता ॥ महाषष्ठी तु सा प्रोक्ता सर्व पाप हरा तिथिः
तस्यां स्वपिति वै वन्हिः पूर्वन्तो पोष्य वै दिने ॥ षष्ठ्यां वन्हिं सम भ्यर्च्य कुर्य्याद्वन्हि
महोत्सवम् ॥ इति वृश्चिकार्के कार्तिके मासी तिकाला दर्शे ॥ अथ मार्गशिर शुक्ल ष-
ष्ठी ॥ तस्यां तारकं स्कंदो हतवान् ॥ अतः स्कंदं संपूज्य दानादि कृत मक्षयं भवति ॥
भविष्ये ऽपि ॥ षेयं मार्गशिरे मासि षष्ठी भारत सत्तम ॥ पुण्या पापहरा धन्या शिवा-

रि



शांता शुद्ध क्रिया ॥ स्नान सनादि कं कर्म्म तस्या मस्तय मस्तुने ॥ इति षष्ठीनिर्णयः ॥ अथ
सप्तमीनिर्णीयते ॥ सप्तमी षष्ठी युतै वो पवासादिषु ग्राह्या ॥ युग्म वाक्यात् ॥ भविष्ये ॥ षष्ठी
समेता कर्तव्या सप्तमी नाष्टमी युता ॥ पतंगो पासनायेह षष्ठ्या माहुरुपोषणम् ॥ पतं
गः सूर्यः ॥ पुराणांतरेऽपि ॥ षष्ठ्याश्चैक कलायत्र तत्र संनिहितो रविः ॥ तत्र ऋतु प्रतं पु
राय मष्टम्यां पारणेन च ॥ षष्ठी च सप्तमी चैव रात्रि शेषे यदाष्टमी ॥ त्रिस्पृशा नाम
सा ज्ञेया त्रिस्पृशैका दशी यथा ॥ पूर्वविद्धैव कर्तव्या सप्तमी व्रतिभिर्न्नरै रि-
ति ॥ अतः सप्तमी षष्ठी युते वेति सिद्धांतः ॥ अथ चैत्र शुक्ल सप्तमी सूर्यपूजा ॥ दमनकादि
भिः कार्या ॥ देवीपुराणे ॥ भास्करस्य तु सप्तम्यां पूजा दमन कादिभिः ॥ कृत्वा प्राप्नो-
ति भोगा ही न्विग तारि र्म्मी हा तयाः ॥ वैशाख शुक्ल सप्तम्यां ॥ गंगा पूजोक्ता ॥ तथा ब्रह्मे वैशा-
खे शुक्ल सप्तम्यां जन्हुना जान्हवी स्वयम् ॥ क्रोधा त्पीता पुनस्त्यक्ता कर्ण रंध्रा तु दक्षिणात्
॥ तां तत्र पूजये द्देवीं गंगां गगन मेखलामिति ॥ इयं पूर्वान्ह व्यापिनी ॥ अत्रैव निंबसप्तमी

४५

व्रतं कुर्यात् ॥ भविष्येऽपि ॥ तृतीयां सप्तमीं वीर त्वच्चतुर्थ्या प्रियो मम ॥ निंब पत्रैः स्नात्वा
यातु पापघ्नी शोक नाशिनी ॥ अथाषाढ शुक्ल सप्तमी ॥ तत्र सूर्यं वर्तुलं मंडले रक्त गंध पु-
ष्पादिभिः पूज्य नैवेद्यादीनर्पयेत् ॥ तदुक्तं भविष्यपुराणे ॥ आषाढ शुक्ल सप्तम्यां विवस्वान्ना-
म भास्करः ॥ जातः पूर्वं सुत स्मात्तां तत्रोपोष्य यजेत्सदा ॥ रथ चक्राकृतौ रम्ये मंडले तत्र का-
मदम् ॥ भक्ष्यैर्भोज्यैस्तथा पेयैः पुष्पैर्धूपैर्विलेपनैरिति ॥ अथाश्विन शुक्ल सप्तमी ॥ देवी पूजा-
यां पर युता ग्राह्या ॥ तथाच भविष्ये ॥ युगाद्या वर्ष वृद्धिश्च सप्तमी पार्वती प्रिया ॥ रवेरुदयमी-
क्षन्ते न तासु तिथि युग्मता ॥ वर्ष वृद्धिर्जन्म तिथिः ॥ अत्रैव मूल युक्तायां केवलायां वा पं-
चम्यां स्थापितां देवीं बिल्वादिभिः पूजयेत् ॥ अत्रैव पुस्तक स्थापन मुक्तम् ॥ मूल ऋक्षे
सुराधीश पूजनीया सरस्वती ॥ पूजये त्वामहं देवि यावदुत्सव मुक्तकम् ॥ नाध्यापयेन्न च
लिखेन्नाधीयीत कदाचन ॥ पुस्तके स्थापिते देवि विद्या कामो द्विजोत्तम ॥ इति ॥ मार्गशु-
क्ल सप्तमी मित्र सप्तमी ॥ तत्र पूर्व दिने उपोष्य कृत वपनः स्नात्वा ॥ रविं संपूज्य ॥ पश्चाद्ब्राह्म-

शान्भोजयेत् ॥ स्वयं सप्तम्यामष्टम्यां च मधुमुत्तमिष्टान्नं भुंजीत ॥ अथ माघशुक्लास्य सप्तमी ॥ अस्यां स्नान फलं महदिति विसूक्तेः । सेवाचला सप्तमी ॥ जयंती च ॥ तदुक्तं भविष्ये ॥ माघस्य शुक्ल पक्षे तु सप्तमी या त्रिलोचन ॥ जयंती नाम सा प्रोक्ता सर्व पाप हरा तिथिरिति ॥ स्मृति चंद्रिकायामपि ॥ सूर्य्य ग्रहण तुल्या च शुक्ला माघस्य सप्तमी ॥ अरुणोदय वेलायां तत्र स्नानं महा फलम् ॥ अस्यामेव सूर्य्य पूजा ॥ माघे मासि सिते पक्षे सप्तमी कोटि भास्करा कुर्य्यात्स्नाना र्घदानाभ्यामायुरारोग्य संपदः ॥ इति अर्घदान मंत्रश्च ॥ यद्यज्जन्म कृतं पापं मया जन्मसु सप्तसु ॥ तन्मे रोगं च शोकं च भास्करी हंतु सप्तमी ॥ इयमेव पुन्नामनक्षत्रेण रवि वारेण च युक्ता महती ॥ तत्र सूर्य्यमर्च्चयेत् ॥ तदाह गर्गः ॥ रवि वारेण युक्तायां सप्तम्यामुत्तरायणे ॥ पुन्नामध्येय नक्षत्रे पूजयेच्च दिवाकरम् ॥ पुंनाम नक्षत्राणि गर्गणोक्तानि ॥ पुन्नाम श्रवणाषाढौ तिष्यो हस्त पुनर्वसू ॥ मूलं प्रोष्ठपदं चानुराधा मृगशिराश्विनी ॥ अत्र गंगा स्नाने फलाधिक्यम् ॥ तथा च मात्स्ये ॥ अरुणोदय वेलायां शुक्लां माघस्य सप्तमीम् ॥

गंगायां यदि लभ्येत सूर्य्यपर्वशताधिका ॥ अन्यत्रापि ॥ सोमवारे त्वमावास्या भानुवारे च सप्तमी अंगारके दिने प्राप्ता चतुर्थी या चतुर्दशी ॥ षष्ठिवर्षसहस्राणि गंगास्नाने लभे ते फलम् ॥ षष्ठी च सप्तमी योगे वारश्चेदंशुमालिनः ॥ योगोऽयं पद्मको नाम सहस्रार्कग्रहैः समम् ॥ इति ॥ इति सप्तमीनिर्णयः ॥ अथाष्टमी निर्णीयते ॥ सा कृष्णा पूर्वा शुक्ला परा शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ॥ पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुतेति नैगमात् ॥ कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ॥ पूर्वविद्धैव कर्त्तव्या परविद्धा न कुत्रचित् ॥ इति भविष्ये ॥ उक्तव्रतादन्येषु सप्तमीयुतैवेत्यविरोधः ॥ ब्रह्मपुराणे ॥ अष्टम्या नवमीयुक्ता नवम्या चाष्टमीयुता ॥ अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥ अष्टम्यां प्रार्थ्यते रुद्रो नवम्यां शक्तिरुच्यते ॥ द्वयोर्योगे तु संप्राप्ते पूजायां तु महाफलम् ॥ अथ चैत्रशुक्लाष्टमी अशोकाष्टमी ॥ तस्यां पुनर्वसुयुतायाम शोकाष्टौ कलिकाः प्राश्याः ॥ तदुक्तं लिंगपुराणे ॥ अशोककलिकाश्चाष्टौ ये पिबंति पुनर्वसौ ॥ चैत्रे मासि सिताष्ट-

स्यां नते शोक मवाप्नुयुरिति ॥ प्राशन मंत्रश्च ॥ त्वामशोकनराभीष्ट मधुमाससमुद्भव ॥
पिबामि शोक संतप्तो मामशोकं सदा कुरु ॥ अत्र देव्या महापूजापि कार्य्या ॥ तदुक्तं मार्क-
ण्डेये ॥ शरत्काले महापूजा क्रियते या च वार्षिकी ॥ वार्षिकीत्यनेन संवत्सरस्यादौ चैत्र
शुक्लाष्टमी पर्यंतं क्रीयमाणा पूजा विधीयते ॥ अतश्च शरद्वसंतयोरपि तु
ल्यएव दुर्गोत्सवः कार्य्यः ॥ अथ वैशाख शुक्लाष्टमी ॥ तस्यां सुपोषितः आम्र फलरसेन स्ना-
त्वा अपराख्यां देवीं मांसी वालक वारिभि स्नापयेत् ॥ पुनः शर्करा क्षीर नैवेद्यं ब्राह्म-
णान् कुमारीं भोजयित्वा पारणं कुर्य्यात् ॥ देवीपुराणे ॥ सहकार फलैः स्नानं वैशाखे
ष्टमी दिने ॥ आत्मनो देवतां स्नाप्य मांसी वालक वारिभिः ॥ लेपनं फलकर्पूर धूपं
चैव प्रदापयेत् ॥ शर्कराक्षीर नैवेद्यं कन्या विप्र सुभोजनम् ॥ आत्मनः पारणं तद्द
क्षिणां शक्तितो ददेत् ॥ सर्वतीर्थाभिषेकं सप्तनेनाप्नोति भार्गव ॥ इति अथ ज्येष्ठ
शुक्लाष्टमी ॥ तत्र शुक्लां देवीं पूजयेत् ॥ तदुक्तं ब्रह्मांडे ॥ शुक्लाष्टम्यां पुराजाता शुक्ला दे-

वी महाप्राना ॥ चधाय दान वेंद्राणां शुक्ल पक्षे ततो यज्ञे दिति ॥ अथा भाद्र शुक्लाष्टमी ॥ त-
तो पोषितः॥ हरिद्रा तोयेन स्नात्वा महिषघ्नी नाम्नी देवीं तेनैव स्नापयित्वा ॥ पूजाका-
र्या ॥ यदुक्तं देवी पुराणे ॥ अष्टम्यां च यदा भाद्रे निम्नगा तोयेन मानवाः ॥ स्वयं स्नात्वा च
कर्प्पूरै र्भवं स्नैस्तां विलेपयेत् ॥ धूप चंदन कर्प्पूरै र्वालकैः घृत सिल्हकैः ॥ भक्ष्यां
श्च शर्करा पूर्णान् पान कानि शुभा निच ॥ दापये त्कन्यका विप्र भोजनं चात्मन-
स्तथा ॥ शक्तितो दक्षिणां दद्यात् महिषघ्नी च कीर्त्तयेत् ॥ दीप माला कृते नैव सर्वा-
न्कामा न्नयच्छति ॥ अथ भाद्र कृष्णाष्टमी ॥ साद्विधा अष्टमी जयंती च ॥ सा चार्द्ध रात्र-
व्यापिनी ॥ विष्णुधर्मोत्तरे ॥ रोहिणी सहिता कृष्णा मासि भाद्र पदेऽष्टमी ॥ सप्तम्या मर्द्ध-
रात्राधः कलया पि यदा भवेत् ॥ अत्र जातो जगन्नाथः कौस्तुभी हरि रीश्वरः ॥ तमेवो-
पवसे त्कालं तत्र कुर्य्याच्च पारणम् ॥ अर्द्ध रात्रे तु योगो ऽयं तारा पत्युदये सति ॥ वशिष्ठोऽ-
पि ॥ अष्टमी रोहिणी युक्ता निश्यर्द्धे दृश्यते यदि ॥ मुख्य कालः स विज्ञेय स्तत्र जातो हरि-

स्वयमिति ॥ एवं चर्क्षेऽहुःपरे पूर्वे वा निशीथ व्याप्ती कर्म्म काल व्याप्ता व्याप्तौ सैव ॥ द्विन द्वये व्या-
प्ताव्याप्तौ तु परैव ॥ संकल्प काले सत्वाधिक्याच्च ॥ ब्रह्मवैवर्त्तेऽपि ॥ वर्ज्जनीया प्रयत्नेन सप्त-
मी संहिता ष्टमीति ॥ एवं रोहिण्यापि ॥ यदि पूर्वेद्युरेव निशीथ योगस्तदा सैवो पोष्या ॥ का-
र्यो विद्धापि सप्तम्यां रोहिण्या सहिता ष्टमीति पाद्मात् ॥ इति मदनरत्नादिमार्गः ॥ वयं त्वालो-
चयामः ॥ सप्तमी विद्धा सर्वथैव वर्ज्जन प्रयोजिका ॥ वर्ज्जनीया प्रयत्नेनेत्युक्त वाक्य-
त् कार्य्या विद्धापि सप्तम्येति ॥ पाद्मं तु ॥ यत्र सप्तम्या मेव संपूर्णो रोहिणी योगस्तद्वि-
षयं यत्र तु अष्टम्यां मुहूर्त्तमपि रोहिणी तदा सैव ग्राह्या ॥ तदुक्तं ब्रह्मवैवर्त्ते ॥ वर्ज्जनीया
प्रयत्नेन सप्तमी सहिता ष्टमी ॥ सऋक्षापि न कर्त्तव्या सप्तमी सहिताऽष्टमीति ॥
॥ स्कांदे ॥ सप्तमी सहिता ष्टम्यां भूत्वा ऋक्षं द्विजोत्तमः ॥ प्राजापत्यं द्वितीयेऽह्नि मु-
हूर्त्तार्द्धं भवेद्यदि ॥ तदाष्टया मिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा ॥ पाद्मेऽपि ॥ मुहूर्त्तेनापि
संयुक्ता संपूर्णा साष्टमी भवेत् ॥ किं पुनर्नवमी युक्ता कुल कोटि विमुक्तिदा ॥ ननु क-

र्म कालस्य प्राबल्यात्पूर्वेद्युरेव ॥ निशीथव्याप्तौ सैव ग्राह्या मैवम् ॥ तस्याः प्रातिपदि-
क प्रत्यक्षेणाबाधात् ॥ तथाहि ॥ विष्णुरहस्ये प्राजापत्यर्क्षसंयुक्ता कृष्णेनभसि चाष्टमी ॥ मु-
हूर्तमपि लभ्येत सैवोपोष्या महाफला ॥ वन्हिपुराणे ॥ कृष्णाष्टम्यां भवेद्यत्र कलैका रो-
हिणी स्मृता ॥ जयंती नाम सा प्रोक्ता उपोष्या सा प्रयत्नतः ॥ स्कांदे ॥ उदये चाष्टमी किंचि-
न्नवमी सकला यदि ॥ भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ॥ अपि वर्षशतेनापि
लभ्यते यदि वा न वेति ॥ ननु उदये चाष्टमी किंचिदिति स्कंदवाक्यादुदयशब्देन चं-
द्रोदयो ग्राह्यः ॥ तारापत्युदये सतीति मूलकल्पनालाघवादिति चेन्न ॥ उदयप्रा-
देन सूर्यातिरिक्तोदयपरतायाः क्वाप्यदृष्टत्वात् ॥ किंचैवं निशीथे चाष्टमी किंचिदिति
वाक्यात् ॥ अपिच ॥ उदयशब्दस्य चंद्रोदयपरत्वे तदानीमष्टम्याः ॥ कर्मकालव्याप्त-
त्वेन निसंदिग्धतया तस्मिन्नेव वाक्ये नवमी सकला यदीत्युक्तेर्वैयर्थ्यापत्तेः ॥ नच रो-
हिणीयोगस्य बुधयोगवत्प्राशस्त्यमात्रपरता ॥ अन्यथा समानवाक्योपात्तत्वात् ॥

कदाचिद्रोहिणीयोगाभावेन ॥ बुधयोगे नैवोत्तरार्द्धे ग्रहणापत्तेरिति वाच्यम् ॥ प्राजापत्ये

द्वितीये न्हि मुहूर्त्तार्द्धे भवेद्यदीति ॥ स्कांदे ॥ वाक्येन ग्रहणप्रयोजकत्वावगमात् ॥ सप्त-
म्यापि न कर्त्तव्या रोहिणी सहिताष्टमीति ब्रह्मवैवर्त्तवाक्येन सप्तम्यापी त्युक्ता ॥ अष्ट-
म्या यागस्य निर्णीय कत्वावगमाच्च ॥ भवेत्तु बुध संयुक्ते ति स्कंद वाक्ये तु संभावार्थ लिङ्
लकारेण तु शब्देन च प्राशस्त्य परतया स्फुटं प्रतीते रिति दिक् ॥ इदं च व्रतं नित्यम् ॥ जन्मा-
ष्टमी दिने प्राप्ते येन भुक्तं द्विजोत्तम ॥ त्रैलोक्य संभवं पापं तेन भुक्तं न संशय इति स्कांदे
नदकरणे प्रत्यवाय श्रवणात् ॥ भविष्ये ॥ श्रावणे बहुले पक्षे कृष्ण जन्माष्टमी व्रतम्
न करोति महाप्राज्ञ व्यालो भवति कानने ॥ व्रत शब्देनापि पूजा गृह्यते ॥ तत्रैव ॥ अर्द्ध
रात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् ॥ तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥
ब्रह्मवैवर्त्तेऽपि ॥ अष्टम्यामथ रोहिण्यां न कुर्य्यात्पारणं क्वचित् ॥ हन्यात्पुराकृतं कर्म्म
उपवासार्जितं फलम् ॥ तस्मात्प्रयत्नतः कुर्य्यात्तिथि भांते च पारणम् ॥ उभयान्तोसु-

मुख्यः कल्पः ॥ एकतरस्तु गौणः ॥ ब्रह्मवैवर्त्ते ॥ सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ॥ इति अथ भाद्रशुक्लाष्टमी ॥ दूर्वाष्टमी सा शुक्लापि पूर्वविद्धैव ॥ भविष्येऽपि ॥ शुक्लाष्टमी-तिथिर्य्यातु मासि भाद्रपदे भवेत् ॥ दूर्वाष्टमीतु साज्ञेया नोत्तरा सा विधीयते ॥ इदं च व्रतं भाद्रशुक्ले अगस्त्योदय संभावनायां भाद्रकृष्णे एव कार्य्यम् ॥ तथा स्कांदे ॥ शुक्ले भाद्रपदे मासि दूर्वा सञ्ज्ञा तथाष्टमी ॥ सिंहार्के सा च कर्त्तव्या न कन्यार्के कदाचन ॥ सिंहस्थे-सोत्तमा सूर्य्ये ऽनुदिते मुनिसत्तमे ॥ अगस्त्याभ्युदिते पूजायां दोषस्तत्रैवोक्तः ॥ अगस्त्य उदिते तात पूजयेद्यस्तु तोद्भवाम् ॥ वैधव्यं पुत्रशोकं च दश जन्मनि पंच च ॥ दूर्वाष्टमी सदा त्याज्या ज्येष्ठा मूलर्क्षसंयुता ॥ परविद्धा यथा कृष्णा मुनिश्रेष्ठा तथाऽब्रवीत् ॥ ऐन्द्रर्क्षे पूजिता दूर्वा हंत्यपत्यानि नान्यथा ॥ भर्त्तुरायुर्हरा मूले तस्मात्तां परिवर्ज्जयेत् ॥ अत्र प्रतिवर्षमपूजने दूर्वाया वैधव्यादि दोषा विहिताः ॥ यदा पुनर्ज्येष्ठादि विरहोन-संभवति ॥ तदा दूर्वामभ्यर्च्यैकभक्तं कार्य्यम् ॥ तदुक्तम् ॥ मुहूर्त्ते रौहिणेऽष्टम्यां दूर्वा वा-

यदिवा परा ॥ दूर्वाष्टमी तु सा कार्य्या ज्येष्ठा मूलं तु वर्ज्जयेत् ॥ रौहिणो नवमो मुहूर्तः ॥ पर
विद्धा निषेधे ऽपि यदि वा परेति पर विद्धा विधानं पूर्वस्यां ज्येष्ठा मूल युक्तायां परस्यां
काल व्यापिन्यां परापि कार्य्येति ज्ञापनार्थम् ॥ अतश्चास्यां पूर्व विद्धायां ज्येष्ठा मूल रहि-
ताया मगस्त्या नुदये सिंह स्थे सवितरि दूर्वा मभ्यर्च्य अग्नि पक्व मन्नं भोक्तव्य मेवं कृते
॥ नारी सप्त जन्मनि पति पुत्र विरहं नाप्नोतीति दिक् ॥ अथाश्विन कृष्णाष्टमी ॥ तत्र दोष
चतुष्टय रहितायां महालक्ष्मी व्रतं कार्य्यम् ॥ तत्र चन्द्रोदय काल व्यापिन्यामेव ॥ चं-
द्रोदय एव पूजा द्यादि विधानात् ॥ सप्तमी पुष्य संयुक्ता कर्तव्या चाश्विनाष्टमी ॥ दुर्गो
त्सवे ऽसिते पक्षे वहुले श्रीव्रते शुभा ॥ तत्र सप्तमी संयुक्तेति विशेषणं वहुलास्तु स्याद-
व पुष्य संभवात् ॥ तथा ॥ अर्द्ध रात्र मतिक्रम्य वर्त्तते यो ऽष्टमी तिथिः ॥ तदा तस्यां तिथौ
कार्य्यं महालक्ष्मी व्रतं शुभम् ॥ पुत्रस्तत्समुद्भवे ऽपि ॥ पूजनीया प्रयत्नेन अष्टमी प्रार्थिषि
यः ॥ दोषैश्चतुर्भिस्त्वन्य का सर्व संपत्करी तिथिः ॥ दोषाश्च तन्त्रे वोक्ताः ॥ पुत्र सौभाग्य रा-

ज्यासुन्नीघिनी सा प्रकीर्त्तिता ॥ तस्मात्सर्वं प्रयत्नेन त्याज्या कन्या गते रवौ ॥ कन्या-
स्थरविनिषेधः ॥ प्रारंभ समये एव बोधव्यः ॥ तथान्त्रि दिने चाव मे चैव अष्टमी नोप-
वासयेत् ॥ पुत्रघ्नी नवमी विद्धा स्वघ्नी हस्तार्द्रगे रवौ ॥ धर्म्मघ्नी त्रिदिने प्रोक्ता त्याज्या चै-
न्नावमे सति ॥ स्वघ्नी धनहेति यावत् ॥ त्रिस्टग व मो पूर्वोक्तो वेव ॥ एतद्दोषवर्ज्जनमु-
पक्रमोद्यापनयोरेव प्रायेण ज्ञातव्यं ॥ अन्यथा षोडशवर्ष साध्य व्रतस्य अंतरा दो-
षसंभवे ऽकरणं प्रसज्जेत् ॥ अन्यदपि सति संभवे दोष वर्ज्जनम् ॥ न तु नियमेन तथा
चोक्तं शिवाऽर्चनं भाद्र पदे सिताष्टमी प्रारब्ध कन्याम गते च सूर्य्ये ॥ समापयेत्तत्र ति-
थौ च यावत् सूर्य्य श्च पूर्वार्द्ध गतो युवत्याः ॥ नवमी वेधनिषेधोऽपि परदिने चंद्रोदया-
र्द्ध्वांकु ज्ञेया ॥ चंद्रोदया दूर्द्ध्व गामिनी त्रिमुहूर्त्ताष्टमी चेत् ॥ त्रिमुहूर्त्त व्यापित्वे तू र्द्ध्वै-
व नवमी विद्धापि कार्य्या ॥ तदुक्तम् ॥ पूर्वा वा परा विद्धा वा ग्राह्या चंद्रोदये सति ॥ त्रिमुहू-
र्त्तापि सा पूज्या परतश्चोर्द्ध्व गामिनीति ॥ चंद्रोदया दूर्द्ध्व गामिनी त्रिमुहूर्त्ताष्टमी चेत्तदा-

परा कार्य्या न चेत्पूर्वैवेति ॥ इतिमहालक्ष्मीनिर्णयः ॥ अथाश्विनशुक्लाष्टमीनिर्णयः ॥ साच नव-
मी युते वदुर्गोपवासादिषु ग्राह्या ॥ सप्तमी विद्धातु न कार्य्या दोषश्रवणात् ॥ तदुक्तं ॥ पुत्रा-
न्हंति पशून्हंति हंति राष्ट्रं सराज कम् ॥ हंति जातान जातांश्च सप्तमी सहिताष्टमी
॥ तस्मात्सर्वप्रयत्नेन सप्तमीसल्य संयुता ॥ वर्ज्जनीयाष्टमी चैव भुवोराज्यमभीप्सुभिः
अन्यत्रापि ॥ मूलेनापिहि संयुक्ता सदा त्याज्याष्टमी बुधैः ॥ इत्यादि वाक्यैर्न्नवमी विद्धा-
ष्टमी कार्य्येति सिद्धम् ॥ यत्तुअहंभद्राच्च भद्राहं नाव योरं तरं क्वचित् ॥ सर्वसिद्धिं प्रदा-
स्यामि भद्रया मर्द्दिता प्यहम् ॥ भद्राया भद्रकाल्याश्च मध्ये स्याद्दर्शनं क्रिया ॥ तस्मात्
सप्तमी विद्धा कार्य्या दुर्गाष्टमी बुधैः ॥ इति ॥ विंशत्यष्टका महाष्टम्यां मम पूजां करोति यः
तस्या पूजा फलं न स्यात्तेनाहमवमानिता ॥ इत्यादि सप्तमीवेध विधायिक वाक्यं ॥ तत्तु
यत्र तिथि ह्रासात् द्वितीय दिने अष्टमी विरह स्तत्र साव कार्या ॥ तदुक्तं स्मृति संग्रहे ॥ यदासू
र्य्योदयेन स्यान्नवमी चापरे हनि ॥ तदाष्टमीं प्रकुर्वीत सप्तम्या सहितां नृपेति ॥ दुर्गोत्सवप्रकरणे

ऽपि ॥ उत्तरास्तिथयो यत्र क्षयं याति नराधिप ॥ पूर्वाष्टमी तदा कुर्य्याद् न्यथा त्वशुभं भवे-
दिति ॥ अन्यदपि ॥ सप्तम्यामुदिते सूर्य्ये परतश्चाष्टमी भवेत् ॥ तत्र दुर्गोत्सवं कुर्य्यान्न कु-
र्य्याद् परेहनि ॥ तथा ॥ यदाष्टमी तु संप्राप्य अस्तं याति दिवाकरः ॥ तत्र दुर्गोत्सवं कुर्य्या-
न्न कुर्य्याद् परेहनीति ॥ इत्यादिवाक्यानि ॥ मुनीनामनिर्द्दिष्टान्तरालिकानीति केचित् ॥
यदि तु प्रमाणानि तर्हि कृष्णपक्षाष्टमीविहितपूजाविषयाणि ॥ कृष्णपक्षेऽष्टमी चैवे-
ति पूर्ववाक्यसंबंधेनैवेति ॥ तस्यां देवीपूजा ॥ देवीपुराणे ॥ कन्यायां कृष्णपक्षे तु पूजयि-
त्वार्द्रभेऽपि च ॥ नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैरिति ॥ अत्र देवीपूजा दिवा-
रात्रावपि ॥ भविष्ये ॥ तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ॥ प्रादुर्भूता महाघोरा
योगिनीकोटिभिस्सह ॥ अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः ॥ तथा ॥ निशा-
यां पूजिता देवी वैष्णवी पापनाशिनी ॥ तस्मात्सर्वप्रयत्नेन नवम्यां निशि पूजयेत् ॥ अ-
थात्रैव कश्चिद्विशेषः ॥ आश्विनस्य सिते पक्षे प्रारब्धे नवरात्रके ॥ प्राक्सूत्रो सम्मुखनेक्षि

याकार्य्या कथं बुधैः ॥ इति मत्स्ये ॥ अस्योत्तरं ॥ विश्वरूपनिबंधे ॥ प्राव सूते समुत्पन्ने तत्रोत्सवो य-
द्रा भवेत् ॥ देवी पूजा प्रकर्त्तव्या पशु यज्ञ विधानतः ॥ देवी पूजारंभे अंतरा सूत के यातेऽपि
पूजादिन व रात्रं याव द्विधेयं स्वसारश्चेतु पर हू रेव ॥ अग्निहोत्रादि वत्कारयितव्यं ॥ इति अ-
थ कार्त्तिक शुक्लाष्टमी सा गोष्टाष्टमी ॥ तत्र गो पूजा कार्य्या ॥ कूर्म्म पुराणे ॥ शुक्लाष्टमी कार्त्तिके तु
स्मृता गोष्टाष्टमी बुधैः ॥ तत्र कुर्य्याद्गवां पूजां गोग्रासं गोप्रदक्षिणं ॥ गवानुगमनं कार्य्यं
सर्वान्कामान भीप्सतः ॥ इति अथ पौष शुक्लाष्टमी बुध युक्ता महाभद्रा ॥ तत्र महेश्वर पूजादिकं का-
र्य्यं यात्तदुक्तं भविष्ये ॥ पौषे मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् ॥ तदातु सा महा पुण्या महाभद्रे-
ति कीर्त्तिता ॥ तस्यां स्नानं जपो होम स्तर्प्पणं विप्र भोजनम् ॥ मत्प्रीतये महादेवि पूज्यो
ऽयं विधि वद्बुधै रिति ॥ माघ शुक्लाष्टमी भीष्माष्टमी ॥ तत्र भीष्म तर्प्पणं श्राद्धं च कार्य्यम् ॥ भी-
ष्म तर्प्पणे तु भीष्मस्य देवावतारत्वा द्ब्राह्मण स्याप्यधिकारः ॥ तथाच पाद्मे ॥ माघे मासि-
सिताष्टम्यां सतिलं भीष्म तर्प्पणम् ॥ श्राद्धं च येनरा कुर्य्युस्तेस्युस्संतति भागिनः ॥ ब्राह्मणा

घाश्च ये वर्णा दद्यु भीष्माय नो जलम् ॥ संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम ॥ तर्प्पणमं-
त्रस्तु ॥ ॐ भीष्मः शांतनवो वीरः सत्यवादी जितेंद्रियः ॥ आभिरद्भिरवाप्नोतु पुत्रपौत्रो-
चितां क्रियाम् ॥ वैयाघ्रपद गोत्राय सांकृत्य प्रवराय च ॥ अपुत्राय ददाम्येतज्जलं भी-
ष्माय वर्म्मणे ॥ वसूनामवताराय संतनोरात्मजाय च ॥ अर्घं ददामि भीष्माय आबाल
ब्रह्मचारिणे ॥ इदं च जीवत्पितृकोऽपि कुर्य्यात् ॥ अनेनैव तर्प्पणमर्घदानं च ॥ इति ॥
अथ फाल्गुनशुक्लाष्टम्यां ॥ लक्ष्मी सीता च पूज्या ॥ यद्देवान्नं ब्राह्मणेभ्यो दत्तं तदवशि-
ष्टमेव भोज्यं नान्यत् ॥ ब्राह्मे ॥ फाल्गुने शुभेऽष्टम्यां सुस्नातैश्च स्थलं कृतैः लक्ष्मी सी-
तां संपूज्या गंध माल्यादिभिस्सदा ॥ प्रदोषसमये दीपाः देया प्रशान सहस्रशः ॥ दत्त-
शिष्टं तदा भोज्यं भक्षितव्यं च बंधुभिः ॥ तस्यां संपूर्णायां यदा बुधवारो भवति तदैकभक्तं
कार्य्यम् ॥ तथाच भविष्ये ॥ यदा यदा सिताष्टम्यां बुधवारो भवेद्यदि ॥ तदा तदा हि संग्राह्या
एकभक्ता सने नृपः ॥ बुधाष्टमी तु संपूर्णा यथोक्तफलदायिनी ॥ अथ नियमानाह ॥ संध्य

काले तथा चैत्रे प्रसुप्ते च जनार्दने ॥ बुधाष्टमी न कर्तव्या हंति पुण्यं पुराकृतम् ॥ इति ॥ बु-
धाष्टमीनिर्णयः ॥ अथ नवमी निर्णीयते ॥ उपवासादिषु नवमी पूर्वयुतैव ग्राह्या ॥ स्मृतिवाक्या-
त् ॥ ब्रह्मवैवर्ते ॥ अष्टम्यां नवमी विद्धा कर्तव्या फलकांक्षिभिः ॥ न कुर्यान्नवमीं तात
दशम्यां तु कदाचन ॥ तथा ॥ नवमीं दशमीविद्धां ये कुर्वन्ति विमोहिताः ॥ वृथा सर्वम
वेतेषां बलिपूजाविधानकमिति ॥ अतो नवमी पूर्वविद्धैवेति सिद्धांतः ॥ अथ चैत्रशुक्लान-
वमी रामनवमी ॥ सा च मध्यान्हव्यापिनी ॥ दिनद्वये च व्याप्तौ व्याप्तौ च पुनर्वसुयुता ताद-
स्य पि च दिनद्वये परा । चैत्रे मासि नवम्यां तु शुक्लपक्षे रघूत्तमः ॥ पुनर्वस्वावि रासीत्यु-
रा ब्रह्मसकेवलम् ॥ उपोषणं जागरणं पितृनुद्दिश्य तर्पणम् ॥ तस्मिन्दिने तु कर्तव्यं
ब्रह्म प्राप्तिमभीप्सुभिः ॥ एतद्व्रताकरणे प्रत्यवाय श्रवणात्करणे फलश्रवणाच्च नित्यं का-
म्यं च ॥ सर्वं हृदये कुरुक्षेत्रे महादाने कृते मुहुः ॥ यत्फलं तदवाप्नोति श्रीरामनवमी व्रते ॥
कुर्यादूामनवम्यां तु उपोषणमतंद्रितः ॥ मातुर्गर्भं न चाप्नोति स च रामो भवेद्ध्रुवम् ॥ इत्या

दीनि बहूनि वाक्यानि अगस्त्य संहितायां मुक्तानि ॥ निंदाच ॥ योवै राम नवम्यां तु भुंक्ते मो हाद्विमूढधीः ॥ कुंभी पाकेषु घोरेषु पच्यते नात्र संशयः ॥ इयंच शुद्धादिभेदात् द्वादशधा ॥ तथाच ॥ शुद्धा विद्धादिभेदेन नवमी सा द्विधा स्मृता ॥ समान्यूनाधिका चेति शुद्धापि नवमी त्रिधा ॥ पुनर्नक्षत्र संयोग वियोगाभ्यां च षड्विधा ॥ समादि ऋक्षयोगादि भेदे विद्धापि षड्विधा ॥ एवं द्वादशधा भिन्ना नवमी तत्र निर्णयः ॥ महा फलप्रदा शुद्धा पुनर्वस्वृक्ष योगतः ॥ चैत्रे शुद्धा तु नवमी पुनर्वसु युता यदि ॥ सैव मध्यान्ह योगेन महा पुण्यतमा भवेत् ॥ केवला पि सदोपोष्या नवमी सा च संग्रहात् ॥ अस्मिन्व्रते सर्वेषामधिकारः ॥ विद्धैव चेद्दस्य युता व्रतं तत्र कथं भवेत् ॥ उत्तरं तत्रैव ॥ नवमी चाष्टमी विद्धा त्याज्या विष्णु परायणैः ॥ उपोषणं नवम्यां वै दशम्यामेव पारणम् ॥ दशम्यां तिथि वृद्धिश्चेत्परित्याज्यैव वै सदा ॥ तदन्येषां तु सर्वेषां व्रतं तत्रैव निश्चितम् ॥ दशम्यामेव शब्देन दशमी नैव लंघयेत् ॥ निश्चित्यैवं विचारेण नवमी व्रतमाचरेत् ॥ इति ॥ अथ वैशाखमासे ॥ उभय नवम्यो रुपवास पर श्चण्डिकां पूजयेत् ॥

यदुक्तं भविष्ये ॥ वैशाखे मासि राजेंद्र नवम्यां पक्षयोर्द्वयोः ॥ उपवासपरो भक्त्या पूजयानस्तु चंडि-
काम् ॥ हंसकुंदेंदुसंकाशस्तेजसा भुवसन्निभः ॥ विमानवरमारूढो देवलोके महीयते ॥ इ-
ति ॥ अथ ज्येष्ठशुक्लानवमी ॥ तस्यामुमां ब्राह्मणीनाम्नीं पूजयित्वा ब्राह्मणान्कुमारीश्च भोज-
येत् ॥ भविष्येऽपि उपवासपरो भूत्वा नवम्यां पूजयेदुमाम् ॥ ब्राह्मणीत्विति वै नाम्ना श्वेतरूपे-
ण रूपिणी ॥ ज्येष्ठे मासि नृपश्रेष्ठ कृत्वा नक्तस्य वै विधिम् ॥ शाल्यन्नं पयसोपेतं स्वयं भुं-
जीत वाग्यतः ॥ कुमारीं भोजयेच्चापि स्वशक्त्या ब्राह्मणांस्तथेति ॥ अथाषाढस्य द्वे नवम्यौ अष्ट-
म्यां पंचगव्यस्नात उपोषितः ॥ ऐंद्रीं देवीं पूजयित्वा नक्तं कुर्य्यात् ॥ तदुक्तं भविष्ये ॥ उपवासपरो
भूत्वा नवम्यां पक्षयोर्द्वयोः ॥ आषाढे मासि राजेंद्र यः कुर्य्यान्नक्तभोजनम् ॥ पूजयेच्छ्रद्ध-
या दुर्गां मैन्द्रीं नाम्नीं तु नामतः ॥ ऐरावतगतां शुभ्रां श्वेतरूपेण रूपिणीम् ॥ स ऐरावतमा-
रुह्य इंद्रस्यानुचरो भवेदिति ॥ अथ श्रावणस्य द्वे नवम्यौ ॥ कौमारीनाम्नीं देवीं पूजयित्वा क्षीरान्नं
नक्तं भुञ्जीत ॥ तदुक्तं भविष्ये ॥ श्रावणे मासि राजेंद्र यः कुर्य्यान्नक्तभोजनं ॥ क्षीरषष्टिकभक्ते-

न सर्वभूतहितेरतः ॥ उपवासपरो वीर नवम्यां पक्षयोर्द्वयोः ॥ कौमारी त्विति वै नाम्नीं च-
ण्डिकां पूजयेत्सदा ॥ कृत्वा रौप्यमयीं भक्त्या घोरां वै पापनाशिनीं ॥ करवीरस्य पुष्पैस्तु
गंधैश्चागरुचंदनैः ॥ धूपेन च दशांगेन मोदकैश्चापि पूजयेत् ॥ कुमारीं भोजयेच्छक्त्या-
स्त्रियो विप्रांश्च शक्तितः ॥ भुंजीत वाग्यतः पश्चाद्बिल्वपत्रकनाशनः ॥ एवं यः पूजयेद्दा
र्यां श्रद्धया परयान्वितः ॥ स याति परमं स्थानमिति ॥ अथ भाद्रशुक्लनवमी ॥ नंदानाम्नीं दु-
र्गां संपूज्य विष्णुलोकं गच्छति ॥ तत्रैव भविष्योत्तरे ॥ मासि भाद्रपदे यस्यान्नवमी बहुले नरा ॥
सा तु नंदा महापुण्या कीर्तिता पापनाशिनी ॥ तस्यां यः पूजयेद्दुर्गां विधिवत्कुरुनंदन ॥
सोऽश्वमेधफलं विंद्याद्विष्णुलोकं स गच्छति ॥ अत्रैव कृष्णनवम्यां देवीमुत्थापयेत् ॥ तदे-
व देवीपुराणे ॥ कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभेऽपि वा ॥ नवम्यां बोधयेद्देवीं गीतवा-
दित्रनिःस्वनैरिति ॥ आश्विनशुक्लनवमी मन्वादिः ॥ कार्त्तिकशुक्लनवमी युगादिः ॥ अ-
थ मार्गशिरशुक्लनवमी नंदिनी ॥ तस्यां त्रिरात्रोपोषितः पूजयित्वा देवीं वाजिमेधफलं प्राप्नो-

ति ॥ तथैव भविष्ये ॥ मासि मार्गशिरे वीर शुक्लपक्षे तु या भवेत् ॥ सानंदिनी महापुण्या नव-
मी परिकीर्तिता ॥ यस्तस्यां पूजयेद्देवीं त्रिरात्रोपोषितो नरः ॥ सोऽश्वमेधमवाप्नोति विष्णु-
लोके महीयते ॥ अथ माघशुक्लनवम्यां महानद्यां स्नानदानादि कृतमक्षयम् ॥ यदुक्तं ॥ मा-
घमासे तु या शुक्ला नवमी लोकपूजिता ॥ महानंदेति सा प्रोक्ता सदानंदकरी नृणां ॥ तस्यां
स्नानं तपो दानं जपो होम उपोषणम् ॥ सर्वं तदक्षयं प्रोक्तं यदस्यां क्रियते नरैरिति ॥ स-
र्वनवमीषु तिथिपतित्वेन सरस्वती पूज्येति दिक् ॥ इति नवमीनिर्णयः ॥ अथ दशमी निर्णीयते
दशमी तिथिर्नवमीयुतैवोपवासादिषु विधेया ॥ शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो
रविः ॥ कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥ इति वचनात् ॥ उपवासे तु सर्वापि पूर्वै-
व ॥ दशम्येकादशी विद्धा नोपोष्या सा कथंचनेति ॥ शिवरहस्ये ॥ आपस्तंबस्तु ॥ अष्टमी नव-
मी विद्धा कर्तव्या फलकांक्षिभिः ॥ दशमी तु प्रकर्तव्या सदुर्गा द्विजसत्तम ॥ पैठीनसिरपि ॥
पंचमी सप्तमी चैव दशमी च त्रयोदशी ॥ प्रतिपन्नवमी चैव कर्तव्या सम्मुखी तिथिरिति ॥

यत्तु वचनं ॥ संपूर्णा दशमी कार्य्या परया पूर्वयाथवा ॥ युक्ता न दूषिता यस्मात्ततः सा सर्वतोमु-
खी ॥ तत्र पूर्वविद्धायां स्नाने उदयकालव्यापिनी ग्राह्येत्येव परम् ॥ यद्वा एकादशीव्रतांग-
त्वेन क्रियमाणदशम्यां एकभक्तादिकं परविद्धायां कार्य्यमिति सिद्धांतः अथ चैत्रशुक्लदश-
मी ॥ अस्यां यमपूजनं विधेयम् ॥ यदुक्तं देवीपुराणे ॥ चैत्रमासीयतिथिप्रक्रमे ॥ धर्म्मराजं दश-
म्यां तु पूजयित्वा सुगंधकैः ॥ विगताशिर्निरातंक इह चांते परं पदमिति ॥ प्राप्नुयादिति शेषः
अथ ज्येष्ठशुक्लदशमी दशहरेत्युच्यते ॥ यत्तु ब्राह्मे ॥ ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ॥ ह-
रते दश पापानि तस्माद्दशहरा स्मृतेति ॥ भविष्योत्तरे च ॥ ज्येष्ठे शुक्लदशम्यां च भवेद्भौमदि-
नं यदि ॥ ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः ॥ दश पापानि च मनुनोक्तानि ॥ परद्रव्ये-
ष्वभिधानं मनसानिष्टचिंतनम् ॥ वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥ पारुष्य-
मनृतं चैव पैशुन्यं चापि सर्वशः ॥ असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ अदत्तानामु-
पादानं हिंसा चैवाविधानतः ॥ परदारोपसेवा च कायिकं त्रिविधं स्मृतमिति ॥ स्कांदे ॥ यां-

काश्चित्तारितं प्राप्य दद्याद्दर्भतिलोदकम् ॥ मुच्यते दशभिः पापैस्तु महापातकोपमैः ॥
गंगायां स्नानं प्रशस्तम् ॥ मत्स्ये च ॥ स्नानकालेऽन्यतीर्थेषु जप्यते जान्हवीजनैः ॥ वि-
ना विष्णुपदीं नान्यत्तीर्थं यत्र विशोधनम् ॥ इयं च दशहरा यत्रैव योगबाहुल्यं तत्रैव
कार्या ॥ ते च दशयोगाः स्कांदे उक्ताः ॥ ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ॥ व्यतीपाते
गरानंदकन्याचन्द्रे वृषे रवाविति ॥ वाराहपुराणे ॥ कुजवार योगः ॥ स्कांदे ॥ बुधः कल्पभेदेन
परिहार्यः ॥ इयं च योगाविशेषात्पूर्वा परा वा ॥ मलमासपाते तु तत्रैव ॥ अन्यग्रंथेऽपि ॥ द-
शहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ॥ उपाकर्म महापक्षो होतदुक्ते वृषादितः ॥ मास द्व-
येऽपि भवतीत्यपरः ॥ इति दशहरा   अथाश्विनशुक्लदशमी विजयदशमी ॥ तस्यां नवमी श्रव-
णर्क्षयुतायामपराजितां पूज्य प्रस्थानं कुर्यात् ॥ स्मृतिचिंतामणौ ॥ आश्विनस्य सिते पक्षे
दशम्यां तारकोदये ॥ स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धये ॥ स्कान्देऽपि ॥ या पूर्णा-
नवमीयुक्ता तस्यां पूजापराजिता ॥ ददाति विजयं देवी पूजिता जयवर्द्धिनी ॥ दशमीयस्त-

मुल्लंघ्य प्रस्थानं कुरुते नरः ॥ तस्य संवत्सरं राज्येन क्वापि विजयो भवेदिति ॥ दिनद्वये तार
कोदयकालाभावे परदिने एकादशमुहूर्ते यात्रा विधेया ॥ तत्र भृगुः ॥ आश्विनस्य सिते पक्षे
दशम्यां सर्वराशिषु ॥ सायंकाले शुभा यात्रा दिवा वा विजयक्षणे ॥ विजयक्षणस्तु एकादश-
मुहूर्तः परदिने एकादश मुहूर्ताभावे पितृपुत्राया मेव दशम्यां प्रस्थानमपराजिता । पूजाच भवि-
ष्ये ॥ श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः ॥ तद्दिने ऋक्षे तु सीमानमुल्लंघेयुस्ततो नराः ॥ श्रवणा-
भावे तु केवलदशम्यामेवेति दिक् ॥ राजचिन्हानां पूजा अपराजिता पूजा अत्र ग्रंथगौरवभ-
यान्नोल्लिखिता ॥ इति विजयदशमी ॥ सर्वासु दशमीसु यमः पूज्यस्तिथिपतित्वात् इति दश-
मीनिर्णयः अथाशेषदिविषदीश्वरस्य भगवतः श्रीपुरुषोत्तमस्य स्मरणमात्रेण सकलार्थनिवर्तकस्य वैकुं-
ठगमननिश्रेणी प्रियाच मुनिकदंबकैरुपोषिते कादशी निर्णीयंते ॥ तत्रैकादश्युपवासो द्वेधा नि-
षेधप्रतिपालनात्मको व्रतरूपश्च ॥ तत्राद्यः ॥ न शंखेन पिवेत्तोयं न खादेन्मत्स्यशूकरौ एका-
दश्यां न भुंजीत पक्षयोरुभयोरपीति ॥ कौर्म्मे देवलाद्याः ॥ आग्नेयेऽपि ॥ गृहस्थो ब्रह्मचारी वा आ-

दिनाग्निस्तथैवच ॥ एकादश्यां न भुंजीत पक्षयोरुभयोरपि ॥ न चान्न पर्युदासेन व्रतविधिः ॥



तद्धेतु वना दिश्रवणाभावात् ॥ व्रतरूपस्तु मत्स्यवैवर्ते ॥ प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि ॥ दशम्यामुपवासञ्च प्रकुर्याद्वैष्णवो व्रतम् ॥ इदं शिव भक्तादिभिरपि कार्य्यम् ॥ सौरपुराणे ॥ वैष्णवो वा थशैवो वा सौरेऽप्येतत्समाचरेत् ॥ वृत्तिसोऽपिद्विधा नित्यः काम्यश्च तत्र नारदः ॥ शुक्ले पक्षे च कर्तव्यमेकादश्यामुपोषणमिति ॥ अतो नित्यत्वमेव ॥ यदीच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः ॥ एकादश्यां न भुंजीतेत्यादि कौर्म्मादिषु फलश्रुतेश्च काम्यता ॥ उभयैकादशीव्रतश्च गृहस्थातिरिक्तानामेव ॥ गृहस्थाः शुक्लायामेव न कृष्णायाम् ॥ यत्तु देवलः ॥ एकादश्यां न भुंजीत पक्षयोरुभयोरपि ॥ वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृही ॥ तदेव नारदोऽपि ॥ संक्रान्त्यामुपवासंच कृष्णैकादशिवासरे ॥ चंद्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही ॥ तथा च विशेषोऽपि ॥ कृष्णाविषये ॥ पाद्मे ॥ शयनी बोधिनी मध्ये या कृष्णैकादशी भवेत् ॥ सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥ यत्तु मदनरत्ने भविष्ये ॥ यथा शुक्ला तथा कृष्णा द्वादशी मे सदा प्रिया ॥

शुक्ला गृहस्थैः कर्त्तव्या भोग संतानवर्द्धिनी ॥ मुमुक्षुभिस्तथा कृष्णा न ते तेनोपदर्शिता ॥ यत्तु सर्वकृष्णायां सर्वगृहिणां संभवत्येव तद्गृहस्थ वैष्णवपरं ॥ तथाच नारदः ॥ पुत्रवांश्च सभार्य्यश्च बंधुयुक्तस्तथैव च ॥ उभयोः पक्षयोः काम्यं व्रतं कुर्य्याच्च वैष्णवम् ॥ अनेन काम्यपरत्वमेवावगम्यते ॥ पुनरपि ॥ विधवाया वनस्थस्य यतेश्चैकादशी द्वये ॥ उपवासो गृहस्थस्य शुक्लायामेव पुत्रिणः ॥ प्राच्यादिमते वैष्णवगृहस्थानामेवोभयैकादशीव्रतं नित्यम् ॥ उपवासनिषेधे विशेषो वायवीये ॥ उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत् ॥ न दुष्यत्युपवासेन उपवासफलं लभेत् ॥ भक्ष्यमपि तत्रैव ॥ नक्तं हविष्यान्नमथोदनं च फलं तिलाः क्षीरमथांबु चाज्यम् ॥ यत्पंचगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरं च ॥ अतएवैकादशीव्रतं नित्यम् ॥ तथाच सनत्कुमारः ॥ न करोति यदा मूढ एकादश्यामुपोषणम् ॥ स नरो नरकं याति रौरवं तमसावृतम् ॥ नारदीयेऽपि ॥ यानि कानि च पापानि ब्रह्महत्यादिकानि च ॥ अन्नमाश्रित्य तिष्ठंति संप्राप्ते हरिवासरे ॥ स्कांदे ॥ मातृहा पितृहा वापि भ्रातृहा गुरुहा तथा ॥ एकादश्यां तु यो भुंक्ते प्राप्नो ४५७

सं.नि भयोरपि ॥ वरं स्वसातृगमनं वरं गोमांसभक्षणम् ॥ वरं हत्या सुरापानं नैकादश्यां च भोज-
४४८ नम् ॥ वशिष्ठः एकादशीसमुत्थेन वन्हिना पातकेंधनम् ॥ भस्मतां याति राजेंद्र अपि जन्म
शतोद्भवम् ॥ अथ दशमीवेधो द्विधा ॥ अरुणोदयवेधः सूर्योदयवेधश्च ॥ पूर्वः वैष्णव परः अप
रस्मात्तु परः ॥ अथ गारुडे ॥ दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ॥ नैवोपोष्यं वैष्ण-
वेन तद्दिनैकादशीव्रतम् ॥ अरुणोदयस्वरूपं माधवीय स्कांदे ॥ उदयात्प्राक् चतस्रस्तु घटिका
अरुणोदयः ॥ इति अंत्यस्तूदयवेधः ॥ हेमाद्रौ माधवीये गारुडे ॥ उदयात्प्राक् त्रिघटिकाव्या
पिन्येकादशी यदा ॥ संदिग्धैकादशी नाम वर्ज्येयं धर्मकांक्षिभिः ॥ उदयात्प्राङ्मुहूर्तेन
व्यापिन्येकादशी यदा ॥ संयुक्तैकादशी नाम वर्ज्येयं धर्मवृद्धये ॥ नारदीयेऽपि ॥ लववे-
धेऽपि विप्रेन्द्र दशम्येकादशीं त्यजेत् ॥ सुरया बिंदुना स्पृष्टं गंगांभइव निर्मलम् ॥ माध-
वीयेऽपि ॥ सेयं कलादिवेधेऽरुणोदयवेधे सूर्योदयवेधे समानत्वम् ॥ निगमेऽपि ॥ सर्वप्रका-
रवेधोयमुपवासस्य दूषकः ॥ हेमाद्रौ स्मृत्यंतरे ॥ अज्ञानाद्यदि वा मोहात्कुर्वन्नेकादशीं नरः ४४८

॥ दशमी शेषसंयुक्तां प्रायश्चित्तमिदं चरेत् ॥ कृच्छ्रपादं नरः स्त्री त्वां गां च दद्यात्सवत्सिकाम् ॥ सुवर्णं स्यार्द्धकं देयं तिलद्रोणसमन्वितम् ॥ अपरञ्च ॥ ब्राह्मणान्भोजयेत्त्रिंशत्तिलं द्रोणमथापि वा ॥ स्मृत्यंतरेऽपि ॥ दशम्याः शांतमादाय यदोदेति दिवाकरः ॥ तेन सार्द्धं हरिदिनं दत्तं जंभासुरायतत् ॥ अत्रारुणोदय वेधोवैष्णवविषयः ॥ वैष्णवस्वरूपमाधवीये स्कांदे ॥ परमापदमापन्नो हर्षे वा समुपस्थिते ॥ नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी ॥ विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते ॥ माधवः ॥ अरुणोदयवेधोऽत्र वेधः सूर्योदये तथा ॥ उक्तौ द्वौ दशमीवेधौ वैष्णवस्मार्त्तयोः क्रमात् ॥ माधवमते ॥ वैष्णवैररुणोदयविद्धा त्याज्या ॥ एकादशी द्वादशी वाधिका चेत्त्यज्यतां दिनं ॥ पूर्वं ग्राह्यं नूत्तरं स्यादिति वैष्णवनिर्णयः ॥ स्मार्त्तैस्तु सूर्योदयविद्धा त्याज्या ॥ यदा त्वेकदा शुद्धा सती ॥ वर्द्धते द्वादशी च ॥ समा न्यूना वा ॥ तदा गृहस्थैः पूर्वा यतिभिरुत्तरा कार्या ॥ प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रसंयुता ॥ द्वादशी च तथा तात दृश्यते पुनरेव च ॥ पूर्वा कार्या गृहस्थैश्च यतिभिश्चो-

सं.कौ. न्नए तथा वृति स्कांदे ॥ वर्द्धमानेऽप्येवम् ॥ उभय वृद्धौ तु शुद्धा विद्धा सर्वैर्वो परैव ॥ तथाच
२४९ नारदः ॥ संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ॥ सर्वैरेवोत्तरा कार्या प्रभाते द्वादशी यदि
द्वादशी मात्र वृद्धौ शुद्धायां पूर्वैव ॥ तदेव नारदः ॥ न चेदेकादशी विद्धो द्वादशी परतः स्थि-
ता ॥ उपोष्यैकादशी तत्र यदीच्छेत्परमं पदमिति ॥ माधवोऽपि ॥ द्वादशी मात्र वृद्धौ तु शु-
द्ध विद्धे व्यवस्थिते ॥ शुद्धा पूर्वोत्तरा विद्धा स्मार्त्त निर्णय दृष्ट यः ॥ मदनरत्ने ॥ विद्धाप्य वि-
द्धा विज्ञेया परतो द्वादशी न चेत् ॥ अविद्धापि च विद्धा स्यात्परतो द्वादशी यदि ॥ माधवः
एकादशी द्वादशी चेत्युभयं वर्द्धते यदा ॥ तदा पूर्वदिनं त्याज्यं स्मार्तैर्ग्राह्यं परं दिनम्
॥ अंचित सोऽत्रिरपि ॥ एकादशी विवृद्धा चेच्छुक्ले कृष्णे विशेषतः ॥ उत्तरां तु यतिः कुर्यात्
पूर्वामुपवसेद्गृही ॥ त्रयोदश्यां न लभ्येत द्वादशी यदि किंचन ॥ उपोष्यैकादशी तत्र-
दशमी मिश्रितापि चेति ॥ स्कांदोक्तेः ॥ हेमाद्रिमतेतु ॥ शुद्धसमा शुद्धन्यूनाधिक द्वाद-
शिकाचेत्सर्वेषां परैवेत्युक्तं वैष्णव परम् ॥ स्मार्त्तानां तु पूर्वैवेत्यविरोधः ॥ हेमाद्रिणा त्व- २४

ष्टा दश्या धैकादश्युच्यते॥तथाच॥ शुद्धा विद्धा तथा नंदा त्रेधा न्यून समाधिकैः॥ षट्प्रकारा पुन स्त्रेधा द्वादश्यूनसमाधिकै रित्यष्टा दशै कादशी भेदाः॥ तत्र शुद्धाधिक न्यून द्वादशिका शुद्धाधिक सम द्वादशिकाच॥ सकामैः पूर्वा निःकामै रुत्तरा कार्य्या॥ ऊन द्वादशिकायां तु विष्णु प्रीति कामै रुपवास द्वयं कार्य्यम्॥ संपूर्णै का दशी यत्र प्रभाते पुनरेव सा॥लुप्यते द्वादशी तास्मिन्नुपवासः कथं भवेत्॥ उपोष्ये द्वे तिथी तत्र विष्णु प्रीणन तत्परैरिति॥ वृद्धवशिष्टः॥नारदो ऽपि॥ संपूर्णै कादशी यत्र द्वादश्यां वृद्धि गामिनी॥ द्वादश्यां लंघनं कार्य्यं त्रयो दश्यां तु पारणाम्॥ शुद्ध न्यूना शुद्धाधिका शुद्ध समा॥ विद्ध न्यूना विद्धाधिका विद्ध समा द्वादशिका चेत्॥ सर्वेषां परै वेति हेमाद्रिः॥ मदन रत्नेतु॥ शुद्धाधिका परा॥ अन्या पूर्वा॥ शुद्धा यदा समा हीना समा हीनाधिको त्तरा॥ एकादशी मुपवसे न्न शुद्धां वैष्णवी मपीति॥ स्कांदे॥ शुद्धा एकादशी उत्तरा यत्तु संपूर्णै कादशी यत्र परतो द्वादशी यदि॥ उपोष्या द्वादशी शुद्धा द्वादश्या मेव पारणाम्॥ इति वैष्णव पक्ष॥ स्मा-

नीनां तु पूर्वैवेति सिद्धांतः ॥ वचनरत्नेतु ॥ मिश्रे न्यूना समा द्वादशिकायां तु ॥ सुमुक्षूणां मुनव-
तां चपरा ॥ अन्येषां पूर्वा ॥ पुत्रवतोः पितृव्रती ॥ विद्धसमा सम द्वादशिको न द्वादशिका-
च मुमुक्षुभिः ॥ परान्यैः पूर्वा कार्य्या ॥ दशमी मिश्रिता पूर्वा द्वादशी यदि लुप्यते ॥ शु-
द्धैव द्वादशी राजन्नुपोष्या मोक्षकांक्षिभिरिति । व्यासः ॥ सी नंदांशि गृहस्था दृश्ये आष्ट-
वैव ॥ सर्वत्रैकादशी कार्य्या द्वादशी मिश्रिता नरैः ॥ प्रातर्भवतु वा मा वा यतो नित्यमु-
पोषणमिति ॥ पाद्मोक्तेः विद्धाधिक सम द्वादशिका च पूर्वैव ॥ पारणाहे न लभ्येत द्वा-
दशी कलयापि चेत ॥ तदानीं दशमी विद्धाप्युपोष्यैकादशी तिथिरिति नारदीय प्रयो-
क्तेः ॥ माधवमतेतु ॥ गृहिणां पूर्वा यतेरुत्तरा ॥ विद्धाधिकन्यून द्वादशिका च मोक्षपाप-
क्षय विष्णुप्रीति कामैः परा कार्य्या ॥ गृहस्थैस्तु नक्तं विधेयम् ॥ तथाच कौर्म्मे ॥ एकाद-
शी द्वादशी च रात्रि शेषे त्रयोदशी ॥ उपवासं न कुर्वीत पुत्रपौत्र समन्वित ॥ इति ॥ दिन
क्षये उपवास निषेधात् ॥ दशम्येकादशी विद्धा द्वादशी च क्षयं गता ॥ क्षीणा सा द्वाद-

णी द्वेयानक्तं तु गृहिणः स्मृतमिति ॥ वृद्धशातातपः ॥ एकादश्यां शुद्धन्यूनत्वे शुद्धसमत्वे
द्वादश्यां न्यूनसमत्वयोः एकादश्यामुपवासः ॥ संदिग्धेषु च वाक्येषु द्वादशी समुपोषये-
त् ॥ विवादेषु च सर्वेषु द्वादश्यां समुपोषणम् ॥ पारणं च त्रयोदश्यामाज्ञेयं मामकीमु
नेरिति ॥ पाद्मे ॥ वेधसंदेहे ज्योतिर्विदां विप्रतिपत्तौ वा ॥ वैष्णवैः परकार्य्यमित्यलम् ॥
अत्रोपयुक्तं किंचिदपि ॥ तत्र दशम्यामेकादशीयोगे ॥ दशमीमध्ये एव भोजनं कार्य्यम्
एकादश्यां भोजने निषेधः ॥ व्रताधिकारिणो माधवीये कात्यायनः ॥ अष्टवर्षाधिको मर्त्यो ह्यशी
तिन्यूनवत्सरः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥ ब्रह्मवैवर्त्ते ॥ ब्रह्मचारी च नारी च
शुक्लामेव सदा गृही ॥ सुभगाया भर्तुरनुज्ञापरमन्यथा व्रतेऽनधिकारः ॥ यत्तु विष्णुः ॥ पत्यौ
जीवति या नारी ह्युपोष्य व्रतमाचरेत् ॥ आयुष्यं हरते भर्त्तुर्नरकं चैव गच्छति ॥ उपवासा
सामर्थ्ये ॥ मार्कण्डेयः ॥ एकभक्तेन नक्तेन तथैवायाचितेन च ॥ उपवासेन दानेन नित्यं द्वा-
दशिको भवेत् ॥ असामर्थ्ये प्रतिनिधिना कारयेत् व्रताकरणे प्रायश्चित्तमाह कात्यायनः ॥ अर्के पर्व

दुधे रात्रौ चतुर्दश्यष्टमी दिवा ॥ एकादश्यामहोरात्रं भुक्त्वा चांद्रायणं चरेत् ॥ अथ काम्यव्रत-
विधिर्लघुनारदीये ॥ दशम्यादि महीपाल त्रिदिनं परिवर्ज्जयेत् ॥ गंधतांबूलपुष्पादि स्त्रीसं-
योगं सहायशाः ॥ दशम्यां विधिः कौर्म्मे ॥ कांस्यं मांसं मसूरांश्च चणकान्कोरदूषकान् ॥
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥ अन्यदपि ॥ शाकं मांसं मसूरांश्च पुनर्भोजन
मैथुने ॥ द्यूतमत्यंबुपानं च दशम्यां वैष्णवस्त्यजेत् ॥ विधिरपि मदनरत्ने ॥ अक्षारलवणा-
स्सर्वे हविष्यान्ननिषेविणः ॥ अवनीतल्पशयनाः प्रियासंगमवर्ज्जिताः ॥ व्रतघ्नान्याह देव-
लः ॥ असकृज्जलपानाच्च सकृत्तांबूलभक्षणात् ॥ उपवासः प्रणश्येत दिवास्वापाच्च मै-
थुनात् ॥ अशक्तौ देवलः ॥ अत्यये चाम्बुपाने च नोपवासः प्रणश्यति ॥ अत्यये कष्टे ॥ विष्णुर-
हस्ये ॥ गात्राभ्यंगं शिरोऽभ्यंगं तांबूलं चानुलेपनम् ॥ व्रतस्थो वर्ज्जयेत्सर्वं यच्चान्यत्र निरा-
कृतम् ॥ अथ प्रायश्चित्तं निर्णयामृते ॥ स्तेनहिंसकयोस्सख्यं कृत्वा वै स्तैन्यहिंसने ॥ प्रायश्चि-
त्तं व्रती कुर्याज्जपेन्नाम शतत्रयम् ॥ पुनः ॥ मिथ्यावादे दिवास्वापे बहुशोम्बुनिषेवणे ॥

सं.शि

४५४

अष्टाक्षरं व्रती जप्त्वा प्रातःस्नातो नरः शुचिः ॥ अष्टाक्षरः ॥ ॐ नमो नारायणायेति ॥ पैठीनसिरपि ॥
तांबूलचर्वणे स्त्रीसंभोगे मांसनिषेवणे ॥ व्रतलोपो न चेत्कुर्यात्त्यक्त्वा वङ्क्ष्ये विवर्ज्जनम् ॥
संभोगो ऋतुकालादन्यत्र ॥ व्यासः पाद्मे ॥ वर्ज्जयेत्पारणे मांसं व्रताहे प्यौषधं सदा ॥ एकाद-
श्यां श्राद्धप्राप्तौ ॥ मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदि ॥ अभ्यर्च्य पितृदेवांश्च आजिघ्रेत्पि-
तृसेवितमिति ॥ अन्यदपि ॥ शातातपः ॥ एकादश्यां व्रतं प्राप्य पितुः संवत्सरं भवेत् ॥ भार्या ऋतु
मतीचैव कथं कर्म प्रवर्त्तते ॥ तत्रैव श्राद्धं कृत्वा व्रतं कुर्याद् घ्राणं पितृपिण्डयोः ॥ रात्रेश्च ऋतु
स्वभार्यागेतु ऋतुदानं प्रवर्त्तते ॥ एते नैकादशीनिमित्तं श्राद्धं द्वादश्यां वदंतः परास्ताः निर्मूलत्वात्
अव्रतघ्नान्याह मदनरत्ने देवलः ॥ सर्वभूतभयं व्याधिः प्रमादो गुर्वाशासनम् ॥ अव्रतघ्नानि पठ्यन्ते
सकृदेतानि शास्त्रतः ॥ स्कान्देऽपि ॥ अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ॥ हविर्ब्राह्मणका-
म्या च गुरोर्वचनमौषधम् ॥ नारदीये ॥ अनुकल्पो नृणां प्रोक्तः क्षीणानां वरवर्णिनि ॥ मूलं फलं
पयस्तोयमुपभोग्यं भवेच्छुभे ॥ आपस्तंबोऽपि ॥ शयने च यदुत्थाने मत्स्याब्दे परिवर्त्तने ॥ नोम

लफला हारी हृदि शल्यंमम पर्य्ययेत् ॥ इदंचाति संकष्ट विषयम् ॥ एतेच्चाविरोधिनो निर्णयाः
सर्वव्रतेषु ज्ञेयाः ॥ तत्रैकादश्यां संकल्पः ॥ गृहीत्वौदुंबरं पात्रं इत्यादि ॥ मंत्रश्च ॥ एकादश्यां निरा
हारः स्थित्वा हमपरे हनि ॥ भोक्ष्यामि पुंडरीकाक्ष शरणंमे भवाच्युत ॥ शैवादीनांतु हेमाद्रौ
सौर पुराणे ॥ सावित्र्याप्यथवा नाम्ना संकल्पंतु समाचरेत् ॥ शिवादि गायत्र्योयजुर्वेद प्र सि-
द्धाः ॥ वाराहे ॥ इत्युच्चार्य्य ततो विद्वान्पुष्पांजलिमथार्च्चयेत् ॥ ततस्तज्जलं पिबेत् ॥ अष्टाक्ष
रेण मंत्रेण त्रिर्जप्तेनाभिमंत्रितम् ॥ उपवासफलप्रेप्सुः पिबेत्पात्र गतंजलम् ॥ मध्यरात्रेत
स्वेवादशमी वेधे रात्रौ संकल्पः ॥ इतिमाधवः ॥ दशम्या संगदोषेण अर्द्धरात्रात्परे गतु ॥
वर्ज्जनाच्चतुरोयामान्संकल्पाचनयोस्सदा ॥ विद्धोपवासे ऽनघनं स्तुदिनस्य त्र्यंशे समाहितः
रात्रौ संपूजये द्विष्णुं संकल्पं च तदाचरेत् ॥ इतिनारदीये ॥ तत्रैव पूजामभिधाय ॥ देवस्य पुरतः
कुर्य्याज्जागरं नियतोव्रती ॥ द्वादश्यांनिवेदनमंत्र उक्तः कात्यायनेन ॥ अज्ञानतिमिरांधस्य व्रते
नानेन केशव ॥ प्रसीद सुमुखो नाथ ज्ञानदृष्टि प्रदो भव ॥ नारदीये ॥ ब्राह्मणान्भोजये-

वसत्यामलकीवृक्षे लक्ष्म्या सह वनस्पतिं ॥ ततस्संपूज्य विधिवद्भक्त्या कुर्यात्प्रदक्षिण-
म् ॥ उपोष्य विधिवत्कल्पं विष्णुलोके महीयते ॥ इति दृढनिर्णयः ॥ आमलकमूले वि-
ष्णुं संस्थाप्य प्रदक्षिणाः कुर्यात्स्टोत्तरशतम् ॥ रत्नैस्सुवर्णै रूप्यैर्वा फलैरन्यैर्घ्यवा-
दिभिर्वा ॥ तथाच ॥ यश्चामलकशाख्यायां गृहे चैवाधिवास्य च ॥ विष्णोः प्रदक्षि-
णां कुर्यात्तस्य स्यादधिकं फलमिति ॥ वृत्यामर्द्दकी सर्वास्वेकादशीषु तिथिपतिर्दे-
नशिवः पूज्येति दिक् ॥ इत्येकादशीनिर्णयः ॥ अथ द्वादशी निर्णीयते ॥ द्वादश्यस्तु सर्वा सादि-
शुक्ला दशीयुतैव ग्राह्या युग्मवाक्यात् ॥ त्रयोदशीवेधस्तु निषेधः कूर्मपुराणे ॥ ना-
गविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ॥ कामविद्धो भवेद्विष्णुर्न ग्राह्या तेतु वासरा
॥ विष्णुर्द्वादशी ॥ काम त्रयोदशी ॥ यदा भवेदत्ती वाल्पा द्वादशी पारणादिने ॥ उ-
षःकाले द्वयं कुर्यात्प्रातर्मध्याह्निकं तदिति ॥ स्कांदे ॥ चैत्रशुक्लद्वादश्यां दमन
कार्प्पणम् ॥ आषाढशुक्लद्वादश्यां तप्तमुद्राधारणम् ॥ तद्ब्राह्मणविषयमेव ·

निरपवादः ॥ तथाच पाद्मे ॥ यथाप्रस्रवणानजं कार्य्यं गर्हितं सर्वकर्म्मसु स्वं चक्रांकितो वि-
प्रः सर्वकर्म्मसु गर्हितः । विप्रविषये निंदापरकानि बहूनि वाक्यान्युपलभ्यंते विस्तरभि-
यान लिखितानि ॥ अत एव शूद्राणां प्राशस्त्यं धर्म्ममेवेति दिक् ॥ आषाढशुक्लद्वादश्यां प-
वित्रारोपणं कार्य्यम् ॥ पाद्मे ॥ ऊर्ज्जे व्रतं मधौ दोलां श्रावणे तंतुपूजनम् ॥ चैत्रे च दमना
रोपमकुर्वाणः पतत्यधः ॥ पवित्रारोपणं विप्राच्छ्रावणे न भवेद्यदि ॥ कार्त्तिकवदिशु-
क्लार्के कर्त्तव्यमिति नारदः । शुक्लार्कः द्वादशी ॥ भाद्रशुक्लद्वादश्यां मध्याह्ने वामनावता-
रः ॥ तत्र श्रवणयोगे उपवासः इदं व्रतं काम्यम् ॥ विष्णुधर्मोत्तरे ॥ श्रवणद्वादशीयोगे बु-
धवारो भवेद्यदि ॥ अत्यंतमहती नाम द्वादशी सा प्रकीर्त्तिता ॥ स्नानं जाप्यं तथा दा-
नं होमं श्राद्धं सुरार्च्चनम् ॥ सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वहेति ॥ नारदीये ॥ [illegible] ॥
द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम् ॥ निषिद्धमपि कर्त्तव्यमित्याज्ञा पारमे-
श्वरी ॥ श्रवणद्वादशीव्रतं श्रवणैकादशीव्रतं कार्य्यमिति रामकौतुके ॥ भविष्ये ॥

लग्ना देवा यथाप्राप्ता स्त्वलंकृताः ॥ जाती पल्लव संयुक्ता स्सफलाश्च सकांचनाः ॥ पुण्या
ह वेद शब्देन वीणा वेणु स्वेणच ॥ एवं संस्नाप्य गोविंदं त्वनुलिप्तं स्वलं कृतम् ॥ सुवास
संपूजयेच्च सुमनोभिस्स कुंकुमैः ॥ धूपैर्दीपैश्च नैवेद्य पायसैनच भूरिणा ॥ ब्राह्मणाः पू-
जनीयाश्च विस्मो रीक्ष्याश्च मूर्तयः ॥ यत्तु शिष्टा मृतं पश्चाद्वी कव्यं ब्राह्मणे स्सह ॥ इति
भविष्येऽपि ॥ कार्त्तिके शुक्ल पक्षेतु एकादश्यां पृथा सुत ॥ मंत्रेणानेन राजेन्द्र देवमुत्थापये
द्विजः ॥ मंत्रश्च ॥ इदं विष्णुर्विचक्रमे ति ॥ वैदिकः ॥ पौराणिकास्तु ॥ ब्रह्मेन्द्र रुद्राग्नि कुबेर सूर्य
सोमादिभिर्वन्दित वन्दनीय ॥ बुध्य स्वदेवेश जगन्निवास मंत्र प्रभावेन सुखेन देव ॥ इयं
च द्वादशी देव ॥ अपरश्च मंत्रः ॥ उत्तिष्ठोत्तिष्ठ गोविंद त्यज निद्रां जगत्पते ॥ त्वयि सुप्ते जग
त्सुप्तमुत्थिते चोत्थितं जगत् ॥ उत्थापनं च दिवैव कार्य्यम् ॥ तदपि रेवत्यंत्त चरणयो-
गे तदभावे केवल तिथौ संध्या काले ॥ तथाच भविष्ये ॥ आभाकाप्रितप देषु मैत्रश्रवणरे-
वती ॥ आदिमध्या वसानेषु प्रस्वापावर्तनो त्सवाः ॥ एतच्च संभवाभिप्रायेण ज्ञेयम् ॥

तथाच ॥ निशि स्वापो दिवोत्थानं संध्यायां परिवर्त्तनम् ॥ अन्यत्र पादयोगेऽपि द्वादश्या
मेव कारयेदिति ॥ विष्णुधर्म्मोत्तरे ॥ विष्णोर्दिवा न स्वपितव्यं न च रात्रौ प्रबुध्यते ॥ द्वादशीऋ-
क्षसंयोग पादयो गौन कारणमिति ॥ रात्रौ नक्षत्रादियोगलाभेऽपि दिवैवोत्थापनमि-
त्यर्थः ॥ पूर्वोक्तमंत्रेण देवमुत्थाप्य पुष्पांजलिं दद्यादनेनच ॥ चरणं पवित्रमिति वैदिकः
॥ पौराणिकस्तु ॥ गता मेघा वियच्चैव निर्म्मलं निर्म्मला दिशः ॥ शारदानि च पुष्पाणि
गृहाण मम केशव ॥ महापूर्व्यं स्वेशोत्थिते विष्णौ तस्य दत्ते संस्थाप्य रात्रौ जागरणादि
विधाय प्रभाते ब्राह्मणान्भोज्य ब्राह्मणाय पूर्वं कृतं चातुर्म्मास्य व्रतं प्रोच्य विप्रेभ्यो
दक्षिणां दत्वा श्रीनाथं प्रार्थये दनेन ॥ मन्त्रः ॥ इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो
॥ न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन ॥ इति प्रार्थ्य स्वयमपि भुंजीत ॥ इति बो-
धिन्येकादशी ॥ अथ फाल्गुन शुक्लैकादशी आमर्दकीत्युच्यते ॥ तत्रामर्दकस्थितं विष्णुं सं-
पूज्य दक्षिणां दद्यात् ॥ तदेव भविष्ये ॥ फाल्गुने मासि शुक्लायामेकादश्यां जनार्दनः ॥ 

यविघ्नमुख्येभ्यस्तापत्रयविवर्जितः ॥ विष्णुलोकमवाप्येह मोदन्ते विष्णुना सह ॥ इति निर्ज-
लैकादशी ॥ अथाषाढशुक्लैकादशी हरिशयनी ॥ तत्र लक्ष्मीनारायणमूर्तिं सौवर्णीं पूज्य रात्रौ जा-
गरमुत्सवं कुर्यात् ॥ पुराणसमुच्चये ॥ आषाढस्य सिते पक्षे एकादश्यामुपोषितः ॥ स्थाप-
येत्प्रतिमां विष्णोः शंखचक्रगदाधराम् ॥ पीताम्बरधरां सौम्यां पर्यंके स्वास्तृते शुभे ॥ शु-
क्ले वस्त्रसमाछन्ने सोपधाने युधिष्ठिर ॥ स्नापयित्वा दधिक्षीरघृतक्षौद्रजलैस्तथा ॥ समा-
लभ्य शुभैर्गंधैर्धूपैर्वस्त्रैरलंकृताम् ॥ पूजितां कुंकुमैःपुष्पैर्मंत्रेणानेन पाण्डव ॥ मंत्रश्च सु-
प्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिति ॥ विबुद्धे त्वयि बुद्धं च जगत्सर्वं चराचरमिति ॥ एवं सं-
पूज्य देवस्याग्रे चातुर्मास्यव्रतं कुर्यात् ॥ तदुक्तं भारते ॥ एकादश्यां तु गृह्णीयात्संक्रांतौ क-
र्कटस्य च ॥ आषाढ्यां वा नरो भक्त्या चातुर्मास्योदितं व्रतमिति ॥ व्रतारंभे मंत्रः सनत्कुमारसंहि-
तायाम् ॥ इदं व्रतं मया देव गृहीतं पुरतस्तव ॥ निर्विघ्नं सिद्धिमायातु प्रसन्ने त्वयि केशव ॥ गृ-
हीतेऽस्मिन्व्रते देव यद्यपूर्णे म्रियाम्यहम् ॥ तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन ॥

संस्कृ इति प्रार्थनी ॥ अथ भाद्रशुक्लैकादश्यां ॥ प्रार्थनैकादश्यामिन्द्रपूजोत्सवादि कुर्य्यात् तदेव भविष्ये
४६ प्राप्ते भाद्रपदे मासि एकादश्यां सिते हनि ॥ कटदानं भवेद्दिव्यो यो मेह पूजां प्रवर्त्तयेदिति ॥ क-
टदानं पार्श्वपरिवर्त्तनम् ॥ अथ कार्तिकशुक्लैकादशी ॥ तत्र देवपूजा जागरोत्सवादिभिर्मन्त्रेण प्र-
बोध्य रथयात्रोत्सवं कुर्य्यात् ॥ तदेव ब्रह्मपुराणे ॥ एकादश्यां च शुक्लायां कार्तिके मासि केशव-
म् ॥ प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥ नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुस्साममंगलैः ॥
स्तोत्रैश्च विविधैः स्तुत्वा पूजयेद्दर्हरीच्छुभैः ॥ होमैर्भक्ष्यैरपूपैश्च फलैर्द्राक्षापायसैः ॥
इक्षाभ्यां श्वेतरक्ताभ्यां चंदनाभ्यां च सर्वदा ॥ कुंकुमालककाभ्यां च रक्तदूर्वैस्सकंकणैः ॥ त-
स्यां रात्र्यां व्यतीतायां द्वादश्यामरुणोदये ॥ आदौ घृतेन दधिना मधुना स्नापयेत्ततः ॥ द-
ग्धक्षीरेण च ततः पंचगव्येन शास्त्रवित् ॥ उद्वर्तनं माषचूर्णं मसूरामलकानि च ॥ सर्वपा-
श्च प्रियंगुश्च सातुलुंगा गरस्तथा ॥ सर्वौषध्यस्सर्वगंधाः सर्वबीजानि कांचनम् ॥ मंगला-
नि यथाकामं रत्नानि च कुशोदकम् ॥ स्वं संशोध्य देवेशं सदा ज्ञो रोचनां शुभाम् ॥ ततस्तु प

च्छ्रुतयास्याद्दक्षिणां ततः ॥ स्कान्दे ॥ कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने ॥ नैवेद्यं तुल-
सीमिश्रं हत्या कोटि विनाशनम् ॥ द्वादश्यां वर्ज्यान्याह ॥ दिवानिद्रा परान्नं च पुनर्भोजनमै-
थुने ॥ क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् ॥ विष्णुधर्मे ॥ [illegible] आध्यादि संभा-
व्य तुलस्य तसिका दलम् ॥ आमलक्याः फलं वापि पारणे प्राश्य शुद्ध्यति ॥ पारणाधिकारे
विशेषः ॥ सनत्कुमारीये ॥ मैत्राद्यपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्त्तते च ॥ पौष्णस्य-
जागर्ति तथावसाने नो पारणां तत्र बुधः प्रकुर्यात् ॥ रजस्वलां च चाण्डालं महापातकिनं त-
था ॥ सूतिकां पतितं चैव उच्छिष्टं रजकादिकम् ॥ व्रतादिमध्ये शृणुयाद् [illegible] चैवाभिनिरी-
क्ष्य ॥ अष्टोत्तरसहस्रं तु जपेद्वेदमातरम् ॥ एतद्व्रतं सूतकेऽपि कार्य्यम् ॥ तथा च विष्णु-
धर्मे ॥ सूतके मृतके चैव न त्याज्यं द्वादशीव्रतम् ॥ तत्रत्यक्तं दानादि सूतकांते कार्य्यम् ॥ मात्स्ये
॥ सूतकांते नरः स्नात्वा पूजयित्वा जनार्द्दनम् ॥ दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते ॥
रजोदर्शनेऽपि कार्य्यम् ॥ पुलस्त्यः ॥ एकादश्यां न भुंजीत हृष्टे नारी रजस्यपि ॥ [illegible]

सं.सि श्रवणर्क्षं तदा शुद्धा मध्ये का द्वादशीत्यतस्तत्रैवोपवासः कार्य्यः ॥ शुक्लावा यदि वा कृष्णा द्वादशी श्रवणा

 न्विता ॥ तयोरेवोपवासं च त्रयोदश्यां च पारणम् ॥ इति नारदीये ॥ एते च नियमाः काम्यव्र
ते नियताः ॥ नित्यव्रते सति संभवे कार्य्याः ॥ तत्र कात्यायनः ॥ शक्तिमांस्तु नरः कुर्य्यान्निय
मं सविशेषणम् ॥ अशक्तौ तु माधवीये ॥ इति विज्ञाय कुर्वीत नभस्यमेकादशीव्रतम् ॥ विशे
षनियमाप्राप्तावहोरात्रं भुजिवर्ज्जितः ॥ इति साधारणनिर्णयः अथ विशेषनिर्णयः अथ चैत्रै
कादशी तत्र स्त्रीभिः रुक्मिणीपूज्या तदुक्तं ब्रह्मपुराणे ॥ एकादश्यां ततः स्त्रीभिर्देवी पूज्या च रु
क्मिणी ॥ पुष्पालंकारधूपान्नवस्त्रब्राह्मणतर्पणैः ॥ तत्रैव रात्रौ सलक्ष्मीको वासुदेव
स्योत्सव मांदोलनीयः ॥ चैत्रमासस्य शुक्लाया मेकादश्यां तु वैष्णवैः ॥ आंदोलनीयो
देवेशः सलक्ष्मीको महोत्सवे ॥ दमनेनार्चयित्वा च रात्रौ जागरणं चरेदिति ॥ अथ ज्ये
ष्ठशुक्लैकादशी निर्ज्जला ॥ तत्र निर्ज्जलमुपवासं कुर्य्यात् ॥ तदुक्तं स्कंदपुराणे ॥ ज्येष्ठे मासि तु
पक्षेस्मिन् या शुक्लैकादशी भवेत् ॥ निर्ज्जलं समुपोष्यात्र जलकुंभान्सशर्करान् ॥ प्रदा-

सं॰शि॰ एकादशी मुपोष्यैव द्वादशीं समुपोषयेत् ॥ न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिः

४६५ ॥ नारदीये ॥ यदा न प्राप्यते ऋक्षं द्वादश्यां श्रवणं क्वचित् ॥ एकादशी तदा पोष्या पाप

घ्नी श्रवणान्वितेति ॥ यदैकादशी श्रवणयुक्ता चेत्तदा एकादशी व्रतं श्रवण द्वादशी व्र-

तं द्वयमेव कृतम्भवति ॥ तद्देवमात्स्ये ॥ द्वादश्यां श्रवणर्क्षं चेत्स्पृशेदेकादशीं यदि ॥

स एव वैष्णवो योगो विष्णुशृंखल संज्ञकः ॥ तस्मिन्नुपोष्य विधिवन्नरः संक्षीण

कल्मषः ॥ प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्ति वर्जितामिति ॥ व्रतद्वया प्राप्तौ ॥

स्कान्दे ॥ प्रथमेऽह्नि फलाहारी निराहारी परेऽहनि ॥ उपोष्यैकादशीं मोहात्पार-

णं श्रवणे यदि ॥ करोति हंति तत्पुण्यं द्वादश द्वादशी भवमिति ॥ तदा चु द्विती-

य दिने श्रवणर्क्ष स्पर्शे तदा ऋक्षांते नापेक्षणीयः ॥ ऋक्षान्ते पारणं कुर्य्या

द्विना श्रवण रोहिणी मिति वचनात् ॥ अन्येतु ॥ आभाकाशित पक्षे पुष्ये मैत्र श्रव-

ण रेवती ॥ संगमे नहि भोक्तव्यं द्वादश द्वादशी क्षया दिति ॥ दिन द्वये तत्सत्वे- ४६६

उदये तद्युक्ता ग्राह्या ॥ उदयव्यापिनी ग्राह्या श्रवणद्वादशी व्रतेति हरदत्तादीवात् ॥
श्रवणयोगे तु दशमीविद्धापि ग्राह्या त्रिपुराणात् ॥ एतावांस्तु विशेषः ॥ श्रवणद्वा-
दश्यां वामनावतारः ॥ कृष्णपूजा श्रवणद्वादश्यां जनार्दनं पूजयेदिति ॥ अत्र जपहोमा-
दिकं कृत्वा सौवर्णीं हरिप्रतिमां संप्रतिष्ठितां दध्योदनं जलपूर्णं कुंभं उपानहौ छत्रं
च विप्राय दद्यात् ॥ इति श्रवणद्वादशी ॥ अस्यामेव इंद्रध्वजोत्थापनं कुर्यात् ॥ यदुक्तं मा-
त्स्ये ॥ द्वादश्यां च सिते पक्षे मासि भाद्रपदे तथा ॥ शक्रमुत्थापयेद्राजा विष्णुनक्षत्र-
ये सतीति ॥ अथ कार्तिककृष्णद्वादश्यां ॥ गोधूलिकाकालव्यापिन्यां गोवत्सपूजा कार्या
॥ तस्यास्तत्काल एव विधानात् ॥ दिनद्वये तत्कालव्यापित्वे पूर्वैव ॥ तदुक्तं ॥ वत्सपू-
जा वटश्चैव कर्तव्या प्रथमेऽहनि । इति वत्सद्वादशी ॥ अथ माघकृष्णद्वादशी ॥ तत्र तिलैः
स्नात्वा विष्णुमभ्यर्च्य तिलैर्दीपं दत्वा तिलतैलेन नैवेद्यं होमदानानि तिलतैलैर्नै-
व कृत्वा तिलान्भक्षयेत् ॥ तदेव मात्स्ये ॥ माघे तु कृष्णद्वादश्यां यमो हि भगवान्पुरा ।

तिलानुत्था द्यासास तपः कृत्वातु दारुणाम् ॥ राजा दशरथो भूमौ तस्मात्तानवतारयत्
॥ तिलानामाधिपत्येतु विष्णुस्तत्र कृतः सुरैः ॥ तस्यामुपोषितः स्नातस्तिलैस्तस्यां यजे
द्धरिम् ॥ तिलतैलेन दीपाश्च देया देवगृहेषु च ॥ निवेदयेत्तिलानेव होतव्याश्च तथा
तिलाः ॥ तिलान्दत्वाच विप्रेभ्यो भक्षयित्वा तिलानिति ॥ इतितिलद्वादशी ॥ माघस्थो भ-
य द्वादश्यां तैलाभ्यं गौन कार्य्यः ॥ यदुक्तं मात्स्ये ॥ उपाध्यै कादशीमाघे द्वादश्यां तैलसेव-
नात् कुरूपं प्राप्तवान्देहे पुराह्येकः पुरूरवा इति ॥ सर्वास्वपि द्वादशीषु विल्वफलं दंत-
काष्ठं च वर्जयेदित्यलम् ॥ इति द्वादशीनिर्णयः ॥ अथ त्रयोदशी निर्णीयते ॥ सातु ॥ शुक्लाभ-
योदशी पूर्वा परा कृष्णा त्रयोदशीति माधवीये ॥ एषातु प्रदोष व्यापिनी दिन द्वये व्याप्ताव-
व्याप्तौ वा पूर्वा ॥ सुमन्तुः ॥ त्रयोदशी तु कर्त्तव्या द्वादशी सहिता पुनः ॥ ब्रह्मोत्तरखंडेऽपि ॥
पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा ॥ घटिकात्रितयास्तमयात्पूर्वे स्नानं समाचरेत् ॥
अथ चैत्रशुक्लत्रयोदशी ॥ अनंगत्रयोदशी ॥ सा च पूर्वैवोपोष्या ॥ तथाच संवर्त्तः ॥ भविष्येऽपि

॥ अस्यां स्नात्वा त्रयोदश्या मध्ये कामं नगं लिखेत् ॥ सिंदूररजनीरंगैरतिप्रीतिसम-
न्वितम् ॥ कामदेवं वसंतं च वाजिचक्रं वृषध्वजम् ॥ मध्यान्हे पूजयेद्भक्त्या भक्ष्यैर्गं-
धैस्तु गंधैः ॥ मन्त्रेणानेन कौंतेय नवनाद्यैः समन्वितः ॥ मंत्रस्तु ॥ नमो रामाय कामा-
य देवदेवस्य मूर्त्तये ॥ ब्रह्मविष्णुशिवेन्द्राणां नमः क्षेमकराय वै ॥ इति ॥ ततस्त्वासु
तो देया मोदकाद्युतपाचिताः ॥ नानाप्रकारभक्ष्याश्च कामो मे प्रीयतामिति ॥ स्वप-
तिं पूजयेन्नारी वस्त्रमाल्यविभूषणैः ॥ कामोयमिति संचिंत्य प्रहृष्टेनांतरात्मना ॥
रात्रौ जागरणं कुर्यात्सुखरात्रिर्यदा भवेत् ॥ पूजयेद्विप्रदांपत्यं वस्त्रालंकारचंदनैः
॥ एवं यः कुरुते पार्थ वर्षे वर्षे महोत्सवम् ॥ वसंतसमये प्राप्ते हृष्टः पुष्टस्सदा भवेत् ॥
कौर्मे विशेषः ॥ मधौ शुक्लात्रयोदश्यां मदनं चंदनात्मकम् ॥ कृत्वा संपूज्य यत्नेन वी-
जयेद्व्यजनेन च ॥ ततः संधुक्षितः कामः पुत्रपौत्रसमृद्धिदइति ॥ अथ भाद्रशुक्लत्रयोदशी
युगादिः ॥ शुक्लचांद्रमासाभिप्रायेण ॥ अत्र मधुघृतसहितेन पायसेन श्राद्धं कुर्यात् ॥

तथाच पितृगाथा ॥ अपि नस्स कुले जायाद्यो नो दद्यात्त्रयोदशीम् ॥ पायसं मधुसर्पिर्भ्यां



वर्षासु च मघासु चेति ॥ अथ कार्तिक शुक्लत्रयोदशी ॥ तत्र यमदीपं रात्रौ बहिर्दद्यात् ॥ तथा च स्कान्दे ॥ कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे ॥ यमदीपं बहिर्दद्यादपमृत्यु-र्विनश्यति ॥ दीपदानमंत्रश्च ॥ मृत्युना पाशदंडाभ्यां कालस्या मलया सह ॥ त्रयो-दश्यां दीपदानात्सूर्यजः प्रीयतामिति ॥ अत्र इंता कानिनभ स्थैत ॥ सर्वासु त्रयोद-शीषु अनंगः पूज्यः तिथिपतित्वात् ॥ इति त्रयोदशी निर्णयः ॥ अथ चतुर्दशी निर्णीयते ॥ सा च कृष्णा पूर्वा शुक्लोत्तरा कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ॥ पूर्वविद्धैव कर्तव्या प-रविद्धा न कुत्रचिदित्यापस्तंबोक्तेः ॥ शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ॥ पूर्ववि-द्धा न कर्तव्या कर्तव्या परसंयुता ॥ इति बृहस्पतिः इति चतुर्दशी सामान्य निर्णयः अथ विशे-षः ॥ अथ चैत्र शुक्ल चतुर्दशी ॥ तस्यां कुंकुमागरुकर्पूरादिभिर्दमनकेन च शिवपूजा ॥ तदेव देवीपुराणे ॥ चतुर्दश्यां तु कर्पूरचंदनागरुकुंकुमैः ॥ वस्त्रादिमणिपूजा च कर्तव्या

महती शिव ॥ वितानध्वजचक्रं च देयं पूज्यास्तु मानरः ॥ महत्पुण्यमवाप्नोति अन्यथे-
धमाताधिकमिति ॥ अन्यत्र मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी ॥ प्रोक्ता दमनपूजे-
ति सिद्धिदा तु महोत्सवेति ॥ लिंगपुराणे विशेषः ॥ दमनस्तु त्रयोदश्यां तालहंता नले न तु
हंसयानसमारूढ कामं मंत्रप्रवर्द्धितः ॥ नारीभिर्विजितश्चैव त्रैलोक्योन्मादमाचर-
न् ॥ तन्निर्वाप्य सकामेन चतुर्दश्यां महामुने ॥ ततोऽन्यथैव मया प्रोक्ता नाथेश्वराधनरा-
स्तथा ॥ कुर्वीत कर्दमेनैव आत्मनस्त्वनुलेपनं । निर्वापितानंगपीडा भवत्येव ममाज्ञ-
या ॥ एतत्सर्वं सदा कार्यं कर्दमेन च क्रीडनम् ॥ प्रातः स्नानं च कर्तव्यं क्रीडनं नरैः ॥ प्र-
स्नात्यांगं ततः कृत्वा गंधमाल्यानुलेपनम् ॥ वस्त्रतांबूलगीतादि रथ्याहट्टेषु चाचरेत् ॥
चर्चरी घोषिते स्थैव कृत्वा नृत्यं शिवागतः ॥ सर्वकामसमृद्धस्तु वसेच्छिवपुरे नरः ॥ स्वयं
तु लिंगमेकं तु दृष्ट्वा तस्मिन् दिने नरः ॥ ज्ञानं लब्ध्वा नरः सम्यक् शिव एव न संशयः ॥ इ-
ति चैत्रचतुर्दशी ॥ अथ वैशाखशुक्लचतुर्दशी ॥ सा च प्रदोषव्यापिनी ॥ तथा च स्कान्दे ॥ वैशाखस्य-

चतुर्दश्यां सोमवारे निलर्क्षके ॥ अवतारो नृसिंहस्य प्रदोषसमये द्विजा इति ॥ अनि-
लर्क्षः स्वाती ॥ स्वातीयोगप्राधान्यं वैखवाचार्य ॥ अथ ज्येष्ठशुक्लचतुर्दशी ॥ तस्मिन्दिने पं-
चतपाः सायं शिवप्रीतये हिरण्यं धेनुं दद्यात् ॥ तदेव मात्स्ये ॥ ज्येष्ठे पंचतपाः सायं हेम-
धेनुप्रदो दिवम् ॥ यात्यष्टमी चतुर्दश्यो रुद्रव्रतमिदं स्मृतमिति ॥ अथ भाद्रशुक्लचतुर्द-
शी ॥ तस्यामनंतव्रतं सा चोदयव्यापिनी ग्राह्या ॥ स्कान्दे मुहूर्तमपि चेद्भाद्रे पौर्णमास्यां
चतुर्दशी ॥ तां संपूर्णां विदुस्तस्यां पूजयेद्विष्णुमव्ययम् ॥ मुहूर्तमपि त्रिमुहूर्तपरं-
सापरम् ॥ तेन त्रिमुहूर्तः मुख्यः कल्पः द्विमुहूर्तानुकल्प इति माधवः ॥ अत्र विधिः ॥ पक्वाम-
स्यं घृते नैव गोधूमान्नं प्रयत्नतः ॥ अर्द्धं विप्राय दातव्यमर्द्धमात्मनि भोजयेदिति ॥ च-
तुर्दशग्रंथियुक्तसूत्रं वामे स्त्री दक्षिणे पुमान् ॥ करे धार्यं इति । अनंतप्रतिमां चन्दनादि-
ना सर्पमूर्तिरूपेण पूजयेत् ॥ इदं व्रतं काम्यमकालश्रवणात् ॥ निर्णयभास्करेऽपि ॥ अनंत-
रूपेण बिभर्षि पृथ्वीमनंतलक्ष्मीवरदोऽसि तुष्टः ॥ अनंत लोकान्प्रददासि लोके भोऽनं-

तद्रूपिन् कुरुमे प्रसादम् ॥ इत्यनंतपूजा मंत्रः ॥ अनंत संसार महा समुद्रे मग्नान्समभ्युद्धर



वासुदेव ॥ अनंत रूपे विनियोजयस्व अनंत सूत्राय नमोनमस्ते ॥ इति नैवेद्यादि दान मंत्रः

अनंत कामदं देवं सर्व काम फल प्रदम् ॥ अनंत धर्म्म मयं डोरं पुत्रपौत्र विवर्द्धनम् ॥ वघ्ना-

मीति प्रोक्तः ॥ अनेन चतुर्दश ग्रंथिमयं डोरकं वध्नीयात् ॥ इत्यनंत चतुर्दशी ॥ अथ कार्त्तिक

कृष्ण चतुर्दशी ॥ यमश्चतुर्दशी सैवे नरकेति ॥ ब्राह्म मुहूर्त प्रातः काल व्यापिनी ग्राह्या ॥ अ-

त्रोषस्यभ्यंग स्नानं च कृत्वा ॥ धर्म्मराज तर्प्पणं माष पत्राशनं सैव प्रतिमा पूजनं दीपदा-

नादिकं कुर्य्यात् ॥ तदेव भविष्ये ॥ कार्त्तिके कृष्णपक्षे तु चतुर्दश्या मिनोदये ॥ अवश्यमेव क-

र्त्तव्यं स्नानं नरक भीरुभिरिति ॥ इनोऽत्र चंद्रः ॥ यदि पूर्वेन्हि पंच घटिका त्रयोदशी दर्शः

पंच पंचात् ॥ एवं संभवे त्रयोदशी मध्येऽरुणोदये स्नायात् ॥ ततोऽन्यत्र स्नाननिषे-

धात् ॥ तथाच यमः ॥ अरुणोदयेऽन्यत्र रक्तायां स्नाति यो नरः ॥ तस्याब्दिक भवो धर्म्मो न-

श्यत्येव न संशयः ॥ अत्र प र्वणीति लतैल स्नानम् ॥ तदेव भविष्ये ॥ आश्विने कृष्णपक्षे तु च-

तुर्द्दश्यां विधूदये ॥ तैल तैलेन कर्तव्यं स्नानं नरकभीरुभिरिति ॥ आश्विन शब्दोऽत्र चंद्रमा-
सपरः ॥ ब्रह्मपुराणे ॥ तैले लक्ष्मी जले गंगा दीपमालाश्चतुर्दशी ॥ प्रातःस्नानं तु यः कुर्या-
द्यमलोकं न पश्यति ॥ प्रातश्च तु घटिका ऽरुणोदय काल इति ॥ संवत्सर प्रदीपे ॥ पाद्मे ॥ अ-
पामार्गमथो तुंबी प्रपुन्नाटमथापरम् ॥ भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ॥
अपामार्गस्य पल्लवान्भ्रामयेच्छिरसोपरि ॥ ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः
॥ अपामार्गभ्रामणमंत्रस्तु ॥ सीतालोष्ठसमायुक्त सकंटक दलान्वित ॥ हर पापमपामार्ग
भ्राम्यमाणः पुनः पुनः ॥ इति यमतर्पणं तु सव्येन कार्यं ॥ यतस्तस्य देवत्वं पितृत्वं च ॥
स्कान्दे ॥ दक्षिणाभिमुखो भूत्वा तिलैः सव्यं समाहितः ॥ देवतीर्थेन देवत्वात्तिलैः प्रेता-
धिपो यतः ॥ यमाय धर्मराजायेति चतुर्दशनामभिस्तर्पणं विधेयम् ॥ ततः प्रदीपसम-
र्पणं प्रदोषे तन्नोक्तम् ॥ ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च ॥ प्राकारोद्या-
नवापीषु प्रतोलीनिष्कुटेषु च ॥ मंदुरासु विविक्तासु हस्तिशालासु चैव हि ॥ लैङ्गे ॥

ततः प्रेत चतुर्द्दश्यां भोजयित्वा द्विजोत्तमान् ॥ शैवान् विप्रांस्त्वथपरान् शिवलोके-
महीयते ॥ दानं दत्वा तु तेभ्यश्च यमलोकं न गच्छति ॥ माषपत्रस्य शाकन्तु भुक्त्वा-
तत्र दिने नरः ॥ प्रेता चतुर्द्दशी काले सर्वपापैः प्रमुच्यते ॥ नक्तं प्रेत चतुर्द्दश्यां यः कुर्याच्छि-
वप्रीतये ॥ न तत्क्रतुशतेनापि प्राप्यते पुण्यमीदृशम् ॥ कुमारीर्वेदुकान्पूज्य तथा शैवां-
स्तपोधनान् ॥ राजसूय फलं तेन प्राप्यते नात्र संशयः ॥ इति ॥ कार्त्तिक शुक्ल चतुर्द्दश्यां ब्राह्मे-
मुहूर्त्ते विश्वेश्वरयात्रा ॥ सैव पाषाण चतुर्द्दशी ॥ देवीपुराणे ॥ कार्त्तिके शुक्लपक्षे तु या पाषाण चतु-
र्द्दशी ॥ तस्यामाराधयन् गौरीं नक्तं पाषाणभक्षकः ॥ ऐश्वर्य्य सौख्य सौभाग्य रूपा-
णि प्राप्नुयान्नरः ॥ इति ॥ मार्ग शुक्ल चतुर्द्दश्यां पिशाचमोचन यात्रा ॥ अथ माघ कृष्ण चतुर्द्दशी
नरटं त्याख्या ॥ तत्रानुदिते स्नात्वा यमं संपूज्य सप्तभिर्न्नामभिस्सप्तति तोदकां जलिं द-
त्वा तिल होमं च कृत्वा पितृभ्यः श्राद्धं च कृत्वा ब्राह्मणेभ्यः कृशर भोजनं च दत्वा स्व-
यमपि कृशर भोजनं कृत्वा सर्वपापैः प्रमुच्यते ॥ ब्राह्मांडे ॥ माघ कृष्ण चतुर्द्दश्यां विलोदे

वान्मरीचयः ॥ निष्क्रे हस्तिलकाकारा प्रख्यात शोऽस्यस हस्तः ॥ अनर्कोऽभ्युदिते काले स-
न्सुनारां भुंक्ते ह्यपि ॥ तस्माच्च तत्र संपूज्योयमः सत्यय भास्करः ॥ निर्मितं पंच नारैयं तत्र प्रो-
क्तं यतो भुवि ॥ तदासाधि निशा ज्ञेया तारा रात्रिस्सुदारुणा ॥ तन्नो पौष्य त्रयोदश्यां सं
प्राप्ते तु निशा क्षये ॥ स्नात्वा पूज्यो जगन्नाथो हरिः पूज्या च तारकाः ॥ नैवेद्यैर्विविधा-
कारैः कृशरेण तु भूरिणा ॥ वह्निः पूज्यश्च भगवान्स्रुताकैस्तिलतन्दुलैः ॥ नमः प्रण-
व संयुक्तान्सतिलांश्च जलाञ्जलिम् ॥ यमाय धर्म्मराजाय मृत्यवे चांतकाय च
॥ वैवस्वताय कालाय सर्वप्राणहराय च ॥ सप्त सप्त प्रदेयानि पृथक् तेषां तिलोदकम् ॥
कृशरं भोजनीयाश्च ब्राह्मणास्तदनंतरम् ॥ श्राद्धं दत्वा पितृभ्यश्च मुक्तस्स्यात्सर्वपात
कैः ॥ ततो विभज्य बंधुभ्यः कृशरं भक्षयेत्स्वयमपीत्यरटंतीचतुर्दशी ॥ अथ शिवरात्रिर्नि-
र्णीयते ॥ फाल्गुनकृष्णचतुर्दशी शिवरात्रिस्सा निशीथव्यापिनी ॥ ईशानसंहितायाम् ॥
तपस्ये कृष्णभूतायां शिवरात्रिः प्रकीर्त्तिता ॥ महानिशान्वितायां तु तत्र कुर्य्यादिदं व्रत ।

मिति ॥ दिनद्वये निशीथव्याप्तौ तु पूर्वा ॥ कृष्णपक्षेऽष्टमी चैवेत्यापस्तंबोक्तेः ॥ अथ पर-
विधायकानि वाक्यानि ॥ स्कान्दे ॥ चतुर्दशी च दर्शश्च एकीभूय यदा भवेत् ॥ तदोपवा-
सं कुर्वीत न च काम मृते ह्यनि ॥ अपरञ्च ॥ माघासिते भूतदिनं हि राजन् उपैति योगं यदि पं-
चदश्याः ॥ जयाप्रयुक्तां नहि जातु कुर्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥ अत्र पूर्व वि-
द्धा प्रति पादके वाक्ये ॥ पूर्वविद्धायामर्द्धरात्रियुतायां चतुर्दश्यामुपवासः ॥ परविद्धायामर्द्ध
रात्रिव्यापिन्यां चतुर्दश्यां उपवासः ॥ उभयत्रार्द्धरात्रिव्यापिन्यां परविद्धायामेवोपवास
इति सिद्धान्तः ॥ यत्तु प्रदोषव्यापिनी ग्राह्या शिवरात्रिः शिवप्रिये ॥ रात्रौ जागरणं यस्मात्त-
स्मात्तस्यामुपोषणम् ॥ इदं वचनमर्द्धरात्रचतुर्दश्यभावे वेदितव्यम् ॥ यदुक्तं ॥ यदा नस्या-
च्छिवरात्रिरर्द्धरात्र्यां तदानघ ॥ प्रदोषव्यापिनी ग्राह्या तदा शिवतमा तिथिः ॥ अन्यानि
प्रदोषव्यापिनी विधायिकानि वाक्यानि ॥ अर्द्धरात्राभावे वेदितव्यानि ॥ माधवमतेऽपि ॥ प्र-
दोषव्यापित्वे सति अर्द्धरात्रव्यापिनी सोत्तमा ॥ अर्द्धरात्रव्यापिनी मध्यमा प्रदोषव्यापि-

नीन्यूनेति सिद्धांतः ॥ अत्रपारणाविषये ॥ तिथिमध्ये पारणं श्रेष्ठतरम् ॥ तिथ्यंते पारणं कु
र्य्यादिनाशिव चतुर्द्दशी मिति स्कान्दोक्तेः ॥ साच शिवोपासकानां नित्या ॥ परात्परतरं ना-
स्ति शिवरात्रिः परात्परम् ॥ नपूजयति भक्त्येदं रुद्रं त्रिभुवनेश्वरम् ॥ जन्तुर्जन्म सहस्रेषु-
जायते नात्र संशयः ॥ शिवभक्तानां नित्यम् काम्यं त्वन्येषां ॥ शिवरात्रि व्रतं नाम सर्वपाप
प्रणाशनम् ॥ आचांडाल मनुष्याणां भक्ति मुक्ति प्रदायकम् ॥ अत्रवाक्यानि ग्रंथ भूयस्त्वा
न्नलिखितानि ॥ इति चतुर्द्दशी निर्णयः ॥ अथ पूर्णिमा निर्णीयते ॥ सावट सावित्री व्यतिरिक्त व्र-
तादिषु परान्वितैव कार्य्या ॥ भूत विद्धा नकर्त्तव्या दर्शः पूर्णा कदाचन ॥ वर्जयित्वा मुनिश्रेष्ठ
सावित्री व्रत मुत्तमम् ॥ इति ब्रह्मवैवर्त्ते सावित्री व्रतं भाद्रपद पूर्णिमायाम् ॥ अथ चैत्र पौर्णमासी
॥ तत्र चित्रायुक्तायां चित्रवस्त्रं दद्यात् ॥ तदुक्तं विष्णुस्मृतौ ॥ चैत्री चित्रायुता चेत्स्यान्महापुण्य-
तमा स्मृता ॥ चित्र वस्त्र प्रदानेन सौभाग्य मवाप्नुयान्नरः ॥ ब्रह्मपुराणे विशेषः ॥ मंदे वार्के गुरौ
वापि वारेष्वेतेषु चैत्रकी ॥ तत्राश्वमेधिकं पुण्यं स्नानेनलभतेनरः ॥ दानमक्षयतां याति

पितॄणां तर्प्पणं तथा ॥ अत्र दमनकेन सर्वान्देवानर्च्चयेत् ॥ संवत्सर कृत पूजायाः फलं प्रा-
प्नोति ॥ तत्रैव वायुपुराणे ॥ संवत्सर कृता र्च्चायाः सा फल्या या रिवलान्सुरान् दमनेनार्च्चये च्चै-
त्र्यां विशेषेण सदा शिव मिति ॥ अथ वैशाख पूर्णिमा तत्रा जिन दानं कुर्य्यात् ॥ यदाह विष्णुः
॥ कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्प्पिषी ॥ ददाति यस्तु विप्राय सर्वन्तरति दुःष्कृ-
तम् ॥ वैशाख्यां पौर्णमास्यान्तु विशाखासु विशेषतः ॥ ससमुद्र गृहा नेन सशैल वन
कानना ॥ सप्त द्वीपान्विता दत्ता पृथिवी नात्र संशयः ॥ अथ ज्येष्ठ पूर्णिमा ॥ तत्र छत्रोपा-
नद्दानं तिल दानं च ॥ यदाह विष्णुः ॥ ज्येष्ठी ज्येष्ठा यदा चेत्स्यात्तदा छत्रोपानद्दानेन
नरो नराधिपत्य माप्नोति ॥ आदित्य पुराणे ॥ ज्येष्ठे मासि तिलान्दद्यात्पौर्णमास्यां विशे-
षतः ॥ अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशय इति ॥ अथाषाढी पूर्णा ॥ तत्र चतुर्द-
श्यामुपोष्य विष्णु पूजनम् ॥ यदुक्तं ब्राह्मे ॥ चतुर्दश्यामुपोष्याथ पौर्णमास्यां यजेद्धरिमि-
ति ॥ अस्यामेवाषाढ युतायां अन्नादि दान मक्षयम् ॥ यदाह विष्णुः ॥ आषाढ्यामाषाढ

युतायामन्नपानादि दानमक्षयं भवति ॥ यदा चतुर्दश्यष्टादश नाडिकाधिका भवति·
तत्र सावित्री व्रतमपि त्याज्यम् ॥ भूतोऽष्टादश नाडीभिर्दूषयत्युत्तरां तिथिमिति ॥
स्मृतेः ॥ अत्र श्राद्धं नित्यम् ॥ पितामहः ॥ अमावास्या व्यतीपात पौर्णमास्यष्टका सु-
च ॥ अत्र श्राद्धमकुर्वाणो नरकं प्रतिपद्यते ॥ आषाढी तु कोकिला व्रतोपक्रमे संध्या
कालव्यापिनी ॥ भविष्ये आषाढ पौर्णमास्यांतु सायं काले ह्युपस्थिते ॥ संकल्पये-
न्मासमेकं श्रावणे प्रात्यहं त्विदं ॥ व्यास पूजायां चोदयिकी त्रिमुहूर्त्ता ॥ विश्वेश्वर पद्ध-
तौ ॥ त्रिमुहूर्त्ताधिकं ग्राह्यं पर्व क्षौर प्रणपिनो रिति ॥ अत्र नगराद्बहिः प्रदोष समये ॥
दीर्घवंशे ध्वजा बंधनं कृत्वा पूर्वादि वायु विचारः कर्त्तव्यः ॥ अथ श्रावणी पौर्णिमा ॥ तत्र
पौर्णमास्यां ग्रहण संक्रांति दोष रहितायां उदय काल व्यापिन्यां व्रीह्यौषधि प्रादु-
र्भावेऽपि यजुः शाखाध्यायिनः ॥ उपाकर्म कुर्युः ॥ श्रावणमासस्य श्रवण नक्षत्रे
धनिष्ठा नक्षत्रे वह्वृचाः ॥ सामवेदिनस्तु श्रावण मासस्य पंचम्यां हस्तयुतायां कु-

संधि ख्युः ॥ ओषधिप्रादुर्भाव गृहणादि दोषर हितायां च सर्वेषां तुल्यमिति ॥ तदाह याज्ञवल्क्यः

४८० ॥ अध्यायानामुपाकर्म्म श्रावण्यां श्रवणे न वा ॥ हस्ते नौषधिभावे वा पंचम्यां श्रावण-
स्य तु ॥ उपाकर्म्मविधेयकः ॥ अध्यायानामिति शाखाभिप्रायेण वचनम् ॥ गोभिलः
पर्वण्यौदयिके कुर्य्युः श्रावण्यां तैत्तिरीयकाः ॥ बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदि-
नः ॥ निगमेऽपि ॥ श्रावण्यां श्रावणी कर्म्म यथाविधि समाचरेत् ॥ उपाकर्म्म तु कर्त्तव्यं क-
र्कटस्थे दिवाकरे ॥ हस्तेन शुक्लपंचम्यां श्रावणे श्रवणे भवेदिति ॥ चतुर्दशी युक्तस्य पर्व-
णो निषेधाच्च ॥ चतुर्दश्यां समुत्पन्नावसुरौ मधुकैटभौ वेदान्खौ कुर्वतः पद्मयोनेस्तौ-
जह्रतुः श्रुतीः ॥ हत्वा तावसुरौ देवः पातालतलवासिनौ ॥ आहृत्य ताः श्रुतीस्तस्मै ददौ लो-
कगुरुः स्वयम् ॥ सम्प्राप्तवान् श्रुतीर्ब्रह्मा पर्वण्यौदयिके पुनः ॥ अतो भूतयुते तस्मिन्नो-
पाकरणमिष्यते ॥ आसुरं वर्जयेत्कालं वेदाहरणशंकयेति ॥ चतुःश्रावणी दुर्गनवमी
दूर्वा चैव हुताशनी ॥ पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनमिति ॥ एतस्य श्रावण्यां ४८०

विधीयमानं पवित्रारोपण विषयम् ॥ उपाकर्मांगभूतमास्युदपि कश्चाद् विषयं वा ॥ अत्रैते त्तिरीयकपदमन्येषामपि यजुः शाखिनामुपलक्षकम् ॥ तेषां कालांतरविधानात् ॥ व्यासः ॥ श्रावणे नतु यत्कर्म्म उत्तराषाढसंयुतम् ॥ संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥ धनिष्ठासंयुतं कुर्य्याच्छ्रावणं कर्म्म यद्भवेत् ॥ तत्कर्म्म सफलं विद्यादुपाकरण संज्ञितमिति ॥ उपाकर्म्म प्रकुर्वंति क्रमात्सामर्ग्य जुर्विदः ॥ ग्रहसंक्रांत्ययुक्तेषु हस्तश्रवणपर्वसु ॥ अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपक्रिया ॥ रुद्र शोकामय ग्रस्ता राष्ट्रे तस्मिन्द्विजातयः ॥ अथात्र कर्तव्य मुच्यते ॥ यदुक्तं वृहस्पचेतसा ॥ भवेदुपकृतिः पौर्णमास्यां पूर्वाह्ण एवतु ॥ ब्राह्मणान्भोजये त्तत्र पितृनुद्दिश्य देवताः ॥ बौधायनः ॥ गौतमादि ऋषीन्सप्त कृत्वा दर्भमयान्पुनः ॥ पूजयित्वा यथाशक्ति तर्प्पयेद्दत्तमुच्चरन् ततो देवान् पितृंश्चैव तर्प्पयेत्सरसांभसा ॥ उपाकर्म्मणि ग्रहणावेध दोषाभावः ॥ नित्यनैमित्तिके जाप्येय ज्ञहोम क्रियासु च ॥ उपाकर्म्मणि चोत्सर्गे ग्रहदोषो न विद्यते ॥ स्व-

त्यंतरे ॥ भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ॥ श्रावणी नृपतिं हंति ग्रामं दहति फाल्गुनी
॥ विप्रेभ्योऽपि भविष्ये ॥ ततोऽपरान्हसमये रक्षापोटलिकां शुभाम् ॥ कारयेदक्षतैः शस्तैः सिद्धा
र्थैर्हैमभूषितैरिति ॥ अथोत्सर्गः । याज्ञवल्क्यः ॥ पौषमासस्य रोहिण्यामष्टकायामथापि वा ॥ ज-
लांते छंदसां कुर्युरुत्सर्गं विधिवद्बहिरिति ॥ आषाढ्यामथवाष्टम्यां चतुर्दश्यामुमापतिं ॥ प-
वित्रैरर्चयेद्भक्त्या श्रावण्यां चेतरान्सुरानिति ॥ अथ भाद्रीपूर्णा ॥ तत्र सावित्रीव्रतम् ॥ तदेव भवि-
ष्ये ॥ श्रूयतां पांडवश्रेष्ठ सावित्रीव्रतमादरात् ॥ त्रयोदश्यां भाद्रपदे दंतधावनमादरात्
त्रिरात्रं नियमं कार्यं उपवासस्य भारत ॥ अशक्तो तु त्रयोदश्यां नक्तं कुर्यादतंद्रितः ॥ अ-
याचितं च वा कुर्यादुपवासेन पूर्णिमा ॥ अथाश्विन पूर्णिमा ॥ इयमेव कौमुदी ॥ अस्यामिं-
द्रं लक्ष्मीं च पूजयेत् ॥ तदेव भारते ॥ पूर्णो माश्वयुजे मासि कौमुदी परिकीर्तिता ॥ कुमुद्यां
पूजयेल्लक्ष्मीमिंद्रमैरावतस्थितम् ॥ निशि जागरणं कृत्वा परेऽन्हयुत्सवमाचरेदिति
॥ अत्र घृतपूर्णं पात्रं सुवर्णान्वितं दत्वा दीप्ताग्निर्भवति ॥ यदुक्तं विष्णुना ॥ आश्वयुज्यां मा-

म्बिनी गतेन चंद्रमसा घृत पूर्णपात्रं सुवर्णयुतं विप्राय दत्वा दीप्ताग्निर्भवति ॥ अथ का-
र्त्तिकी पौर्णिमा ॥ तत्र काम्य वृषोत्सर्गं कुर्य्यात् ॥ कार्त्तिक्यां तु वृषोत्सर्गो विवाहः पुण्य
लक्षणः ॥ कार्य्यः कुरुकुलश्रेष्ठ हरेर्नीराजनं तथा ॥ गजाश्वरथदानं च घृतधेन्वा-
दयस्तथा ॥ प्रदेयाः पुण्य कांक्षिस्तु तास्तास्तं कल्प्य देवताः स्मृति ॥ मात्स्ये ॥ कार्त्तिक्यां
तु वृषोत्सर्गं कृत्वा नक्तं समाचरेत् ॥ शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम् ॥ ब्रा-
ह्मे ॥ नीलं तु वृषभं दद्याद्यत्र वत्सतरी युतम् ॥ सुवासं संज्ञां स्मरणविदत्वा कांतार
तारणं ॥ यावंति तस्य रोमाणि शरीरे संति संख्यया ॥ तावद्युगसहस्राणि स्वर्गे व
सति तत्परः ॥ पूजयित्वा ततो विष्णुं रक्तमाल्यानुलेपनैः ॥ भोक्तव्यं गोरसं वत्स-
त्सुव्रत्यं मंडले स्थितः ॥ अत्रैव क्षीरसागरदानम् ॥ विशाखासु यदा भानुः कृत्तिकासु
च चंद्रमाः ॥ स योगः पद्मको नाम पुष्करे ऽप्यति दुर्लभः ॥ आग्नेयं च यदा ऋक्षं कार्त्ति-
क्यां भवति क्वचित् ॥ महती सा तिथिर्ज्ञेया स्नान दानेषु चोत्तमा ॥ प्रजापत्यं तथा

ऋक्षं तिथौ तस्यां नराधिप । सा महा कार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥ आग्नेयं कृ-
त्तिका याम्यं भरणी ॥ प्राजापत्यं रोहिणी ॥ यदा तु याम्यं भवति ऋक्षं तस्यां तिथौ क्व-
चित् ॥ तिथिः सापि महापुण्या मुनिभिः परिकीर्त्तिता ॥ क्षीरसागरदाने विशेषो ब्राह्मे ॥
पौर्णमास्यां तु संपूज्यो भक्त्या दामोदरः सदा ॥ ततश्चंद्रोदये पूज्यास्तापसाः कृत्ति-
का सुषट् ॥ कार्त्तिकेयस्तथा खड्गो वरुणश्च हुताशनः ॥ धान्यैस्सशूकैर्द्वारोर्ध्वी भू-
षितव्या निशागमे ॥ माल्यैर्धूपैस्तथा गंधैर्भक्ष्यै रुच्चावचैस्तथा ॥ परमान्नैर्ज्वलैश्च
कैर्वह्नि ब्राह्मण तर्पणैः ॥ एवं देवांश्च संपूज्य दीपो देयो गृहाद्बहिः ॥ दीपोपांते तथाग-
र्त्तश्च तुरस्रो मनोहरः ॥ चतुर्विंशांगुलः कार्य्यः सिक्तश्चंदन वारिणा गवां क्षीरेण संपू-
र्णः स्संमता त्यारिरक्षितः ॥ तत्र हेममयो मत्स्यो मुक्तानेत्रो मनोहरः ॥ प्रक्षेप्तव्यो
विधानेन नमोस्तु हरय पठेत् ॥ ब्राह्मणायाथ योग्याय दद्यात्तत्क्षीरसागरम् ॥ इति कार्त्ति-
की ॥ अथ मार्गशीर्षी ॥ तत्र चन्द्रार्चा ब्रह्मांडे ॥ वामनेत्रे हियद्दृष्टौ स्तस्त्वेव भुवनत्रयम् ॥ अन-

सूर्यात्मजश्चंद्रः स्नातस्तेनाभ्यषिंचयत् ॥ पौर्णमास्यां तु यस्मात्तु तस्मात्तं पूजयेत्सदा ॥
यस्मात्तुल वर्णं देव दक्षशापाद्विनिःसृतं ॥ माता स्वसा च दुहिता संपूज्याश्च कुलांगनाः
॥ कांति रूपं भवेत्स्त्रीणां पूर्णेन्दोः पूजनादिति ॥ अस्यां मृगशिरोयुक्तायां प्रस्थ परिमि-
तं चूर्णितं सुवर्णयुक्तं ॥ लवणं चंद्रोदये दद्यात् ॥ विष्णुनोक्तत्वात् ॥ अथ पौषीपूर्णा ॥ तत्र
पौष युक्तायाम लक्ष्मीनाशनं गंगास्नानादिकं कार्य्यं यथाशक्ति दानादिकं दातव्यं स्व
यमपि घृत पायसं भोक्तव्यमिति दिक् ॥ इति पौषी ॥ अथ माघी पूर्णा ॥ तत्र मघायुक्तायां ति-
लैः श्राद्धं कृत्वा तिल पात्रादि दानम् ॥ यदुक्तं भविष्ये ॥ माघ्यां मघासु च तिलैस्संतर्प्य पितृदेव
ताः ॥ तिल पात्राणि देयानि तिलास्स पललोदनम् ॥ कंबलाजिन रत्नानि मोचकौ पाप मो
चकौ ॥ उपानद्दानमन्नं च तिल दानं च शस्यते ॥ यत्र वा तत्र वा स्नानं दानं वित्तानुरूपतः ॥
पौर्णमास्यां तु यो माघे पूजयेद्द्विधिवत्स्थितम् ॥ सोऽश्वमेधमवाप्येह विष्णुलोके मही-
यते ॥ अथ फाल्गुनी पूर्णा ॥ सा पूर्वविद्धा सायान्ह व्यापिनी ग्राह्या ॥ यदुक्तम् ॥ सायान्हे होलि-

का कुर्य्यात् पूर्वाह्णे क्रीडनं गवाम् ॥ दीपं दद्यात्प्रदोषे तु धर्म्म एषः सनातनः ॥ निशागमे प्र
पूज्येत होलिका सर्वदा बुधैः ॥ न दिवा पूजयेद्ढुण्ढां पूजिता दुःखदा भवेत् तत्र भद्रायां होलि-
कां न दीपयेत् ॥ यदुक्तम् ॥ भद्रायां दीपिता होला राष्ट्रभंगं करोति हि ॥ नगरस्य च नैवेष्टा त
स्मात्तां परिवर्ज्जयेत् ॥ भद्रा प्रांते पौर्णमास्यां रात्रिशेषे मुखे ऽपि वा ॥ होलां प्रज्वाल्य
कुर्वीत पिशाचानां महोत्सवम् ॥ तथा दिनार्द्धात्परतो ऽपि स्यात्फाल्गुन्यां पूर्णिमा यदि
॥ रात्रौ भद्रावसाने तु होलिकां तत्र दीपयेदिति परदिने दिनार्द्धात्परतो ऽपि स्यात्फाल्गु-
न्यां पूर्णिमायां विद्यमानायां ॥ पूर्वविद्धायामेव रात्रौ भद्रावसाने होलिकां दीपयेदित्यर्थः
यदा पुनः परदिने पूर्णिमा सार्द्ध याम त्रय व्यापिनी प्रतिपच्च वृद्धिगामिनी तदा रात्रावेव
होलिका कार्य्या ॥ तथा च भविष्ये ॥ सार्द्धयामत्रयं वा स्याद्द्वितीयदिवसे यदा ॥ प्रतिपद्व-
र्द्धमानापि तदा सा होलिका स्मृता ॥ मनु ॥ वन्हौ वन्हिं परित्यजेदिति वन्हौ होलिका-
याम्वन्हिं परित्यजेत्प्रतिपदमित्यर्थः ॥ एतत्तु सायंकाले भद्रारहितपूर्णिमासंभवे -

त्वा॥ मतिक्रम्य प्रतिपदिन कर्त्तव्यम्॥ अन्यथा॥ भविष्योत्तरवाक्यस्य निरर्थकता स्यादि-
ति॥ अत्र चेच्चन्द्रोपरागस्तदा ग्रहणात्पूर्वकं॥ निशि निर्विष्टिपूर्णायां होलिकादीपनम्
अथ पूर्वदिने अस्तमनावधि चतुर्दशी द्वितीयदिने प्रदोषसमये ग्रस्तोदितं तदा पूर्वदि-
ने घस्यवशिष्टरात्रिचतुर्थयामे विष्टिपुच्छे होलिकाकार्या द्वितीयदिने ग्रहणानंतरं
प्रतिपत्संभवेत्॥ ग्रहणात्पूर्वं च दिवा होलाप्रज्वलननिषेधाद्विष्टिपुच्छस्य सर्वकर्मा-
र्हत्वदर्शनाच्च॥ पल्लल:॥ पृथिव्यां यानि कर्म्माणि शुभान्यप्यशुभानि च॥ तानि सर्वा-
णि सिद्ध्यंति विष्टिपुच्छे न संशयः॥ संवत्सरस्य दाहोयं कामदाहो मतांतरे॥ इति विश्व-
रूपनिबंधे॥ अत्र कृत्यम्॥ रघुंप्रति नारदवाक्यम्॥ अद्य पंचदशी शुक्ला फाल्गुनस्य नराधि-
प॥ शीतकालो विनिःक्रांतः प्रातर्ग्रीष्मो भविष्यति॥ अभीप्रदानं लोकानां दीयतां पु-
रुषोत्तम॥ यथाशु शंकिता लोका रमंति च हसंति च॥ संचयं शुष्ककाष्ठानामुपलानां
च कारयेत्॥ तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मन्त्रविस्तरैः॥ ततः किलकिलाशब्दैस्तालश-

द्रेम्भीनोरसैः ॥ तामग्निंत्रिः परिक्रम्य गायंतु च हसंतु च ॥ जल्पन्तु स्वेच्छया लोका-
निःशंका यस्य यन्मतम् ॥ तेन शब्देन सा पापा होमेन च निराकृता ॥ सर्वदुष्टापहो-
होमः सर्वरोगोपशांतिदः ॥ अस्यां निशागमे राजन्संरक्ष्याः शिशवो गृहे ॥ गोमये-
नोपलिप्ते च सचतुष्के गृहांगणे ॥ आकारयेच्छिशुप्रायान्खड्गव्यग्रकरान्नरान् ॥
ते काष्ठखड्गैः संस्पृश्य शब्दैर्हास्यकरैः शिशून् ॥ रक्षंति तेषां दातव्यं-
गुडं पक्वान्नमेव च ॥ एवं ढुंढेतिया तस्याः सदोषः प्रशमं व्रजेत् ॥ बालानां रक्षणं का-
र्यं तस्मात्तस्मिन्निशागमे ॥ इति होलिकानिर्णयः इति पौर्णमासीनिर्णयः अथामावा-
स्या निर्णीयते ॥ अमा चोपवासादिषु प्रतिपद्युतैव वटसावित्रीव्यतिरिक्तव्रतेषु ग्रा-
ह्या युग्मवाक्यात् ॥ अमावास्या तृतीयेतिसाउपोष्या परान्विता ॥ भविष्येऽपि ॥ भू-
तविद्धाप्यमावास्या न ग्राह्या मुनिपुंगवैरिति ॥ अथ ज्येष्ठामायां पूर्वविद्धायां वटसावित्रीव्र-
तं कुर्यात् ॥ तत्रायं विधिः ॥ ज्येष्ठकृष्णत्रयोदशीमारभ्य त्रिरात्रोपोषणम् ॥ अथा-

त्यातु त्रयोदश्यां नक्तं चतुर्दश्या मयाचितं ॥ अमायामुपवासं कृत्वा सुवर्णप्रतिमां द-
द्यात् ॥ स्कान्दे ॥ अमायां च तथा ज्येष्ठे वटमूले महासती ॥ त्रिरात्रोपोषिता नारी वि-
धिनानेन पूजयेत् ॥ अशक्त्या तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रियः ॥ अयाचितं चतुर्द-
श्यां अमायां समुपोषणम् ॥ गृहीत्वा वालुकां पात्रे प्रस्थमात्रं युधिष्ठिर ॥ ततो वंश-
मये पात्रे वस्त्रयुग्मेन वेष्टितम् ॥ सावित्रीप्रतिमां कृत्वा सर्वावयवशोभिनीम् ॥ सौ-
वर्णां मृण्मयीं वापि स्वस्य शक्त्या विनिर्मिताम् ॥ सा ईसत्यवता साध्वी फलनैवेद्यदी-
पकैः ॥ वटावलं वितं कृत्वा काष्ठभारं युधिष्ठिर ॥ विन्ताद्यैः सप्तधान्यैश्च बहुधा संप्रकल्पि-
तैः ॥ रजन्याः कंठसूत्रैश्च शुभैः कुंकुमकेशरैः ॥ सावित्र्याख्यानकं वापि वाचयीत द्विजो-
त्तमैः ॥ रात्रौ जागरणं कृत्वा नृत्यगीतपुरस्सरं ॥ ततः प्रभाते विधिना पूर्वोक्तेन नरोत्तम ॥
तामपि ब्राह्मणे दद्यात् स्त्रिणि पत्यसमापयेत् ॥ दानमंत्रश्च ॥ ॐ सावित्रीयं मया दत्ता सहिर-
ण्या महासती ॥ ब्राह्मणप्रीणनार्थाय ब्राह्मण प्रतिगृह्यतामिति ॥ एवं दत्वा द्विजेन्द्रा-

य सावित्रीनां युधिष्ठिर ॥ नैवेद्यादि च तत्सर्वं ब्राह्मणस्य गृहं नयेत् ॥ स्वयं दशपदं गच्छे-
त्स्ववेश्म पुनराव्रजेत् ॥ तत्र भुक्त्वा हविष्यान्नं ब्राह्मणी ब्राह्मणैः सह ॥ विसर्ज्जयेत्ततो वि-
प्रान्सावित्री प्रीयतामिति ॥ व्रतेनानेन राजेन्द्र वैधव्यं नाप्नुयात्क्वचित् ॥ इति वटसावित्री॥
अथ भाद्रमायां कुशग्रहणम् ॥ हेमाद्रौ हारीतः ॥ मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥ नभस्यो भाद्रपदः तत्क्रमः। शुचौ देशे शु-
चिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ॥ ॐकारेण तु मंत्रेण सकृदेव कुशं स्पृशेत् ॥ सकृदेव ग्रय-
मतएव ॥ दर्भोत्पाटने मंत्रः ॥ विरञ्चिना सहोत्पन्न परमेष्ठि निसर्गज ॥ नुद सर्वाणि पापानि-
मम स्वस्तिकरो भव ॥ कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः ॥ कुशाग्रे तु हरो देव-
स्त्रयो देवाः कुशे स्थिताः तद्ग्रहणं च ॥ अच्छिन्नाग्रा स्सपत्रपर्णान्स मूलान्कोमला-
न्शुभान् ॥ पितृदेवयज्ञार्थञ्च समादद्यात्कुशान्द्विजः ॥ सप्तपर्णाश्शुभा दर्भास्तिलक्षे-
त्रसमुद्भवाः ते सम स्तानि योक्तव्या दैवे पित्र्ये च कर्म्मणि ॥ जातमात्रो भवेद्दर्भः साग्रमू-

लः कुशा स्स्मृताः समूपर्गास्तु कुतप श्छिन्नाग्रास्तृणा उच्यते ॥ अच्छिन्नाग्रा अशुष्का या-
हस्ता प्रादेशमात्रकाः कुतपा इति विज्ञेयास्तैस्तु श्राद्धं समारभेत् ॥ अथ कार्त्तिकामावास्यादी-
प माला ॥ सा सुखरात्रिरित्युच्यते ॥ प्रदोषार्द्धरात्रव्यापिन्येव । तेनास्याः पूर्वविद्धात्वं प्र-
सिद्धम् ॥ उक्तं च ॥ दीपमाला न कर्त्तव्या भूतिपत्निमिश्रिता क्वचित् ॥ त्रीणि तत्र विनश्यन्ति
प्रजा गावो महीपतिरिति ॥ अस्यां नववस्त्रादिधारणं लक्ष्मीपूजां च कुर्य्यात् ॥ ब्राह्मे ॥
अमायां च तथा देवाः कार्त्तिके मासि केशवात् ॥ अभयं प्राप्य सुप्तास्तु सुखं क्षीरोदसा-
नुषु ॥ लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्ताम्बुजोदरे ॥ अतः स्वविधिवत्कार्य्या मनुष्यै-
स्सुखसुप्तिका ॥ दीपान्दत्त्वा प्रदोषे तु लक्ष्मीं पूज्य यथाविधि ॥ स्वलं कृतेन भोक्तव्यं सूते-
बालातुरान् जरान् ॥ अपराह्णे प्रकर्त्तव्यं श्राद्धं पितृपरायणैः ॥ प्रदोषसमये राजन् कर्त्त-
व्या दीपमालिका ॥ दीपवृक्षास्तथा कार्य्याश्शक्त्या देवगृहेषु च ॥ दीपदानं यथाशक्ति
विप्रमित्रसुरालये । चतुःपथे श्मशाने तु नदीपर्वतगोगृहे । दीपमालापरिक्षिप्ते प्रदो-

षे तदनंतरं प्रभु ॥ ब्राह्मणान्भोजयित्वा दीविभज्य चतुर्भुक्षितान् ॥ अलंकृतेन भोक्तव्यं
नववस्त्रोपशोभिना ॥ अत्रैव राज कौमुदी महोत्सर्वं कुर्यात् ॥ यदुक्तं ॥ ततोपरान्हसम-
ये घोषयेन्नगरे नृपः ॥ सर्वराज्यं वलं लोकान् यथेष्टं चेष्टतामिति ॥ लोकैश्चापि पुरे
पुष्य सुधाधवलितान्विते ॥ वृक्षचंदनमालाढ्ये चर्चितेच गृहे गृहे ॥ दीपयान्नरतोषु-
क्तनरनारीमनोहरे ॥ दीपमालाकुलेरम्ये विध्वस्तध्वांतसंचये ॥ प्रदोषे दोषरहिते
सस्ते दोषागमे शुभे ॥ वेश्या विलासिनी सार्थे स्वस्ति मंगलकारिणी ॥ गृहाद्गृहं व्र-
जति च पादाभ्यामेव यायिभिः ॥ ततोर्द्धरात्र समये स्वयं राजा पुरं व्रजेत् ॥ अवलोक-
यितुं रम्यं पद्भ्यामेव शनैः शनैः ॥ ततः प्रदोषसमये नारीभिर्गृहाद्लक्ष्मीर्निःकाश्य-
ते ॥ तदपि स्कांदे ॥ एवं गते निशीथे तु जने निद्रार्द्धलोचने ॥ तावन्नगरनारीभिः सूर्प-
डिंडिमवादनैः ॥ निःकाश्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहांगणात् ॥ इति कार्तिकी अमावा-
स्या ॥ अथ माघी ॥ तस्यां ब्राह्मणं सावित्री सहितं संपूज्य नवनीत धेनुं दद्यात् ॥ तदेव भ-

विध्वे ॥ अमायां चैव माघस्य पूजयित्वा पितामहम् ॥ गायत्र्या सहितं देवं वेद वेदांगभू-
षितम् ॥ नवनीतमयीं धेनुं फलैर्नानाविधैर्युताम् ॥ सहिरण्यां सवत्सां च ब्राह्मणा-
य निवेदयेत् ॥ अत्र माघ पौष योरमावास्या रविवार श्रवण व्यतीपात योगैर्युक्ता
चेद सावर्द्धोदयाख्यः ॥ कोटि ग्रहण सान्निभो योगः ॥ तथा च स्कान्दे सेतु माहात्म्ये ॥ अमा
र्क पात श्रवणैर्युक्ता चेन्माघपौषयोः ॥ अर्द्धोदय स्स विज्ञेयः कोटि सूर्य्य ग्रहैस्समः ॥
दिवैव योगस्स स्तोयं न तु रात्रौ कदाचनेति ॥ अर्द्धोदये तु संप्राप्ते सर्वं गंगाजलं समं ।
शुद्धात्मानो द्विजास्सर्वे भवेयुर्ब्रह्मसन्निभाः । यत्किंचिद्दीयते दानं तद्दानं मेरुसन्नि
भमिति ॥ अत्र दानाद्दौ विशेषः ॥ चतुःषष्टि पलं मुख्यममत्रं तत्र कारयेत् ॥ चत्वारिंश-
त्पलं चाथ पंच विंशति मेव च ॥ निधाय पायसं तत्र पद्ममष्टदलं लिखेत् ॥ पद्मस्य
कर्णिकायां तु कर्षमात्रं सुवर्णकम् ॥ तदभावे तदर्द्धं वा तदर्द्धं वापि कारयेत् ॥ कृत्वा तु तंडुलैः
शुद्धैः पद्ममष्टदलं शुभम् ॥ अमत्रं स्थापयेत्तत्र ब्रह्म विष्णु शिवात्मकमिति ॥ तेषां

प्रीतिकरार्थाय श्वेतमाल्यैस्तु शोभनैः ॥ वस्त्रादिभिरलंकृत्य ब्राह्मणाय निवेदयेत्।
दानमंत्रः ॥ सुवर्णपायसामत्रं यस्मादेतत्त्रयीमयं ॥ आवयोस्तारकं यस्मात्तद्गृहाण-
द्विजोत्तम ॥ समुद्रमेखलां पृथ्वीं सम्यग्दत्तस्य यत्फलम् ॥ तत्फलं लभते मर्त्यो दत्वा
दानं समन्त्रकम् ॥ इत्यर्द्धोदयविधिः ॥ अमावास्या तु सोमेन सप्तमी भानुना सह ॥ चतुर्थी-
भूमिपुत्रेण बुधवारेण चाष्टमी ॥ चतस्रस्तिथयस्त्वेताः सूर्यग्रहणसन्निभाः ॥ स्नानं दा-
नं तथा श्राद्धं सर्वं तत्राक्षयं भवेदिति ॥ इत्युपवासाद्यमावास्यानिर्णयः अथ श्राद्धेऽमावा
स्यानिर्णीयते ॥ सा अपरान्हव्यापिन्येव ॥ एकोद्दिष्टश्राद्धे तु अष्टमनवममुहूर्तव्यापिन्येव
ग्राह्या ॥ मात्स्ये ॥ अष्टमे नवमे यस्मान्मंदीभवति भास्करः ॥ तस्मादनंतफलदस्तत्रारं-
भो विशेषतः इति ॥ कुतुपे प्रथमे भागे एकोद्दिष्टमुपक्रमेदिति व्यासः अष्टममुहूर्ता
ख्ये कुतुपे आरंभ इति तदर्थः ॥ अत्र पार्वणे त्वेकादश मुहूर्ते ॥ अपरान्हः पितॄणामिस्मु
तेः दिनद्वयेऽपरान्हव्याप्तौ यत्राधिका तद्व्यापिनी ग्राह्या ॥ अपरान्हद्वयव्यापिन्यमावा

स्यायदा भवेत् ॥ तत्राल्पत्वमहत्वाभ्यां निर्णयः पितृकर्म्मणि ॥ शिवराघवसंवादे ॥ अमा
वास्या हि मातुस्याद पराह्नद्वये समा ॥ क्षये पूर्वा परा वृद्धौ साम्ये ऽपि च परा स्मृतेति ॥ द्वि-
नद्वये ऽप्यपराह्नव्याप्यभवे ऽपि परैव ॥ पूर्वेद्युरेवापराह्नव्याप्तौ ॥ बौधायनः ॥ घटिके का-
प्यमावास्या प्रतिपत्सु न चेत्तदा ॥ भूतविद्धैव सा ग्राह्या दैवे पैत्र्ये च कर्म्मणि ॥ प्रतिप-
दि घटिके कापि कर्म्मकाले नास्ति चेदित्यर्थः ॥ अथ मलमासे वर्ज्यादि निर्णयः ॥ तत्र-
काम्यं निषिध्यते ॥ जाबालिः ॥ नित्यनैमित्तिके कुर्य्यात्प्रयतः सन्मलिम्लुचे ॥ तिथि
नक्षत्रवारोक्तं काम्यं नैव कदाचनेति ॥ नित्यनैमित्तिकयोरपि यदनन्यगतिकं तदेव
कुर्य्यात् ॥ अनन्यगतिकं कुर्य्यान्नित्यं नैमित्तिकं तथेति स्मरणात् ॥ गृह्यपरिशिष्टे
अवषट्कारहोमाश्च पर्व चाग्रयणं तथा ॥ मलमासे तु कर्तव्यं काम्याद्दिष्टिं विवर्ज्जयेदि-
ति ॥ अवषट्कारहोमा वैश्वदेवाग्निहोत्रादयः ॥ पर्व दर्शपौर्णमासौ ॥ तत्रैव सोम-
यागादि कर्म्माणि नित्यान्यपि मलिम्लुचे ॥ अग्नीज्याग्रयणाधानचातुर्मास्यादिका

सं.शि. न्यपि ॥ महालयाष्टकाश्राद्धोपाकर्म्माद्यपिकर्म्मयत् ॥ यस्तु मासविशेषाख्य विहितंव-
४९६ र्ज्जयेन्मलेतियमः ॥ चंद्रसूर्य्यग्रहेस्नानं श्राद्धं दानंजपादिकम् ॥ कार्य्याणि मलमासेतु
नित्यंनैमित्तिकं तथेतियमः ॥ गर्भेवाध्युषितेमृत्ये श्राद्धकर्म्मणिमासिके । सपिण्डी
करणे नित्यं नाधिमासं विवर्ज्जयेत् ॥ तीर्थस्नानंजपोहोमोयवव्रीहितिलादिभिः ॥
जातकर्म्मान्त्यकर्म्माणि नवश्राद्धं तथैवच ॥ मघात्रयोदशीश्राद्धं श्राद्धान्यपिचषोड
श ॥ मासिके श्राद्धे अमायाः नित्यदाने होमोऽग्नौपाशनः ॥ अन्त्यकर्म्माणि दाहोद
कपिंडदानास्थिसंचयनादीनि ॥ मरीचिः ॥ मन्वादौ च युगादौ च मासयोरुभयोर-
पीति ॥ मात्स्ये ॥ वर्षेपापहरं श्राद्धं दानंचप्रतिवत्सरम् ॥ गोभूतिलहिरण्यानां दा
नंमासे मलिम्लुचे ॥ इतिभृगुः ॥ वृद्धिश्राद्धं तथा सोममग्न्याधानं महालयम् ॥ रा-
ज्याभिषेकं काम्यंच नकुर्य्याद्भानुलंघित  इतिस्मृत्यन्तरे ॥ नभोवाथनभस्योवा-
मलमासोयदा भवेत् ॥ आषाढ्याः सप्तमः पक्षः  पितृपक्षस्तदाभवेत् ॥ हारीतः ॥ 

असंक्रांते हि कर्तव्यमाब्दिकं प्रथमं द्विजैः ॥ तथैव मासिकं श्राद्धं सपिंडीकरणं तथे-
ति ॥ भृगुः ॥ मल मास मृतानां तु यच्छ्राद्धं प्रति वत्सरम् ॥ मल मासेतु तत्कार्य्यं
नान्येषान्तु कदाचन ॥ एवं च शुद्ध मास मृतानां तु प्रथमाब्दिकं मलेऽपि कार्य्य
मिति ॥ द्वादशे मासि सर्वत्र फलंति श्राद्ध कान्तरं तु शुद्धे त्रयो दशे ॥ यदातु मध्ये म-
ल मास पात स्तदा पित्र्यो दशे मासे ॥ अतः ॥ मल मास मृतानां तु मले स्यादाब्दि
कांतरम् ॥ वृद्धमनुः ॥ अग्न्याधेयं प्रतिष्ठां च यज्ञं दानं व्रतानि च ॥ देव व्रत वृषो
त्सर्ग चूडा करण मेखलाम् ॥ मांगल्य मभिषेकं च मल मासे विवर्ज्जयेत् ॥ तथा-
वापी कूप तडागादि प्रतिष्ठा यज्ञ कर्म च ॥ न कुर्य्यात् मल मासे तु महा दान
व्रतानि च ॥ वृषो त्सर्गोऽत्र काम्यः ॥ अथ ग्रहण निर्णयः ॥ वृद्धगौतमः ॥ सूर्य्य ग्र-
हे तु नाश्नीयात् पूर्वं याम चतुष्टयम् ॥ चंद्र ग्रहे तु यामांस्त्रीन् बाल वृद्धातु
रै र्विना ॥ वशिष्ठः ॥ ग्रस्तो दये विधोः पूर्वं नाह र्भोजन माचरेत् ॥ मनुः ॥ 

ग्रस्ता वेवा स्त मानं तु रवीन्दू प्राप्नु तो यदि ॥ परेष्यु रुद्दये स्नात्वा शुद्धो ऽभ्य वह-
रेन्नरः ॥ अत्र भोजने प्राय श्चित्त मुक्तम् ॥ कात्यायनेन ॥ चन्द्र सूर्य्य ग्रहे
भुक्का प्राजा पत्येन शुध्यति ॥ तस्मि न्नेव दिने भुक्का त्रि रात्रे णैव शुध्यति ॥
भारते ॥ सर्व स्वे नैव कर्त्तव्यं श्राद्धं वै राहु दर्शने ॥ अकु र्वाणस्तु ना स्तित स्या-
त्पंके गौरि वसी दतीति ॥ साता तपः ॥ आपद्यन ग्नौ तीर्थे च ग्रहणे चंद्रसूर्य्य-
योः ॥ आम श्राद्धं द्विजः कुर्य्या च्छूद्रः कुर्य्या त्सदै वहि ॥ इद्द वशिष्ठः ॥
सूत के मृत के चैव न दोषो राहु दर्शने ॥ ताव देव भवे च्छुद्धि र्याव न्मुक्ति
र्न्न दृश्यते ॥ इति षट्त्रिंशन्मते ॥ सर्वेषा मेव वर्णानां सूत कं राहु दर्शने ॥
स्नात्वा कर्म्माणि कुर्वीत सृत मन्नं विसर्ज्जये दिति ॥ मेधा तिथिः ॥ आर नी
लं पय स्तक्रं दधि स्नेहा ज्य पाचितम् ॥ मणि कस्थो दकं चैव न दुष्ये द्राहु
सूत के ॥ मन्वर्थ मुक्ता वल्याम् ॥ अन्नं पक्व मिह त्याज्यं स्नानं स वसनं ग्रहे

॥ वारि तत्कार नाला दितिलं दर्भा न दुष्यति ॥ गृहीयितं जलं पीत्वा पाद कृ-
च्छ्रं समा चरेत् ॥ योग विशेषो गृहणे ध्यासः ॥ रवि गृहः सूर्य्य वारे सोमे सोम-
गृह स्तथा ॥ चूडा मणि रिति ख्यात स्तत्र दत्त मनं तकम् ॥ वारेष्व न्येषु यस्तु
एयं गृहणे चन्द्र सूर्य्ययोः ॥ तत्पुण्यं कोटि गुणितं योगे चूडा मणौ स्मृतः
॥ द्विवेदि कुल संभूत सरयू दत्त संगृहे ॥ शिरो मणौ समाप्तैया प्रमेयं तत्व
संज्ञ का ॥ दुर्गा नंद पद द्वन्द्व ध्याना वस्थित चेतसा ॥ तनि तोयं हि सत्त्री-
त्यै संगृहाख्य शिरो मणिः ॥ भूरा माद्धः शिरो वर्ये वैक्र मीये शुभे शुचौ ॥
समाप्तोयं सदा भूया हृ दुष्यां प्रीति दः शुभः ॥ यावद्भू मण्डले सन्ध्या वैदि-
कं कर्म सज्जनाः ॥ ता वत्स्वस्ति युतो भूया त्संगृहाख्य शिरो मणिः
इति श्री मद्द्वि वेदि कुल संभव सरयू दत्तविर चिते ॥ संग्रह शिरो मणौ
नाम्नि ग्रंथे तिथि निर्णय कथनं नाम चतु विंशति तमा प्रभा समाप्ता समा-

सं.शि
५००

थोऽयं संग्रह शिरो मणिनाम ग्रंथः ॥ सम्वत् १९३१ माघ मासे कृष्ण पक्षे सप्तम्यां रवि वासरे समाप्तः ॥ शुभ मस्तु ॥ लिखित मिदं पुस्तकं वैजनाथेन द्वि वेदिना ॥